श्रीः

# नागानन्दम्

## महाकविश्रीहर्षदेवप्रणीतं नाटकम् ।



लवपुरीयसनातनधर्ममहाविद्यालयसंस्कृतविभागप्रधानाध्यापक-
विद्याभास्कर-ऋषिकुलस्नातक-श्रीपरमेश्वरानन्दशर्मशास्त्रिणा
विरचितया प्राज्ञविनोदिनीसमाख्यया व्याख्यया
सुललितहिन्दीभाषानुवादेन च समलङ्कृतम्



प्रकाशक

मेहरचन्द्र लक्ष्मणदास

संस्कृत हिन्दी पुस्तक विक्रेता

सैदमिट्ठा बाज़ार, लाहौर

बढ़िया संस्करण १) ] प्रथमावृत्ति वि स १९९३ [ सुलभ संस्करण ।।।)

# भूमिका

काव्यं नाम द्विधा दृश्यं श्रव्यं च । तत्र दृश्यमभिनयप्रधानम् । तद् नाट्यं रूपकं चेत्यपि व्यपदिश्यते । अवस्थानुकृतिरेव नाट्यमभिनयो वोच्यते । एवं रूपणमप्यभिनयेन वस्तुव्यञ्जनम् । तथा च यत्प्रतिपाद्यं वस्तु नटा नायकाद्यवस्थानुकारेण अभिनीय सामाजिकानानन्दयन्ति, तदेव दृश्यकाव्यं नाम 'अभिज्ञानशाकुन्तलादि' । तदुक्तम्—

'अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते ।
रूपकं तत्समावेशाद् दशधैव रसाश्रयम् ॥
रूप्यतेऽभिनयैर्यत्र वस्तु तद् रूपकं विदुः ॥'

अभिनयनिरपेक्षं श्रवणेनैव सहृदयानन्दवर्धनं तु काव्यं श्रव्यमित्यभिधीयते । तयोर्मध्ये दृश्यमधिकमावर्जकं सहृदयानाम् । इदं हि श्रवणेन दर्शनेनोभयथाप्यास्वाद्यमानं सचेतसां चेतांसि रसनिमग्नानि वितनोति । अतएवोच्यतेऽपि—'काव्येषु नाटकं रम्यम्' इति ।

अत्र नाटकपदं दृश्यकाव्योपलक्षकम् । अभिनयापरपर्यायस्य नटनस्य सकलदृश्यसाधारणत्वात् । तदेतद् रूपकापरपर्यायं दृश्यकाव्यं दशधा भिद्यते । तदुक्तं दर्पणे—

'नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥'

तेषु प्रस्तुतमिदं नागानन्दं नाम रूपकं 'नाटक'मस्ति । 'नाटकस्य' प्रतिपाद्यं वस्तु पुराणेतिहासादिप्रसिद्धं भवति, न प्रकरणादिवत् कविकल्पितम् । तदुक्तं दर्पणे—

'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
सुखदुःखसमुद्भूतिनानारसनिरन्तरम् ॥
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ।
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ॥
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ।
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ॥' इति ।

अस्यापि वृत्तं न कविकल्पितम् । अत्र हि कविना—वृद्धपितृपरिचरणपरायणेन परमकारुणिकेन विद्याधरसूनुना जीमूतवाहनेन गरुत्मते स्वकलेवरं

समर्थ्य तत्रासितानां नागानां कथमुद्धारः कृत इति पञ्चभिरङ्कैर्वर्णितम्। तदेतद् वृत्तं भूतभाषोपनिबद्धश्रीमद्गुणाढ्यकविविरचितबृहत्कथासमाश्रयमस्ति। यद्यप्येषा 'बृहत्कथा' नेदानीमुपलभ्यते। तथापि—

'भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्'। ( दण्डी )

'समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा॥' ( बाणः )

इत्येवं दण्डिबाणाद्यनेकैर्महाकविभिः स्वस्वग्रन्थेषु सबहुमानं चर्चितत्वादस्याः कादाचित्कं सत्त्वमपह्नोतुं न शक्यम्। महाकविकीर्तनाद् बृहत्कथायाः कादाचित्के सत्त्वेऽभ्युपगम्यमानेऽपि नागानन्दीयवस्तुनस्तन्मूलत्वं त्वप्रमाणमिति तु न चोदनीयम्, बृहत्कथार्थप्रतिपादनपराणां क्षेमेन्द्रविरचितबृहत्कथामञ्जरी सोमेश्वरोद्भावितकथासरित्सागर बुधस्वामिविनिर्मितबृहत्कथाश्लोकसंग्रहरूपाणां ग्रन्थानामद्याप्युपलम्भात्, तेषु च मञ्जरीसागरयोर्जीमूतवाहनवृत्तान्तस्य सविस्तरं विद्यमानत्वात्। बृहत्कथाश्लोकसंग्रहेऽपि स वृत्तान्तोऽवश्यमद्रक्ष्यत, यदि स पूर्णोऽलप्स्यत। तस्य तु कियानेवांशोऽद्य यावदुपलब्धः। किं चैषा गुणाढ्यकविबृहत्कथा न खलु नासीद् नागानन्दकर्तुः सुविदिता, अन्यथा न स तन्मूलकथोपजीवि रूपकं निर्मातुमशक्ष्यत्। नागानन्दस्य कथासरित्सागरादिमूलत्वं तु न शङ्कनीयम्, तत्कर्त्रपेक्षया नागानन्दकर्तुः प्राचीनत्वात्। तत्कालश्चोपरिष्टान्निर्देक्ष्यते।

## गुणाढ्य सोमेश्वर-क्षेमेन्द्राणां समयः

एष नागतोऽर्थतश्च गुणाढ्यः कविः ख्रिष्टीयप्रथमशताब्द्यामुत्पन्नः प्रतिष्ठानपुराधीशस्य श्रीसातवाहननृपतेः सभापण्डित आसीदिति संस्कृतसाहित्येतिहासविद आहुः। सोमेश्वरक्षेमेन्द्रावपि कश्मीरदेशाभिजनौ समानकालौ ख्रिष्टस्यैकादश्यां शताब्द्यां जनिमलभेताम्। बुधस्वामिनः कालस्तु तद्ग्रन्थस्य सम्पूर्णस्यानुपलम्भेन नाद्यापि निर्णीत ऐतिहासिकैः। तथापि स सोमेश्वरक्षेमेन्द्राभ्यां प्राचीन इति नागानन्दभूमिकायां साहित्याचार्यश्रीबलदेवोपाध्यायमहोदयाः।

## नागानन्दस्य संक्षिप्ता कथा

आसीत् स्वप्रतिपक्षधूमकेतुर्जीमूतकेतुर्नाम विद्याधराणां राजा। स हि चरमे वयसि जातवैराग्यः स्वसुतं जीमूतवाहनं राज्येऽभिषिच्य राजकार्याद

निवृत्ते, सपत्नीकश्च वनं प्रति प्रतस्थे। पितृभक्तिपरायणो जीमूतवाहनस्तु वृद्धपितृशुश्रूषाविरहितस्यात्मजन्मनो वैफल्यमिव विभावयन् राज्यभारं सचिवेषु निक्षिप्य पितृशुश्रूषार्थं तदाश्रितमेव वनं शिश्रिये। एकदा तु स पितुराज्ञया आश्रमोचितं स्थानान्तरमन्वेष्टुकामः स्ववयस्येनात्रेयेण सह निकटवर्तिनि मलयाचले जगाम। तत्र तपोवनविहारान्यनुभूय स परमां निर्वृतिमापेदे। अथ स तत्रैव नातिदूरवर्तिनि गौर्यायतने भगवतीं गौरीमुपवीणयन्ती सखीसहायां नवयौवना काचन कन्यका 'नयनयोरतिथिं चकार। कान्त्या सौन्दर्येण च परस्परानुरूपयोस्तयोर्यूनोस्तत्र तारामैत्रकमजनि। सा हि कन्या सिद्धचक्रवर्तिनो विश्वावसोर्महाराजस्य तनया मित्रावसोश्च भगिनी नाम्ना मलयवती बभूव।

विश्वावसुरपि अभिजनेन गुणगणेन सौन्दर्येण च जीमूतवाहनं मलयवत्या अनुरूपं मन्वानस्तां तस्य पाणिगृहीतीं चकार।

अथैकदा समुद्रतटं दिदृक्षुर्जीमूतवाहनो मित्रावसुना साकं तत्रागच्छत्। तत्र स प्रालेयाचलशिखरश्रियं दधानान् नागानामस्थिसंचयान् दृष्ट्वा मित्रावसुं पृच्छति स्म—कथमेते संचया अस्थ्नां समजनिषत? किमेतेषामेकदैवैकत्र मृत्युरभवत्? इति। मित्रावसुस्तु—"कुमार! नैवामी नागा एकदैव मृताः। पुरा किल वैनतेयस्तरसा रसातलादुद्धृत्य भुजङ्गमाननेकाननुदिनं भुङ्क्ते। तत इत्थं सकलनागलोकविनाशशङ्किना नागराजेन वासुकिना गरुडः प्रार्थितः—'गरुत्मन्! त्वदाक्रमणत्रासात् सहस्रशः स्रवन्ति भुजङ्गमानां गर्भाः। शिशवश्च पञ्चत्वमुपयान्ति। एवं नागकुलमेवैकदा समुच्छिद्येत। तवापीत्थं हानिरेव, निरवशेषे नागवंशे किं भोक्ष्यसे? तद् यदर्थमभिपतति भवान् पातालं तमिह नागमेकैकं समुद्रतटस्थितस्य तवान्तिके प्रत्यहं प्रेषयिष्यामि। विरमास्मात् सर्पकुलध्वंसाद्, दयस्वास्मास्विम्,' इति। पक्षिराजश्च तं वासुकिप्रस्तावं स्वीचकार। एवं प्रत्यहं गरुडभोजनायैकैकश उपस्थितानां सर्पाणामस्थीनि क्रमश उपचितानि संघातरूपतां गतानि" इत्युदतरत्। इत्थं श्रुतसर्पवृत्तान्तः संजातदयोऽयं जीमूतवाहनो नितरामनुशुशोच सर्पाणां दयनीयामवस्थाम्। उवाच च—'अहो! कष्टपर्यवसानेयं विपत्तिर्नागानामापतिता। अपि नाम शक्नुयामहं स्वशरीरदानादेकस्यापि फणभृतो रक्षां कर्तुम् इति'। अथ मित्रावसुः पित्राहूतो गृहान् प्रतिनिवृत्ते। जीमूतवाहनस्तदागमैकाकी संवृत्तः।

आसीत् तस्मिन् दिने स्वमातुरेकमात्रसुतस्य शङ्खचूडनाम्न कस्यापि सर्पशिशोर्वार । तस्य वृद्धा जननी चाचिरजनिष्यमाणस्वसुतमृत्युमनुचिन्त्य नितरां शोकविह्वला उच्चैस्तरां रुरोद ।

अथ तन्मातुः साश्रूणि करुणविलपितानि सोढुमशक्नुवन् जीमूतवाहन शङ्खचूडाद् वध्यचिह्न ययाचे । शङ्खचूडस्तु 'न खलु शङ्खचूड शङ्खधवल शङ्खपालकुल मलिनीकरिष्यति' इत्युक्त्वा जीमूतवाहनाय वध्यचिह्न रक्तवस्त्र दातु न स्वीचकार 'निवृत्यतां त्वया अहमेव गरुडाहारीभूय स्वराजाज्ञा पालयिष्यामि' इति च तमुवाच । अथ शङ्खचूडो मृत्यो प्राग् नातिदूरवर्तिन भगवन्त गोकर्णेश्वर प्रदक्षिणीकर्तुकामो जननीमन्तिमप्रणामेन सभाज्य विसृज्य च निर्गत । अनान्तरे दीपप्रतिपदुत्सवे विश्वावसुपत्न्या जामात्रे उपहारीकृत रक्तवस्त्रयुगल गृहीत्वा कञ्चुकी जीमूतवाहनान्तिके समुपस्थित । स तु शङ्खचूडप्रत्याख्यानेन तद्दशा प्रति निराशोऽपि रक्तवासोयुगसनाथ कञ्चुकिन दृष्ट्वा नितरां प्रसीदन्नुवाच—

> 'वासोयुगमिद रक्त प्राप्तकाले समागतम् ।
> करोति महतीं प्रीतिं परार्थे देहमुज्झत ॥'

अथ तद्वासोयुग परिधाय वध्यशिलामध्यशेत जीमूतवाहन । पन्नगाशनोऽपि समये तत्र समुपस्थित शिलोपरि पतित त नागबुद्ध्याभिपपात । एतस्मिन् समये देवा दिवि दुन्दुभिमनीनदन्, जीमूतवाहनोपरि पारिजातपुष्पवृष्टिं चाकिरन् । अथ गरुडो रक्तांशुकवेष्टित जीमूतवाहन गृहीत्वोत्पत्य मलयशिखरमारुरोह, त तत्राभ्यवहर्तुमारेभे च ।

इतश्च समुद्रतटाद् गृह प्रति निवर्तने विलम्बमानस्य जामातुर्जीमूतवाहनस्य वृत्त जिज्ञासमानो विश्वावसु सुनन्द नाम स्वप्रतीहार जीमूतकेतोरन्तिक प्राहैषीत् । सुनन्दाज्जीमूतवाहनस्य विश्वावसोर्गृहेऽविद्यमानतां विज्ञाय चिन्तापरो बभूव जीमूतकेतु । अत्रान्तरे गरुत्मता भक्ष्यमाणस्य जीमूतवाहनस्य चूडामणिर्जीमूतकेतोश्चरणयो पपात । चूडामणिं निरीक्ष्य स्वपुत्रस्यानिष्टमाशङ्कमानो जीमूतकेतु पत्न्या स्नुषया मलयवत्या चानुगतो जीमूतवाहनमन्वेष्टु यावत् कियद्दूर गच्छति, तावत् स्वप्राणरक्षक तार्क्ष्येण भक्ष्यमाण जीमूतवाहन पश्यन्ननुशोचन्त शङ्खचूडमद्राक्षीत् । शङ्खचूडस्तु सर्वं तद्वृत्तजात तस्मै न्यवेदयत् । अथ तान् पुत्रशोकसंदिधक्षून् चितां प्रवेष्टुं कृतनिश्चयान्

विलोक्य शंखचूडो दु साहसादस्माद् विनिवर्तयितुमाह—"तात ! मास्मैवं दुःसाहसं कृथा । विचित्रा दैवगतिः । कदाचिद् 'नायं नाग' इति बुद्ध्वा परित्यजेदपि तं पन्नगाशनः । अतोऽनया रुधिरधारया वैनतेयमनुसरामः ।" जीमूतकेतुस्तु 'सामिभिरेवास्माभिरनुसर्तुमुचितमिति वयमग्निमादायानुगच्छाम', त्वं पुनः प्रतिष्ठस्व, इत्युक्त्वाग्निमानेतुं निवृत्ते ।

इतस्तु गरुड-कुलिशकर्कशाया त्वचम्चवाः कठिनैः प्रहारैरप्यव्यथमानस्य जीमूतवाहनस्य महासत्त्वता वीक्ष्य निरतिशयं विस्मीयते स्म, भक्षणाच्च विरराम । जीमूतवाहनोऽपि तमवशिष्टं स्वशरीरं भक्षयितुं पुनः पुन प्रार्थयाञ्चके । अन्नान्तरे शंखचूडोऽपि वैनतेयसविधे प्राप । स हि जीमूतवाहने गरुडस्य सर्पभ्रान्तिं दूरीचकार, तत्स्थाने चात्मानं भक्षयितुं प्रेरयामास । तदानीं गरुडस्य महान् पश्चात्तापः समजनि । तदाप्रभृति तेन न केवलं सर्पाणामेव अपितु प्राणिमात्रस्यापीडन प्रतिज्ञातम् ।

जीमूतकेतुरपि स्वपुत्रं गरुडचञ्चुक्षतैर्मृतं वीक्ष्य शङ्खचूडं चितां प्रज्वलयितुमादिदेश । अथ तेन सज्जीकृता चितामारोढुं यावत् ते उत्तिष्ठन्ति तावत् मलयवतीप्रार्थनया भगवती गौरी प्रमद्य प्रत्यक्षीबभूव । जीमूतकेतुं च चितानलप्रवेशरूपाद् दु साहसाद् वारयामास । भगवन्त्याः प्रसादाद् जीमूतवाहनः पुनरुज्जिजीव, विद्याधराणां चक्रवर्तिपदे प्रतिष्ठापितश्च । गरुडकृतसामृतवृष्ट्या च अस्थिमात्रावशेषाः सर्वेऽप्युरगा उज्जिजीवुः । नागाना कुले च महानानन्दः समजनीति शम् ।

## नागानन्दस्य नायकः

जीमूतवाहनो नाम कश्चिद् विद्याधरजीमूतकेतुसुतोऽत्र नाटके नायकः । स च प्रकृत्या धीरोदात्तः । नायकलक्षणं धीरोदात्तलक्षणं च यथा—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥
अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥

तत्र 'दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने' इत्यादिना तत्र तत्र नाटके त्यागादयो नायकसामान्यगुणा जीमूतवाहने साधु ... कविना । धीरोदात्तत्वमप्यस्य नायकस्य साधु ... श्रीहर्षेण ।

नाय जीमूतवाहन क्काप्यवसरे क्षुद्रजनवद् विकत्थते । 'तदनुकम्प्यतामसौ राज्यस्य कृते क्लेशदासीकृतस्तपस्वी' इत्यादिना स्वराज्याक्रमणेन सापराधमपि प्रतिपक्षिणं मतङ्गं क्षमत एव । प्रथमाङ्के विदूषकेण चतुर्थे मित्रावसुनोपक्षिप्तेऽपि मतङ्गस्य स्वराज्याक्रमणे नास्य काचन विकृतिरलक्ष्यतेति दुर्लक्ष्य-विकृतितया महागम्भीरोऽयम् । महासत्त्वता प्रति त्वस्य किमुच्यते । पञ्चमाङ्के गरुडोऽस्य महासत्त्वतामेव स्तौति—'जन्मन प्रभृति भुजङ्गपतीनश्नता नेदानी-मत्याश्चर्यं मया दृष्टपूर्वम्, यदय महासत्त्वो न केवल न व्यथते प्रत्युत प्रहृष्ट इव किमपि दृश्यते' इति ।

एव वृद्धयो पित्रोरनुपम वात्सल्य नवपरिणीताया प्रेयस्या मलयवत्या प्रमापि परोपकृतिपरायणस्य परार्थे देहमुज्झतोऽस्य जीमूतवाहनस्य न मात्रयाप्यन्तरायमुत्पादयत इति दृढव्रतत्वमप्यस्य निपुणमाभाति ।

प्रथमाङ्के शमप्रधानतया समुपक्षिप्तस्य जीमूतवाहनस्य धीरशान्तत्व तु न शङ्कयम् । शमस्याग्रन्थसमाप्त्यनिर्वहणाद् । अतएव दशरूपके धनिकेनास्य धीरशान्तत्वमुपक्षिप्य प्रत्याख्यातम् ।

## नागानन्देऽङ्गी रसः

'एक एव भवेदङ्गी शृङ्गारो वीर एव वा' इति नाट्यनियमानुरोधेन दयावीर एवात्र प्रधान रस । तथाहि—विपद्ग्रस्त शङ्खचूडोऽत्रालम्बनम् । 'हा पुत्रक शङ्खचूड ! कथ व्यापाद्यमानोऽद्य किल त्व मया प्रेक्षितव्य । अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारी भविष्यति पातालम्' इत्यादीनि वृद्धायास्तन्मातुर्विलपितान्युद्दीपनम् ।

> 'आर्तं कण्ठगतप्राण परित्यक्त स्वबान्धवै ।
> त्राये नैव यदि तत क शरीरस्य मे गुण ॥
> ममैतदम्बार्पय वध्यचिह्न प्राबृत्य यावद् विनतात्मजाय ।
> पुत्रस्य ते जीवितरक्षणाय स्व देहमाहारयितु ददामि ॥'

इत्यादि नायकस्योक्तयो रक्तांशुक वेष्टयित्वा गरुडम सर्पबुद्धया स्वकलेवर-भक्षणाय वध्यशिलारोहणादि चानुभाव । गरुडेन स्वभक्षणारम्भे—'दिष्ट्या कृतार्थोऽस्मि' इत्यात्मन कृतार्थत्वोक्त्यादिभिरभिव्यञ्जितो हर्षादिर्व्यभि-चारिभाव । विपन्नत्राणविषयक उत्साहश्च स्थायिभाव । एतदतिरिक्तमङ्गिन

परिपोषणाय शान्ताद्भुतशृङ्गारहास्यकरुणवात्सल्यानां तत्र तत्र यथायथं रमणीयः सन्निवेशः श्रीहर्षस्य महाकवित्वम् अद्भुतां रूपकनिर्माणचातुरीं च प्रमाणयति ।

नन्वत्र नाटके शमप्रधानतयोपक्षिप्तस्य नायकस्य शृङ्गारितया प्रतिपादनमनुचितं सद् रसभङ्गं जनयति । तदुक्तम्—

'अनौचित्याद् ऋते नान्यद् रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा ॥' इति

चेदुच्यते । शान्तशृङ्गारयोर्नैरन्तर्येणैव विरुद्धतयानुचितं भवति । नचानयोर्नैरन्तर्येण प्रतिपादनम् । अत्र हि शान्तोपन्यासानन्तरमद्भुतमुपन्यस्य शृङ्गारो वर्णितः । तदुक्तं प्रकाशकृता—'शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोधः, इति रसान्तरमन्तरे कार्यम् । यथा नागानन्दे शान्तस्य जीमूतवाहनस्य अहो गीतं हो वादित्रमित्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः ।' इति ।

## अस्य नाटकस्य कर्ता तत्कालश्च

अस्य नागानन्दस्य कर्ता श्रीहर्षो नृपतिरासीदितीयैतस्यैव प्रस्तावनया विज्ञायते । स्थाण्वीश्वरपत्तन(थानेसर)मस्य राजधानी बभूव । अयमेव शिलादित्यनाम्नाप्यैतिहासिकेषु प्रसिद्धः । अस्यैव चरितं कविवरेण बाणेन श्रीहर्षचरितनाम्नि गद्यकाव्ये गीतम् । अस्य पिता नाम्ना प्रभाकरवर्धनः, माता च यशस्वती ( यशोमती ) देवी अभूताम् । अयं त्रिषष्ट्युत्तरषट्शतीतमे (६६३) वैक्रमाब्दे राज्यसिंहासनमारुरोह । एकचत्वारिंशद्वर्षाणि राज्यं कृत्वा च चतुरुत्तरसप्तशतीतमे (७०४) वैक्रमाब्दे च यशःशेषतां जगाम । तथा च विक्रमस्य सप्तम्याः शताब्द्या उत्तरार्धम्, तदनुसारेण खिष्टस्य सप्तम्याः शताब्द्याः पूर्वार्धं ( ६०६–६४७ ) श्रीहर्षस्य काल इति पर्यवस्यति ।

नागानन्दातिरिक्तं 'प्रियदर्शिका' 'रत्नावली' इति नाटिकाद्वयमप्यनेनैव विरचितम् ।

गिरिधरशर्म्मा चतुर्वेदः
महामहोपाध्यायः, व्याकरणाचार्यः, न्यायपञ्चशास्त्री
प्रिन्सिपल महाराजासंस्कृतकालेज,

# नागानन्द संक्षिप्त कथा

## प्रथम अङ्क

विद्याधरकुमार जीमूतवाहन संसार और राजपाट के सुख से विरक्त होकर बूढ़े माता पिता की सेवा में तत्पर है। अपने पिता की आज्ञा के अनुसार वह मलयपर्वत पर तपोवन में उनके रहने योग्य आश्रमस्थान ढूँढने के लिये विदूषक को साथ लेकर जाता है। घूमते फिरते उन्हें कहीं से गाने का शब्द सुनाई देता है। उस शब्द का अनुसरण करते हुए वे गौरी के मन्दिर के समीप पहुँच जाते हैं, जिसके भीतर सिद्धों की कन्या मलयवती वीणा बजाती हुई गा रही है। एक झाड़ी की ओट में छिपकर यह लोग कुमारी मलयवती का अपनी चेटी के साथ वार्तालाप सुनते हैं, जिससे उन्हें पता चलता है कि कुमारी को स्वप्न में भगवती गौरी ने वर दिया है कि उस का विवाह शीघ्र ही किसी विद्याधर चक्रवर्ती से होगा। इतना सुनकर राजकुमार जीमूतवाहन विदूषकसहित मलयवती के सामने प्रवेश करते हैं। कुमारी उसे देखकर प्रेम से विह्वल होकर लजा जाती है। इसी समय एक तपस्वी मलयवती को उसके पिता की ओर से बुलाने आता है और उसे घर ले जाता है। कुमार जीमूतवाहन का हृदय भी मलयवती के प्रेम में बँध जाता है, और विदूषक इस घटना से प्रसन्न होता है।

## द्वितीय अङ्क

जीमूतवाहन के प्रेम से विह्वल सिद्धकन्या मलयवती चन्दनलतागृह में जाकर चन्द्रमणिशिला पर बैठ जाती है जहां उसकी विरहाग्नि को शान्त करने के लिये चेटी उसके हृदय पर चन्दन के पत्तों के रस का लेप करके केले के पत्तों से पंखा करती है। परन्तु यह शीतल उपचार बजाय सुख देने के मलयवती को उलटा अधिक दुःखदायी प्रतीत होता है। उधर जीमूतवाहन भी मलयवती के प्रेम में पागल हो मनोविनोद के लिये उसी चन्दनलतागृह का रास्ता लेता है। विदूषक भी उसके साथ है। उनके आने का शब्द सुनकर मलयवती और चेटी एक झाड़ी के पीछे छिप जाती हैं और वहां से नायक और विदूषक की बात चीत सुनती हैं।

नायक विदूषक को बतलाता है कि गत रात्रि को स्वप्न में मैंने अपनी प्रिया को इसी चन्दनलतागृह में चन्द्रमणि शिला पर बैठे देखा। वह प्रणय-कोप में मुझे उपालम्भ देती हुई रो रही थी। इसी लिये स्वप्न वाले समागम स्थान पर ही दिन व्यतीत करने आया हू ताकि दिल बहला रहे।

अपने मनोविनोद के लिये नायक अपनी प्रियतमा का चित्र उसी चन्द्र-मणिशिला पर बनाता है और उसे देख देख कर प्रसन्न होता है। इतने में सिद्धों के कुमार मित्रावसु आते हैं और नायक से अपने पिता का सन्देश सुनाते हैं। जब वह कहते हैं मेरे पिता ने कहा है कि हम अपनी कन्या मलयवती का विवाह आप से करना चाहते हैं तो जीमूतवाहन मलयवती को नाम से न जानने के कारण उसे कोई अन्य कन्या समझते हुए साफ इनकार कर देते हे और कह देते हैं कि मैं अपना हृदय किसी और को दे चुका हू। पर विदूषक मित्रावसु को सलाह देता है कि वह नायक के माता पिता के पास जाकर उनके सामने यह प्रस्ताव रक्खे, यदि वे मान गए तो कुमार उनकी आज्ञा न टाल सकेगा।

इधर मलयवती यह बातें सुनकर अपनी अवज्ञा को सहन न करती हुई अशोक वृक्ष से लटक कर फासी लेने लगती है। चेटी दुहाई मचा देती है, जिसको सुनकर नायक झट दौड़ा हुआ आता है और मलयवती को हाथ से थाम कर चन्दनलतागृह में ले जाता है। वहा जाकर अपना ही चित्र शिला पर देख कर मलयवती के चित्त को शान्ति होती है। परस्पर प्रेम के विकास होने से वहीं उनका गान्धर्वविवाह हो जाता है। इतने में एक और चेटी दौड़ी हुई आती है और कहती है कि कुमार के माता पिता ने सम्बन्ध स्वीकार कर लिया है और आज ही विवाह कर देने का निश्चय कर लिया है। मलयवती, जीमूतवाहन और विदूषक सभी स्नानादि के लिये चले जाते हैं।

## तृतीय अङ्क

नायक और नायिका के विवाह उत्सव पर सभी लोग रग-रलिया मनाते हैं। शेखरक नामी विट मद्य पिये हुए चेट के साथ कुसुमाकर उद्यान में अपनी प्रिया नवमालिका को ढूंढने जाता है। उधर से विदूषक अपने आप को भ्रमरों से बचाने के लिये साडी लपेटे हुए आता है। विट उसे नवमालिका समझ कर आलिङ्गन करना चाहता है। बड़ी हँसी उड़ती है।

किसी न किसी प्रकार इन लोगों से जान छुड़ाकर विदूषक स्नान करता है। उसी समय सामने से नायक और नायिका प्रवेश करते हैं। नायक मलयवती के सौन्दर्य की प्रशंसा करता है और उसके लज्जायुक्त हाव भाव से प्रसन्न होता है। मलयवती की चेटी हँसी-ठट्ठे में विदूषक का मुँह तमाल के पत्तों के रस से काला कर देती है। इतने में मलयवती के भाई मित्रावसु के आने की सूचना मिलती है, जिसे सुनकर मलयवती और चेटी चली जाती हैं। मित्रावसु आकर जीमूतवाहन को सूचना देता है कि उसके राज्य पर आक्रमण करके उसके शत्रु मतङ्ग ने अधिकार जमा लिया है।

जीमूतवाहन इस समाचार को सुनकर बजाए दुःखी होने के प्रसन्न होता है। मित्रावसु शत्रु को नाश कर देने की आज्ञा मांगता है पर जीमूतवाहन उसे मना करता है और शान्त रहने का उपदेश देता है।

## चतुर्थ अङ्क

जीमूतवाहन और मित्रावसु समुद्र के किनारे सैर करने जाते हैं। वहां जाकर जीमूतवाहन हड्डियों के ढेरों के ढेर पड़े देखकर पूछता है कि यह कैसे ढेर हैं? मित्रावसु बतलाता है कि कैसे नागों के राजा वासुकि ने गरुड़ के खाने के निमित्त एक नाग (साँप) रोज भेजने का नियम किया हुआ है। और अनेक वर्षों से गरुड़ ने इस प्रकार नागों को खा खा कर हड्डियों के ढेर लगा दिये हैं। यह सुनकर नायक बहुत दुःखी होता है। इतने में घर से अपने पिता का बुलावा आ जाने पर मित्रावसु घर चला जाता है और नायक समुद्रतट पर घूमने के लिये पहाड़ी से उतरता है। इतने में उसे रोने चिल्लाने का शब्द सुनाई देता है। खोजने पर पता चलता है कि उस दिन शंखचूड़ नामी नाग की बारी है। उसे वासुकि ने आहारार्थ वध्यशिला पर भेजा है, जहां से गरुड़ सदा अपने भोजन के लिये नियत नाग को उठा ले जाया करता है। शंखचूड़ की मां विलाप कर रही है। जीमूतवाहन शंखचूड़ की जान बचाने के लिये स्वयं अपने आप को भेंट करता है पर शंखचूड़ नहीं मानता। लेकिन जब शंखचूड़ मरने से पहले देवपूजा के लिये जाता है तो उसके पीछे नायक वध्यशिला पर चढ़ जाता है। इतने में गरुड़ झपट कर आता है और वहां से उसे उठा ले जाता है। आकाश से पुष्पवृष्टि और दुन्दुभि ध्वनि होती है।

श्रीः



# नागानन्दम्

## प्रथमोऽङ्कः ।

नान्दी ।

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्राताऽपि नो रक्षसि ।

---

## प्राज्ञविनोदिनी ।

यत्पादाब्जरजःस्पर्शपरिपूतधियां सताम् ।
वागर्थावुपतिष्ठेते सरसौ तां श्रयेऽम्बिकाम् ॥१॥
विघ्नेशं वरदं नत्वा ध्यात्वा हृदि गुरूनपि ।
करोमि नागानन्देऽस्मिन् व्याख्यां प्राज्ञविनोदिनीम् ॥२॥
कविवाचः क्व गम्भीराः क्वातलस्पर्शिनी मतिः ।
तथापि प्रज्ञकृतिनां कृतिर्मे सहकारिणी ॥३॥

अथ कविमण्डलमण्डनायितश्रीमद्बाणभट्टाभिधानो रङ्गप्रयोगप्रधानं नागानन्दाभिधानं दृश्यकाव्यं चिकीर्षुस्तदारम्भे प्रयोगपरिपन्थिप्रत्यूहप्रशमनौपयिकमभिनेष्यमाणकथावस्त्वंशसूचकं नान्दीति नाम्ना व्यपदिश्यमानं सूत्रधारेण पठनीयं मङ्गलश्लोकद्वयमुपन्यस्यति—ध्यानव्याजमिति, कामेनेति च ।

ध्यानव्याजमिति । त्वम्, ध्यानव्याजम्=ध्यानम्—एकाग्रतया ध्येयवस्तुनश्चिन्तनम्, तदेव व्याजः—मिषः, तम्, उपेत्य=आश्रित्य, ध्यानच्छलेनेत्यर्थः, काम्=कतमाम्, सुन्दरीम्, चिन्तयसि=ध्यायसि ? [यां चिन्तयन्नानन्दनिर्भरस्त्वमस्मासु दृक्पातमप्यन्तरायमुपस्थितं मनुषे], चक्षुः=नेत्रम्, उन्मील्य=उद्घाट्य, अनङ्गशरातुरम्=अनङ्गः—अङ्गरहितः, कामः, तस्य

---

नान्दी

समाधि के बहाने तू किस (ललना) का ध्यान कर रहा है ? क्षण भर के लिये आखें खोल कर काम के बाणों से विह्वल इस जन की (हमारी) ओर तो देख । रक्षक होता हुआ भी तू (हमारी) रक्षा नहीं करता ? तू

मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः[1] पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बौद्धो[2] जिनः पातु वः ॥१॥

---

शरे-बाणे, आतुरम्-व्यथितम्, कामज्वरग्रस्तमिति भावः, इमम्=त्वत्सन्निकृष्टम्, जनम्=स्त्रीजनम् कामाविष्ट इति भावः, क्षणम्=क्षणमात्रम्, न तु चिरम्, पश्य=अवलोकय। [किमित्येवमस्माननुरक्ता ध्यायन् व्यर्थमात्मानं कदर्थयसि, वयं त्वनेकस्त्वय्यनुरक्तास्त्वामुपस्थिताः, मनाङ् नेत्रमेकमप्युन्मील्यास्मासु दृक्पातमङ्गीकुरु। 'एकेनापि चक्षुषा क्षणमात्रमपि चायं यदि नः पश्येत्, तर्हि तावतैव वयमिमं वशीकर्तुं प्रभवेम, न पुनरयं तदानीमन्यदस्मत् किमपि चिन्तयेत्। अस्मद्रूपलावण्यनिपतितस्यास्य दुर्घटं समाधिर्भवेत्" इति तासामान्तरोऽभिप्रायः] त्राता अपि=आपन्नजनरक्षकोऽपि सन्, त्वम्, नो=नैव, रक्षसि=त्रायसे, इमं जनमिति शेषः। [केन त्वं त्राता भणित, यत् कामपीडितास्त्वां शरणमुपेता अप्यस्मानुपेक्षसे-इति भावः] त्वम्, मिथ्याकारुणिकः=मिथ्या-मृषा, कारुणिकः-दयालुः, असि [लोकास्त्वां मिथ्यैव दयालुमाचक्षते-इति भावः] प्रत्युत, त्वत्तः=त्वामपेक्ष्य, त्वदपेक्षयेत्यर्थः [ल्यब्लोपे पञ्चमी, ततस्तसिल्], निर्घृणतरः=निर्गता घृणा यस्मात् स निर्घृणः, अतिशयेन निर्घृणः इति निर्घृणतरः-अधिकनिर्दयः, अन्यः=अपरः, पुमान्=मनुजः, कुतः=कस्मात् सम्भाव्यते? न सम्भाव्यते इति भावः। [यः सम्मुखीनमप्यातुरं जनं न केवलं दृक्पातेन न सम्भावयति, प्रत्युत समाधिमिषेणोपेक्षते, ततः कठोरहृदयो नान्यः सम्भवति इति भावः। क्वचित्तु 'त्वत्तः स कोऽन्यः पुमान्' इति पाठः। तत्र त्वत्तः, निर्घृणतरः, अन्यः सः कः पुमान्, अस्ति, न कोऽपीत्यर्थः इत्येव योजना कर्तव्या] इति=एवम् पूर्वोक्तेन प्रकारेण, मारवधूभिः=मारयति प्राणिन इति मारो[3] मन्मथः, तस्य, वधूभिः-तदुद्दीपकत्वात् तत्सहायभूताभिः, तदाक्रान्ताभिर्वा सुन्दरीभिः, सेर्ष्यम्=ईर्ष्या-अक्षमा असहिष्णुतेत्यर्थः, तया सहितं यथा स्यात् तथा, [क्रियाविशेषणमिदम्] बुद्धस्य चिरध्यानमग्नतामक्षममाणाभिरिति यावत्, अभिहितः=उक्तः, उद्भावित इति यावत् [अभिपूर्वस्य दधातेर्निष्ठायां

---

झूठे ही दयालु (कहलाता) है, तेरे से अधिक निष्ठुर पुरुष और कौन होगा?—इस प्रकार काम की स्त्रियों से ईर्ष्या पूर्वक संबोधित समाधि में मग्न भगवान् बुद्ध तुम्हारी रक्षा करें ॥१॥

---

१ स कोऽन्यः। २ बुद्धो। ३ 'मदनो मन्मथो मारः' इत्यमरः।

दधातेर्हिः ] **बोधौ**=बोधिर्विशुद्धविज्ञानसन्तान , तत्र स्थितः विशुद्धविज्ञानसन्तानोत्पत्तिहेतौ समाधौ स्थित इत्यर्थः [ बौद्धा विशुद्धविज्ञानोत्पादमेव कैवल्यमामनन्ति । तदुक्तं वाचस्पतिमिश्रै परिणामतापसंस्कारैरित्यादिसूत्रभाष्यव्याख्यायाम्– 'अन्ये तु सवासनक्लेशसमुच्छेदाद् विशुद्धविज्ञानोत्पाद एव मोक्ष इति' ], **जिनः**=जानातीति जिनः– बुद्ध , **वः**=युष्मान् अभिनयप्रेक्षकान् सदस्यान्, **पातु**=रक्षतु । आशिषि लोट् । [क्वचित्तु 'बुद्धो जिन. पातु व.' इति पाठ. । तत्र बुद्धः–सञ्जातविशुद्धविज्ञान इत्यर्थ. । अन्यत् सुगमम् ]।

पुरा किल देवराज इन्द्रो रहसि समाधिनिमग्नस्य भगवतः सुगतस्य समाधिभङ्गं कामयमानो मन्मथपुरस्सरा अप्सरसस्तदन्तिके प्रेषितवान्, परं न तास्तथाकर्तुमपारयन्, इत्यादि ललितविस्तरादिबौद्धग्रन्थेषु प्रतिपादितं कथानकमत्रानुसन्धेयम् ।

**अलङ्कारादिः**—अत्र आतापि नो रक्षसीत्यादिना जिनस्य दोषोद्घोषणात् तं प्रति मारवधूनाम् असूयाख्यो व्यभिचारिभावो व्यज्यते । तदुक्तं काव्यप्रदीपोद्योते—

'परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा ।
दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादयः ॥'

स च प्राधान्येन व्यज्यमानस्य कविहृदयितवक्तृनिष्ठबुद्धविषयकरतिभावस्याङ्गम्, भावस्याङ्गत्वे च प्रेयोऽलङ्कारः । व्याजपदेन ध्यानस्य परोक्षपरमार्थविषयतामपह्नुत्य स्त्रीविषयतायाः स्थापनाद् अपह्नुतिः । तदुक्तं दर्पणे—

'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः' ।

उपेत्य चिन्तयसीत्यादीनामनेकासां क्रियाणां त्वमित्येकं कर्तृकारकम्, अतो दीपकमपि । तदुक्तम्—

'अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ।'

त्राताऽपि नो रक्षसीत्यत्र त्राणकर्तुस्त्राणासम्बन्धप्रतिपादनाद् विरोधः । तदुक्तम्—

'आभासत्वे विरोधस्य विरोधाभास इष्यते ।'

'अनङ्गशरातुरं जनमिमम्' इति मध्यवर्तिनः पदसमुदायस्य एरय रक्षसीत्युभाभ्यां क्रियाभ्यामन्वयाद् देहलीदीपकं च ।

वृत्तं शार्दूलविक्रीडितम् । 'सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्' ॥१॥

---

१ 'मारजिल्लोकजिज्जिन'–'इति बुद्धनामस्वमरः ।

अपि च,

> कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरै-
> र्भ्रूभङ्गोत्कम्पजृम्भास्मितललितदृशा दिव्यनारीजनेन ।
> सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद् वासवेन
> ध्यायन् बोधेरवाप्तावचलित इति वः पातु दृष्टो मुनीन्द्रः ॥२॥

**कामेनेति । बोधेः**=विशुद्धविज्ञानसंतानरूपस्य कैवल्यस्य, **अवाप्तौ**=अवाप्तिनिमित्तमित्यर्थः [ चर्मणि द्वीपिनं हन्तीतिवद् निमित्तार्थे सप्तमी ], **ध्यायन्**=ध्यानं कुर्वन्, **अचलितः**=अस्खलितः, मारवधूजनेनापीति शेषः । **इति**=इत्यस्माद् हेतोः, **कामेन**=मदनेन, **चापम्**=धनुः तत्प्रत्यक्षा-मित्यर्थः, **आकृष्य**=कर्णान्तं कृष्ट्वा, विस्मयाद् दृष्टः [ अत्र 'विस्मयाद् दृष्टः' इति पदद्वयं सर्वैरवान्तरवाक्यैः संबध्यते । दुर्जेयाभिर्मत्सैन्यभूताभिर्युवतिभि-रप्यपराजितः कोऽयं मम प्रतिभट उपस्थितो यत्कृते मयापि स्वयं धनुराकर्ष-णीयमभवत्, इति कामस्य विस्मयो जातः, अथवा कामेन चापमाकृष्य तद-वस्थेनैव—चापमाकृष्यापि तं स्वशरलक्ष्यं कर्तुमशक्तेनैव—विस्मयाद् दृष्ट इति योजना, तत्र-अहो कोऽयमभूतपूर्वस्तपस्वी यत्तपःप्रभावादप्रभावं मे धनुर्जात-मिति विस्मयस्य हेतुः], **मारवीरैः**=कामसैनिकैः, विधुवसन्तादिभिरपि, **हत-पटुपटहावल्गिभिः**=हताः–तीव्रं ताडिताः, पटवः–तीव्रध्वनयः, पटहाः–ढक्काख्या वाद्यविशेषा यैस्तादृशैः, आवल्गिभिः–आवल्गितुं शीलं येषामस्ति ते-आवल्गिनः, तैः–अस्मत्स्वामिना धनुराकृष्टम्, इदानीं जितप्रायोऽयं शत्रुरित्युद्धतं शब्दायमानैः, सद्भिः, विस्मयाद् दृष्टः [ पटहान्तबहुव्रीहिणा सह–आवल्गिभिरित्यस्य कर्मधारयः, अदृष्टचरं स्वप्रयत्ननैष्फल्यमेव

और भी,

विशुद्ध विज्ञान की प्राप्ति के लिये ध्यान में अचल होने के कारण जिन्हें, कामदेव ने धनुष तान कर, उस (कामदेव) के सैनिकों ने तीव्र ध्वनि वाले ढोल बजाकर गर्जना करते हुए, स्वर्ग की अप्सराओं ने भौंहें नचाते हुए, काँपते हुए, उबासियाँ लेते हुए, मुस्कराते हुए और (तरह तरह की) शृङ्गार-चेष्टाएँ करते हुए, तपस्वियों ने सिर झुका कर, इन्द्र ने आश्चर्य से रोमाञ्चित होकर देखा, वह मुनीन्द्र बुद्ध तुम्हारी रक्षा करें ॥२॥

१ चलितदृशा. २ बोधेरवाप्तो न.

तेषां विस्मयस्य हेतु ], दिव्यनारीजनेन=दिव्य.-दिवि स्वर्गे भव , नारीजन -स्त्रीसमूह , तेन सुरयुवतिसमूहेनेत्यर्थ , भ्रूभङ्गोत्कम्पजृम्भास्मितललितवता=भ्रुवोर्भङ्ग इति भ्रूभङ्ग -भ्रूविलास , उत्कम्प -वेपथु , जृम्भा-गात्रविनाम , स्मितम्-मन्दहास , ललितम्-मृदुपदविन्यासभुजलतान्दोलनादि शृङ्गारचेष्टितम्, एतानि विद्यन्ते यत्र तादृशेन सता विस्मयाद् दृष्ट , [ क्वचित्तु 'ललितवता' इत्यस्य स्थाने 'चलितदृशा' इति पाठ । तत्र भ्रूभङ्गादिभि कामविकारे चलिते-चञ्चलतां प्राप्ते दृशौ यस्य तादृशेन सतेत्यर्थो योज्य , अहो अस्य धैर्यम्, यदयमनेकाभिश्चाङ्गनाभिरप्यविलोभित , कामेन न स्वामिना स्वय धनुरादृत्याभियुक्तोऽपि, इदानीमस्माकं भ्रूविलासादिभिरप्यनुद्वेजितो न मनागपि समाधितश्च्यवते-इति तासामपि विस्मय ], सिद्धै:=तपस्विभि , सिद्धाख्यैर्देवयोनिविशेषैर्वापि, प्रह्वोत्तमाङ्गै:=प्रह्वाणि-भक्त्या नतानि, उत्तमानि, अङ्गानि-शिरांसि येषां तादृशै सद्भि , विस्मयाद् दृष्ट , [ अविरतमारप्रहारैरप्यनाकुलस्यास्माकं विश्वामित्रादिभिरलभ्यमुनिरत्नातिशयि धैर्यमिति सिद्धानां विस्मय ], वासवेन=इन्द्रेण, पुलकितवपुषा=पुलकितम्-भयेन रोमाञ्चितम्, वपु -शरीरम्, यस्य तादृशेन सता, विस्मयाद्=आश्चर्याद्, दृष्ट =अवलोकित , [ मत्प्रेरिता अनेके तपस्विनो भ्रष्टा , परमत्र मदीय सर्वमपि चातुर्यं निष्फलमभवत्, न जानेऽयमत प्रमादाद्-मयि किं करिष्यति-इति पुरुहूतस्य भयहेतु । बुद्धस्यासौ धैर्यातिरेकश्च तस्य विस्मयहेतु ] मुनीन्द्र:=मुनीनाम्-मननवतां ध्यानवताम्, इन्द्र -श्रेष्ठ , मुनिश्रेष्ठो बुद्ध इति यावत्, व =युष्मान् सामाजिकान्, पातु=रक्षतु । सिद्धवर्णितशरणमनु—'बोधे -विशुद्धबुद्धिरूपस्य तत्त्वस्य, अवाप्तौ लाभाय , अचलित ध्यायन्-अखिलकर्मोपरमेण तामेव भावयन्तमिमनुभवन्, मुनीन्द्रो व पातु-इत्येवं अन्वयमयूयुजत्।

क्वचित्तु 'बोधिरवाप्ता' इति पाठ । तत्र बोधिरिति बहुवचनेन बोधसन्ततिविवक्षिता । तथा च बोधे —विशुद्धबोधसन्तत्या, अवाप्त —अहमहमिकया स्वयमेवाश्रित , ध्यानवन्तं विशुद्धविज्ञानसन्ततिः स्वयमेवोपतिष्ठत इति भाव ।

अलङ्कारादि:—विकारहेतुष्वपि सत्सु बुद्धस्य समाधेरच्युतत्वाद् धैर्या-

---

१ 'शाक्यो वृषवा सदा'इत्यमरनामस्यमर । २ 'पुलक कृमिभेदे प्रस्तरभेदे च मणिदोषे रोमाञ्चे हरिताले' इति मेदिनी । ३ 'मुनीन्द्र श्रीघन शास्ता'इति बुद्धनामस्वमर ।

नान्द्यन्ते—

**सूत्रधारः**—अलमतिविस्तरेण । अद्याहमिन्द्रोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञ[1] श्रीहर्षदेवस्य पादपद्मोपजी-

---

तिशयो व्यङ्ग्य । स च बुद्धविषयकरतिभावस्याङ्गमिति पूर्ववत् प्रेयोऽलङ्कार ।

पादत्रये समुदीरिताना चापाकर्षणादिपुरस्सरं बुद्धविलोकनकर्तॄणा कामादीना बुद्धविषये प्रतिभटत्वादिप्रकारकोल्लेखानामाक्षेपाद्–उल्लेखालङ्कारोऽपि व्यङ्ग्य । तदुक्तम्—'बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते' । धैर्यच्युतिहेतौ सत्यपि तदवर्णनाद् विशेषोक्ति । तदुक्तम्—

'सति हेतौ फलाभावे विशेषोक्तिर्निगद्यते' ।

मुनीन्द्र इति विशेष्यस्य बुद्धे–इतरमुनिदुर्लभध्यानदार्ढ्यमबोधने साभिप्रायतया परिकराङ्कुर । तदुक्त कुवलयानन्दे—

'साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुर ' ।

'आशीर्नमस्क्रियारूप श्लोक काव्यार्थसूचकः । नान्दीति कथ्यते' इति भरतवचनानुसारेण नान्दीपद्ये कथावस्त्वंशसूचनमपि नाट्यशास्त्रनियमितमिति तदपीह किञ्चित् प्रतिपाद्यते । प्रथमपद्ये सकलविषयविरक्तबुद्धवर्णनया राज्योपभोगविरक्त पितृशुश्रूषणतत्परो बोधिसत्त्वापरनामा जीमूतवाहनोऽस्य नाटकस्य नायक उपक्षिप्त, प्रथमाङ्कवर्णित जीमूतवाहनस्य राज्यनिरीक्षणमुपेक्ष्य पित्रो शुश्रूषणाय मलयपर्वत प्रति गमनं चोपक्षिप्तम् । एवमनङ्गशरातुरस्त्रीजनेत्युपन्यासेन मलयवत्या उपस्थापनाद् द्वितीयाङ्ककथा सूचिता । द्वितीयपद्ये—अनेकै प्रत्यूहैरपि ध्यानादविचलितस्य मुनीन्द्रस्य वर्णनया जीमूतवाहनस्य—स्वराज्यम् अभिषेणयन्त मातङ्ग प्रत्युपेक्षारूपा तृतीयाङ्ककथा तथा पित्रोर्वात्सल्यं मलयवत्याश्चानुराग तृणीकृत्य एकस्य सर्पशिशो प्राणरक्षाया कृते स्वशरीरत्यागरूपा चतुर्थपञ्चमाङ्कयो कथा च सूचिता ॥२॥

अथ सूत्रधारमुखेन भारतीं वृत्तिमाश्रित्य प्ररोचनाप्रस्तावने अवतारयितुमाह—**नान्द्यन्त** इति । **नान्द्यन्ते**=नान्द्या [नन्दन नन्द आनन्द इत्यर्थ, भावे घञ्, अथवा नन्दन्त्यस्मिन् जना इति नन्द –अभिनीयमान रूपक-

---

(नान्दी के अन्त में सूत्रधार का प्रवेश)

**सूत्रधार**—बहुत विस्तार करने की कुछ आवश्यकता नहीं। आज मुझे नाना देश दिशाओं से आए हुए, राजा श्रीहर्ष देव के चरणकमलों के

---

1 राज्ञ

**विना राजसमूहेनोक्त-"यत्तदस्मत्स्वामिना श्रीहर्षदेवेनापूर्व वस्तुरचनाऽलङ्कृतं विद्याधरचक्रवर्तिप्रतिबद्धं नागानन्दं नाम**

मित्यर्थ, अधिकरणे घञ्, तस्येयमिति नान्दी-अभिनयनिर्विघ्नतासिद्धये क्रियमाणो मङ्गलश्लोकपाठ, तस्या ] पूर्वोक्ताया पद्यद्वयात्मिकाया, अन्ते-अवसाने। तत्र नान्दी लक्षण यथा—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीना तस्मान्नान्दीति संज्ञिता॥

पूर्वोक्तयो पद्ययो **'जिन पातु व', प तु दृष्टो मुनीन्द्रः'** इत्या शीर्वादयुक्ता बुद्धस्तुतिर्निबद्धेति-इति तयोर्नान्दीत्वमभ्याहृतम्। सा च नान्दी द्वादशपादात्मिकाऽष्टपादात्मिका वा भवति, प्रकृते च श्लोकद्वयेनाष्टपादात्मिका सा। तदुक्त भरतेन—

सूत्रधार पठेन्नान्दीं मध्यम स्वरमाश्रित।
नान्दीपदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृताम्॥

यद्यपि पदपदेन 'सुप्तिङन्त पदम्' इति वचनात्सुबन्ततिङन्तरूपाण्येव पदानि गृह्यन्ते, न तु श्लोकपादा, तथाप्यत्र नान्दीलक्षणे तेन श्लोकपादा अपि गृह्यन्ते। तदुक्त नाट्यप्रदीपे—

श्लोकपाद पद केचित्सुप्तिङन्तमथापरे।
परेऽवान्तरवाक्यैकस्वरूप पदमूचिरे॥

अत्र पूर्वोक्तेन प्रकारेण समासोक्त्या काव्यार्थसूचनात् पत्रावलीसंज्ञेयं नान्दी। तदुक्त नाट्यदर्पणे—

यस्या बीजस्य विन्यासो ह्यभिधेयस्य वस्तुन।
श्लेषेण वा समासोक्त्या नाम्ना पत्रावलीति सा॥

**सूत्रधार'**—प्रविश्य आहेति शेष। सूत्रम्-नाट्यानुष्ठानम्, धारयति-प्रवर्तयतीति सूत्रधार-अभिनेतृणा नेता प्रधाननट इत्यर्थ। तदुक्तम्—

नाट्यस्य यदनुष्ठान तत्सूत्र स्यात् सबीजकम्।
रङ्गदैवतपूजाकृत् सूत्रधार स उच्यते॥

---

अधीन राजाओं ने बहुत आदर पूर्वक इन्द्रोत्सव में बुला कर कहा है कि "हमारे स्वामी श्रीहर्षदेव ने अपूर्व वस्तु की रचना से सुशोभित, विद्याधर चक्रवर्ती (जीमूतवाहन) के चरित्र से युक्त 'नागानन्द' नाटक रचा है" यह हमने कानों-

१ जातक

नाटकं कृतमित्यस्माभिः श्रोत्रपरम्परया श्रुतं न च प्रयोगतो दृष्टम् । तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानात्

अपि च—नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥
अन्यच्च—वर्णनीयकथासूत्रं प्रथमं येन सूच्यते ।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥

वस्तुतस्तु नान्दीलक्षणपूर्वरङ्गविधातुः सूत्रधारादन्य एवायं सूत्रधारः स्थापकापरनामा । सूत्रधारगुणाकृतित्वादयमपि सूत्रधार इत्युच्यते । तदुक्तं दर्पणे—पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।
प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत् ततः ॥
अन्यत्राप्युक्तम्—नान्दीं प्रयुज्य निष्क्रामेत् सूत्रधारः महानुगः ।
स्थापकः प्रविशेत् पश्चात् सूत्रधारगुणाकृतिः ॥
अन्यच्च—पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥

तद्वत्—सूत्रधारगुणाकृतिरित्यर्थः ।

अथ स स्थापकापरनामा सूत्रधारः—
रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
रूपकस्य कवेराख्या गोत्राद्यपि स कीर्तयेत् ।
ऋतुं च कंचित् प्रायेण भारतीं वृत्तिमाश्रितः ॥

इति नाट्यनियमानुरोधेन भारतीं वृत्तिमाश्रित्य कविरूपकनामादि सकीर्तयति—अलमित्यादिना । प्रायेणेति वचनाद् ऋतुसंकीर्तनं न सार्वत्रिकम् । अतोऽत्र प्रकृतनाटके ऋतुसंकीर्तनाभावेऽपि न क्षतिः । तत्र भारत्या वृत्तेर्लक्षणं यथा—

या वाक् प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः ॥

तस्या वृत्तेश्च चत्वार्यङ्गानि भवन्ति—प्ररोचना, आमुखम् ( प्रस्तावना ), वीथी, प्रहसनं चेति । तदुक्तम्—

---

कान सुना तो है पर अभिनय होते हुए नहीं देखा। इसलिये उसी राजा के प्रति बहुत आदर के कारण और हमारे ऊपर अनुग्रह करने के विचार से भली भाँति अभिनय करके आज तुम नाटक करो।" तो अब मैं नेपथ्य रचना करके उनकी

अस्मासु चानुग्रहबुद्धया यथावत्प्रयोगेण अद्य त्वया नाटयितव्यम्" इति । तद् यावद् इदानीं नेपथ्यरचनां कृत्वा यथाऽभिलषितं सम्पादयामि । [ परिक्रम्यावलोक्य च ] आवर्जितानि च सकलसामाजिकमनांसि[1] इति मे निश्चयः । यतः,

---

भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागता ।
प्ररोचनाऽऽमुखं चैव वीथी प्रहसनं तथा ॥

तस्या भारत्या वृत्तेरिति भाव. ।

**अलमतिविस्तरेण**=अलमत्र वारणार्थे, अतिविस्तरो न कर्तव्य इत्यर्थ । अथवा अतिविस्तरेण अल साध्यं नास्ति, न किमपि प्रयोजनं सिध्यति [ गम्यमानाऽपि क्रिया कारकविभक्तीना निमित्तमिति विस्तरशब्दात् तृतीया ] । अयं भाव —नाटकाभिनयप्रारम्भे नाट्यनियमानुरोधेन पूर्वरङ्ग. करणीय एव, तस्य च पूर्वरङ्गस्य प्रत्याहारादीनि द्वादशाङ्गानि भवन्ति । तेषु नान्द्यप्यन्यतममङ्गम्, सा च रङ्गविघ्नोपशान्तयेऽवश्यकर्तव्या—

तदुक्तं दर्पणे—यन्नाट्यवस्तुन पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवा प्रकुर्वन्ति पूर्वरङ्ग स उच्यते ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाप्यवश्यकर्तव्या नान्दी विघ्नोपशान्तये ॥

तथा च पूर्वरङ्गाङ्गेष्ववश्यकर्तव्यरूपा नान्द्यनुष्ठितैवेति । कृतं परिषत्कुतूहलविमर्दकारिणा शेषाङ्गानुष्ठानेन ॥

**अद्य इन्द्रोत्सवे**=वर्षादिकामनया इन्द्रप्रसादनाय क्रियमाण उत्सवविशेषे [इन्द्रोत्सव इति सप्तम्या तदङ्गत्वं सूचितम्], **नानादिग्देशागतेन**=नानादिग्भ्यो देशेभ्यश्चागतेन समवेतेन, **श्रीहर्षदेवस्य**=श्रीहर्षदेव इति नाम्न, राज्ञः, **पादपद्मोपजीविना**=[पादौ पद्मे इवेति पादपद्मे,ते उपजीवतीति पादपद्मोपजीवी, तेन ] चरणकमलाश्रितेन, श्रीहर्षदेवकृपाधीनराज्येनेत्यर्थ , **राजसमूहेन**=राज्ञा समुदायेन [कर्त्रा], **अहम्**=सूत्रधार , **सबहुमानम्**=बहुमानेन सहितं यथा स्यात् तथा, **आहूय**=आकार्य, **उक्तः**=कथित आदिष्ट इति यावत् [ एनेन तदादेशस्यावश्यपालनीयत्वं ध्वन्यते ] । यत्, अस्मत्

---

इच्छा के अनुसार करता हूँ । मेरा निश्चय है कि सभासदों (दर्शकों) के मन इस ओर खिंचे हुए हैं । क्योंकि,

---

1 सामाजिकजनमनांसि.

**स्वामिना**=अस्माकं राज्ञाम्, स्वामिना-अधीश्वरेण, श्रीहर्षदेवेन, **अपूर्व-वस्तुरचनालङ्कृतम्**=अपूर्वस्याद्भुतस्य पूर्वं केनाप्यसन्दब्धस्य, वस्तुनः-प्रतिपाद्यस्येतिवृत्तस्य, रचनया-प्रबन्धेन, अलङ्कृतमुल्लसितम्, **विद्याधर-चक्रवर्तिप्रतिबद्धम्**=विद्याधरा देवयोनिविशेषाः, ['विद्याधरोऽप्सरोयक्षरक्षो गन्धर्वकिन्नराः। पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः] तेषां चक्रवर्ती सम्राट्, तेन प्रतिबद्धं सम्बद्धम्, विद्याधरचक्रवर्तिचरित्रचित्रितमिति यावत् [क्वचित्तु विद्याधरजातकप्रतिबद्धमिति पाठः। तस्यापि विद्याधराणां जातकं जन्मादिवर्णनपरो ग्रन्थविशेषः, तेन प्रतिबद्धम्, तत्प्रतिपादित जीमूतवाहनाख्यविद्याधरचरित्रसम्बद्धम् इति भाव इति योजना कर्तव्या] **नागानन्दम्**=नागानामानन्दो नागानन्दः, स विद्यते (वर्णनीयतया) यस्मिन्, तन्नागानन्दम्, अर्शआद्यच्। उचितं चैतन्नाम, नाटकगर्भितार्थ-प्रकाशकत्वात्। तदुक्तं दर्पणे- नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम्' इति। [पुरा किल पन्नगाशनत्रासिताः पन्नगा विद्याधरजीमूतवाहनेन स्वप्राणव्ययेन रक्षिता आनन्दमवापुः, स एवानन्दोऽत्र रूपके वर्णितः, अत एवास्य नागानन्दमिति नाम कृतम्] **नाम**=नामेत्यव्ययं प्रसिद्धौ, नागानन्दमिति प्रसिद्धम्, **नाटकम्**=ख्यातवृत्तनादिलक्षणयुक्तं दशानां रूपकाणां मध्ये नाटकाख्यं रूपकम्, **कृतम्**, यत्, **अस्माभिः**, श्रोत्रपरम्परया कर्णाकर्णिकया, **श्रुतम्**=आकर्णितमेव, **न च**=[चस्त्वर्थे] न तु, **प्रयोगतः**=प्रयोगेण-अभिनयेन [आद्यादित्वात्तसिः] अभिनीयमानमित्यर्थः, **दृष्टम्**=साक्षात् कृतम्। **तत्**=तस्मात् कारणात्, **सकलजनहृदयाह्लादिनः**=सकलानाम्, जनानां प्रजानाम्, हृदयानि, आह्लादयति रञ्जयति, तच्छीलः, तस्य, **तस्यैव**-श्रीहर्षदेवस्य, **राज्ञः**, **बहुमानाद्**=अतिगौरवाद्, [अस्य नाटकस्य कर्ता निखिलजनहृदयरञ्जनः सामन्तचक्रवर्ती श्रीहर्षः कविरिरयेव कविगौरवादिति भावः] **अस्मासु**=इन्द्रोत्सवे समेतेषु राजसु, **अनुग्रहबुद्ध्या**=नानादिग्देशागता इमे, तदवश्यमभिनयप्रदर्शनेनानुग्रहणीया इत्येवं कृपाविशिष्टया बुद्ध्या च, **त्वया**=सूत्रधारेण, **अद्य**=इन्द्रोत्सवावसरे, **तत्**-पूर्ववर्णितं नागानन्दं नाम नाटकम्, **यथावत्**=नाट्यनियमाननतिक्रम्य, **प्रयोगेण**=अभिनयेन, **नाटयितव्यम्**=अभिनेतव्यम्, इति।

तद्=यतो राजसमूहेन सदिष्टं तस्मादित्यर्थः, **इदानीम्**, **यावत्**=सर्वतः पूर्वम्, **नेपथ्यरचनाम्**=नेपथ्यस्याभिनयोचितवेषभूषायाः, रचनाम्, **कृत्वा**-विधाय, ['आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्' इत्यमरः] **यथाभिल**

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च सिद्धराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥३॥

षितम्=अभिलषितमनतिक्रम्य, यथेप्सितमित्यर्थः । **परिक्रम्य**=इतस्ततः परिभ्रम्य। अथ भारत्या वृत्त्या प्ररोचना नामाङ्गमवतारयति—**आवर्जिता-नीति, सकलसामाजिकमनांसि**=सकलानां रङ्गभूमिसमवेतानां सामाजिकानां सभासदां मनांसि हृदयानि, **आवर्जितानि**=अभिनयदर्शनोत्कण्ठयाऽऽकृष्टानि, इति मे निश्चयः । **यत्** इति हेतूपन्यासः ।

**श्रीहर्ष** इति—**श्रीहर्षः**=श्रीहर्षदेवः, **निपुणः**=काव्यरचनायां कुशलः, **कविः**, अस्ति । **एषा**=पुरोदृश्यमाना, **परिषत्**=अभिनयदर्शनाय समवेता सभापि, **गुणग्राहिणी**=[ गुणान् गृह्णाति तच्छीला ] गुणैकपक्षपातिनी, अस्ति । किं च, **लोके**=भुवने [ 'लोकस्तु भुवने जने' इत्यमरः ] **सिद्धराजचरितम्**=सिद्धानां राजा सिद्धराजो जीमूतवाहनः, [ 'राजाहःसखिभ्यष्टच्' ] तस्य चरितम्, **हारि**=मनोहारि, [ हरतेर्ग्रह्यादित्वाणिनिः ] वर्तते इति शेषः । [ क्वचित्तु 'बोधिसत्त्वचरितम्' इति पाठः । बोधिसत्त्वस्य बोधिसत्त्वापरनाम्नो जीमूतवाहनस्य चरितमिति तदर्थः । यद्यपि 'मुनीन्द्रः श्रीघनः शास्ता बोधिसत्त्वो विनायकः' इति वचनाद् बोधिसत्त्व इति सुगतस्य सञ्ज्ञा, तथापि बौद्धसंप्रदाये सुचरितमाहात्म्येन बोधिसत्त्वः सर्वोऽपि बोधिसत्त्वशब्देन व्यपदिश्यत इति । ] **वयं च**=वयमपि नटाः, **नाट्ये**=अभिनयकर्मणि, **दक्षाः**=कुशलाः, स्मः । **इह**=प्रस्तुतेऽभिनये, **एकैकमपि**—व्यस्तम्—अन्यनिरपेक्षम् अपि, **वस्तु**=पूर्वोक्तं कविनैपुण्यादिकम् **वाञ्छितफलप्राप्तेः**=वाञ्छितस्याभीप्सितस्य, फलस्य, परिषन्मनोरञ्जनरूपस्य, प्राप्तेः, **पदम्**=स्थानं निमित्तमिति यावत्, अस्ति ['पदं व्यवसितत्राण-

श्रीहर्ष एक प्रवीण कवि हैं, यह समाज भी गुणों का आदर करने वाला है, बोधिसत्त्व का जीवन चरित्र संसार में बड़ा रोचक है और हम भी नाटक खेलने में चतुर हैं—यहां तो एक एक वस्तु इष्ट फल की प्राप्ति का साधन है, मेरे भाग्य के उत्कर्ष से एकत्र संघटित गुणों का यह समग्र समूह—इच्छित फल की प्राप्ति का साधन होगा—इसमें तो कहना ही क्या ?

१ वत्सराज

तद् यावद् अहं गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामि । [ परिक्रम्य नेपथ्याभिमुखमवलोक्य ] इदमस्मद्गृहम्, यावत् प्रविशामि । [ प्रविश्य ] आर्ये ! इतस्तावत् ।

स्थानलक्ष्मात्स्विवस्तुषु–' इत्यमर ], मद्भाग्योपचयाद्=मम सूत्रधारस्य, भाग्यम्, तस्य, उपचयाद् उत्कर्षात्, समुदितः=समूहरूपेणोपस्थित, अयम्=सन्निकृष्ट, सर्वः=सकल, गुणानाम्=कविनैपुण्यादीनाम्, गणः= समुदाय, वाञ्छितफलप्राप्ते पद भवतीत्यत्र 'किं पुनर्'वक्तव्यम् । एकैकेनापि कविनैपुण्यादिना गुणेन यदि परिषन्मनोरञ्जनं सिध्यति, तर्हि तेषा समुदायेन तत् सिध्येदित्यत्र किमु वक्तव्यम्, गुणसमुदायेन सुतरा सिध्येदित्यर्थ ।

अलंकारः–कैमुत्येनार्थससिद्धे प्रतिपादनात्काव्यार्थापत्तिरलङ्कार ।

तदुक्त कुवलयानन्दे–'कैमुत्येनार्थसंसिद्धि काव्यार्थापत्तिरिष्यते ।'

मद्भाग्योपचयादिति गुणसमुदाये हेतूपादानात् पदार्थहेतुक काव्यलिङ्गम् । एकेनैव हेतुना कार्यसिद्धौ हेत्वन्तरस्याप्युपादानात् समुच्चय. । तदुक्तम्—

अह प्रथमिकाभाजामेककार्यान्वयेऽपि स ।
कुल रूप वयो विद्या धन च मदयन्त्यमुम् ॥

छन्द शार्दूलविक्रीडितम् । तल्लक्षण पुरस्तादुक्तमेव ॥३॥

एतेन कविकाव्यादिप्रशसया परिषद उन्मुखीकरणाद् भारत्या वृत्ते प्ररोचना नामाङ्गमुक्तम् । तदुक्त धनञ्जयेन—

'उन्मुखीकरण तत्र प्रशसात प्ररोचना ।'

अथ भारत्या वृत्ते प्रस्तावनानामाङ्गमवतारयति—तद् यावदिति । प्रस्तावनालक्षणमग्रे वक्ष्यते । तद्=यत परिषदाराधनसामग्रीसाकल्याद् राजाज्ञागौरवाच्च अवश्यनाटयितव्य तस्मादित्यर्थ । यावदिति=प्राथम्यबोधको निपात, प्रथममित्यर्थ, गृहिणीं=पत्नीम्, नटीमित्यर्थ । सङ्गीतकम्= नृत्तगीतवाद्यानि [ 'नृत्त गीत तथा वाद्य त्रयं सङ्गीतमुच्यते' इति सगीतरत्नाकर ], अनुतिष्ठामि=प्रवर्तयामीत्यर्थ । परिक्रम्य=रङ्गमञ्च परितो गत्वा गृहगमनमभिनीयेत्यर्थ । नेपथ्यम्=नटाना वेषरचनास्थानम् ।

'कुशीलवकुटुम्बस्य स्थान यदतिशोभनम् ।
वर्णिकापहरणस्थान नेपथ्यमिति तद् विदु ॥'

तो इतने में घर जाकर धर्मपत्नी को बुला कर सगीत आरम्भ करता हूँ । (घूम कर नेपथ्य-गृह की ओर देख कर ) यह हमारा घर है । इसमें प्रवेश करता हूँ । ( प्रवेश करके ) आर्ये ! जरा इधर आइए ।

द्विजपरिजनबन्धुहिते ! मद्भवनतटाकहंसि ! मृदुशीले !
परपुरुषचन्द्रकमलिन्यार्ये　!　कार्यादितस्तावत् ॥४॥

**नटी—**[ प्रविश्य सास्रम् ] **अज्ज ! इअम्हि मन्दभग्गा । आणवेदु अज्जउत्तो को णिओओ अणुचिट्ठीअदु त्ति ।**

---

प्रविश्य=प्रवेशं नाटयित्वा । सूत्रधारो नटीमाह्वयति द्विजेति । **द्विजपरिजनबन्धुहिते**=द्विजा ब्राह्मणा, परिजना अनुचरा, बन्धवः सम्बन्धिनः, तेषां हिते हितकारिणि !, सम्बुद्धौ रूपम्, [ तत्र द्विजानां दानमानाभ्याम्, परिजनानां यथासमयवेतनपारितोषिकप्रदानेन, बन्धूनां सम्पदैश्वर्यादिवितरणेन हितकारित्वं बोध्यम् ], **मद्भवनतटाकहंसि**= मम भवनं गृहमेव तटाकं सरः, तस्य हंसि मरालि ! [हंसीशब्दस्य सम्बोधने अम्बार्थनद्योर्ह्रस्व ]**मृदुशीले**=मृदु कोमलं परानुद्वेजकमिति यावत् शीलं स्वभावो यस्यास्तथाभूते ! [ इदमपि सम्बुद्धयन्तम्] **परपुरुषचन्द्रकमलिनि**=परः स्वभर्तुरन्यः, पुरुष एव चन्द्रः, तस्य कमलिनि पद्मिनि !, चन्द्रं कमलिनीव परपुरुषं दृष्ट्वा या सङ्कुचति तादृशि ! पतिव्रते ! इति यावत्, **आर्ये**=आर्यचरिते सत्पत्नि ['पत्नी चार्येति सभाष्या'इति श्रीमद्भरत ], **कार्याद्**=कार्यविशेषाद् हेतोः, **इतः**=मत्समीपम्, **तावद्**, आगम्यता मिति शेषः । तावच्छब्दो वाक्यालङ्कारे ।

**अलं०**—अत्र नट्या हंसीत्वारोपे भवने तटाकत्वारोपः, एवं तत्रैव कमलिनी त्वारोपे परपुरुषे चन्द्रत्वारोपो निमित्तमिति मालारूपमश्लिष्टपरम्परितरूपकमिदम्।
तदुक्तं दर्पणे—यत्र कस्यचिदारोपः परारोपणकारकम् ।
तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥
प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ॥

पूर्वार्धे तवर्गयोः श्रुत्यनुप्रासः, उत्तरार्धे रेफयकारयोर्वृत्त्यनुप्रासः । आर्यावृत्तम् । तल्लक्षणं यथा—
यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽर्या ॥४॥

**अस्रम्** अश्रु, तेन सहेति **सास्रम्**=अश्रुगद्गदितम्, अश्रुमोचनं नाटयन्ती-

---

हे ब्राह्मणों, सेवकों और बन्धुजनों का हित करने वाली ! हे मेरे गृहरूपी तडाग की हंसिनी ! हे कोमल स्वभाव वाली ! हे पर पुरुष रूपी चन्द्रमा के लिये कमलिनी ! हे आर्ये ! कार्यवश जरा इधर पधारिए ॥४॥

आर्य्ये ! इयमस्मि मन्दभाग्या । आज्ञापयतु आर्य्यपुनः को नियोगोऽनुष्ठीयतामिति ।

**सूत्रधारः**—[ नटीमवलोक्य ] आर्य्ये ! नागानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते ?

**नटी**– अज्ज ! कधं ण रोइस्सं ? यदो दाव तादो अज्जाए सह थविरभावं जाणिअ अदूरजादणिव्वेदो कुडुम्बभारुव्वहण-जोग्गो दाणीं तुमं त्ति हिअए वितक्किअ तवोवणं गदो ।

आर्य्ये ! कथं न रोदिष्यामीति ? यतस्तावत् तात आर्य्यया सह स्थविरभावं ज्ञात्वा अदूरजातनिर्वेदः, कुटुम्बभारोद्वहनयोग्य इदानीं त्वमिति वितर्क्य तपोवनं गतः ।

---

त्यर्थ । 'वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम्' इति नाट्यनियमानुरोधेन नटी सूत्रधारम् 'आर्य !' इत्येवं संबोधयति । मन्दं भाग्यं दैवं यस्या सा **मन्दभाग्या** । **नियोगः**=कार्यम् । **अनुष्ठीयताम्**=क्रियताम् । **नागानन्दे** इति, राजपरिषदानत्तानामस्माकमयं नागानन्दनाटकाभिनयनकाल., किमर्थमिदानीं हर्षावसरेऽपि त्वया अकारणं कारणं विनैव रोदनं क्रियते । नटी रोदनकारणमाह—**कथमिति** । कस्माद् हेतोर्न रुदाम्, अस्ति मे रोदनस्य कारणमिति भाव । यत ,**स्थविरभावम्**=वार्धक्यम, **ज्ञात्वा**=अनुभूय, **अदूरजातनिर्वेदः**=अदूरम् अचिरं संप्रत्येव जात उत्पन्नो निर्वेदो नैराग्यं यस्य तादृश , **तातः**=नतृपिता मे श्वशुर , '**इदानीं त्वं कुटुम्ब-भारोद्वहनयोग्यः**=कुटुम्बस्य पोष्यवर्गस्य, भार· योगक्षेमम् , तस्य, उद्व-हने-धारणे सम्पादने इति यावत्, योग्यः समर्थ., असि' इति हृदये

---

( नटी का प्रवेश )

**नटी**—( प्रवेश करके आँसू बहाते हुए ) आर्य ! यह हतभागिनी उपस्थित है । आज्ञा कीजिए, क्या कार्य किया जाय ?

**सूत्रधार**—( नटी को देख कर ) आर्ये ! नागानन्द नाटक के अभिनय करने के समय (तुम) बिना कारण के ही क्यों रो रही हो ?

**नटी**—आर्य ! क्यों न रोऊं । जब कि सास-ससुर बुढापे के कारण विरक्त होकर और 'अब तुम परिवार का बोझ उठाने योग्य हो गए हो' ऐसा मन में सोच कर तपोवन को चले गए हैं !

सूत्रधारः—[ सनिर्वेदम् ] अये ! कथं मां परित्यज्य तपोवनं यातौ पितरौ, तत् किमिदानीं युज्यते ? [ विचिन्त्य ] अथवा कथमहं गुरुचरणपरिचर्यासुखं परित्यज्य गृहे तिष्ठामि ? कुतः—

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम् ।
वनं याम्यहमप्येष यथा जीमूतवाहनः ॥५॥

[ इति निष्क्रान्तौ ]

[प्रस्तावना]

---

विनिवर्त्य=विचार्य, आर्यया=तव जनन्या मम श्वश्र्वा सह, तपोवनं गतः । अस्मान् परित्यज्य तत् तपोवनप्रस्थानमेव मे रोदनस्य कारणमिति भावः ।

सनिर्वेदम्=निर्वेदः स्वावमाननं तेन सहितम् । [ 'निर्वेदः स्वावमाननम्' इत्यमरः ] सूत्रधारो धिक् मां पितृपरित्यक्तमित्येवमात्मावमाननं कृत्वा कथयति—अये इत्यादि । अये=इति विषादसूचकमव्ययम् । कथमिति प्रश्ने । पितरौ=पिता माता चेत्यर्थः । ['पिता मात्रा' इत्यनेन पितृशब्दस्यैकशेषः ]। तत् किमित्यादि=मया इदानीं किं कर्तुमुचितमित्यर्थः । विचिन्त्य=चिन्तनं नाटयित्वा । अथवेत्यादि—अथवेति पक्षान्तरे, कृतमनया व्यर्थविचिन्तनया, अहम्, गुर्वोः—मातापित्रोः, चरणयोः परिचर्या—शुश्रूषा, तया यत् सुखम्, तत् परित्यज्य, कथम्—केन प्रकारेण, गृहे, तिष्ठामि ? न स्थास्यामीत्यर्थः, प्रव्रजितौ पितरौ वने सेवेनाम्, अहं च गृहसुखलम्पटो भवेयमिति नैवानुचितम् । कुत इति पूर्वोक्तार्थे हेतून्यासः ।

अथ हेतून्यासमुखेन कथोपदेशाय पात्रं प्रवेशयितुमाह—पित्रोरिति । अहम्, जीमूतवाहनो यथा=जीमूतवाहन इव, पित्रोः=मातापित्रोः, शुश्रूषाम्=परिचर्याम् [ 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासना' इत्यमरः ], विधातुम्=कर्तुम्, क्रमागतम्=क्रमेण वंशपरम्परया, आगतं प्राप्तम्,

---

सूत्रधार—( निर्वेद सहित) क्या माता पिता मुझे छोड़ कर वन को चले गए ? तो अब (मेरे लिये) क्या उचित है ? (सोच कर) अथवा, माता-पिता के चरणों की सेवा का सुख छोड़ कर मैं घर में कैसे रहूँ ? क्योंकि—

मैं आज ही जीमूतवाहन की तरह कुल-परम्परा से प्राप्त ऐश्वर्य को लात मार कर माता-पिता की सेवा करने के लिये वन में जाता हूँ ॥५॥

( दोनों निकल जाते हैं ).

प्रस्तावना

[ ततः प्रविशति नायको विदूषकश्च ]

**नायकः**—[ सनिर्वेदम् ] वयस्य आत्रेय !

---

**ऐश्वर्यम्**=सम्पदम्, **त्यक्त्वा**=विहाय, **अद्यैव**=एतस्मिन्नेव काले, विलम्ब-मकृत्वेत्यर्थः, **वनम्**=तपोवनम्, **यामि**=गच्छामि, विविधैश्वर्यसम्पद्विशिष्टो जीमूतवाहनोऽपि यदि पितृशुश्रूषार्थं सर्वं स्वराज्यादिकं परित्यज्य वनं व्रजति तर्हि स्वल्पसम्पदा मया तु अवश्यमव्रजितव्यम् इति भावः । अत्र जीमूत-वाहन उपमानम्, अहंपदबोध्यः सूत्रधारः उपमेयः, पितृशुश्रूषार्थैश्वर्यत्याग-पूर्वकं वनगमनं समानो धर्मः, यथेत्युपमावाचकमित्येवमुपमानादीनां चतु-र्णामप्युपादानात् पूर्णोपमेयम् । तदुक्तं दर्पणे—

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद् वाच्यमियं पुनः ॥

अत्र जीमूतवाहनोऽयासीत्, अहं तु यामीत्येवमुपमानोपमेययोः पुरुष-भेदाद् भग्नप्रक्रमत्वमुपमादोषस्तु न शङ्क्यः । कालस्य समानधर्मत्वाविवक्षणाद् यानमात्रस्य तत्त्वात् । भावार्थोक्तरीत्या कैमुत्येनार्थसंसिद्धेर्व्यञ्जनादर्थापत्तिरिह व्यज्ञ्यधा, परं सा कुत इति वाच्यार्थोपपादकत्वाद् गुणीभूता । पथ्यावक्त्रं छन्दः । 'युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्तितम्' । क्वचित्तु 'विधातुं पितृ-शुश्रूषाम्' इति पाठः । तत्र श्लोकश्छन्दः । तदुक्तं श्रुतबोधे—

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ।
षष्ठं गुरु विजानीयाद् एतत् पद्यस्य लक्षणम् ॥

**इति**=कथा प्रस्तुत्य, **निष्क्रान्तौ**=निर्गतौ, सूत्रधारो नटी चेत्यर्थः । 'पुमान् स्त्रिया' इति पुंसः एकशेषः । तदुक्तम्—

एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् ।
प्रस्तावनान्ते निर्गच्छेत् ततो वस्तु प्रपञ्चयेत् ॥

**प्रस्तावना**=प्रस्ताव्यते उपस्थाप्यते भाविकथाप्रसङ्गो यया यस्यां वा सा—समाप्तेति शेषः । इयमेव प्रस्तावना आमुखस्थापनाशब्दाभ्यामपि व्यपदिश्यते । अतएव क्वचित् पुस्तकेषु आमुखमित्येव पाठः । अत्र 'तद् यावद्'इत्यारभ्य 'यथा जीमूतवाहन ' इति यावत्प्रस्तावनाग्रन्थो बोद्धव्यः । तल्लक्षणं यथा—नटी विदूषको वापि पारिपार्श्विक एव वा ।

---

( नायक और विदूषक का प्रवेश )

**नायक**—( निर्वेद के साथ ) सखे ! आत्रेय !

मैं यह समझता हूं कि युवावस्था राग (विषय-वासना) का मूल है ।

*रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः*
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ।

---

सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥

इयं च प्रस्तावना—उद्धातकादिभेदेन पञ्चविधा । तास्वियमवलगितनाम्नी वेदितव्या । तदुक्तं दर्पणे—

यत्रैकत्र समावेशात् कार्यमन्यत् प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥

अत्र सूत्रधारेण स्वतपोवनप्रस्थानमुदाहरता सादृश्यविधया प्रधानपात्रस्य जीमूतवाहनस्य सूचनं नाम कार्यान्तरं प्रसाधितम् । 'नासूचितस्य प्रवेशः' इति रूपकनियमानुरोधादावश्यकं चैतद् ।

अथ सपरिजनं नायकं प्रवेशयति—**ततः** इति । **ततः**=सूत्रधारनिर्गमानन्तरम्, **नायकः**=प्रकृतनाटकस्य नेता जीमूतवाहनः । **विदूषकः**=स्ववेषभाषाद्यैर्नायकस्य मनोरञ्जकस्तन्मित्रम् । तत्र नायकलक्षणं यथा—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही ।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता ॥

स च नायको धीरोदात्तादिभेदेन चतुर्धा भवति । अत्रत्यनायकस्तु जीमूतवाहनो धीरोदात्तः । तल्लक्षणं यथा—

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥

विदूषकलक्षणं यथा—

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ॥

**सनिर्वेदमिति**–निर्वेदो विषयेष्वलं प्रत्ययः, तेन सह यथा स्यात् तथा । **वयस्येति**–विदूषकस्य सम्बोधनम्, मित्रेति तदर्थः । तदुक्तं दर्पणे—

वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।

---

'यह नश्वर है' इस बात से भी मैं अपरिचित नहीं, यह (युवावस्था) भले बुरे काम की जाँच में रुकावट है, इस बात को संसार में भला कौन नहीं जानता ? इस प्रकार निन्दनीय और इन्द्रियों के अधीन भी यह जवानी

एवं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद् यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥६॥

**आत्रेय** इति विदूषकस्य प्रातिस्विकं नाम गोत्रनाम वा। अत्रेरपत्यमात्रेय, ढक्। सम्बुद्धौ सुलोपः।

अथ जीमूतवाहनोऽनेकैर्दोषैर्निन्द्यस्यापि यौवनस्य पितृशुश्रूषया साफल्यं वाञ्छन् कथयति—**रागस्येति**। **यौवनम्**=युवावस्था, **रागस्य**=विषयाभिलाषस्य, **आस्पदम्**=प्रतिष्ठामूलमिति यावद् [आस्पदं प्रतिष्ठायाम्] अस्ति, **इति, अवैमि**=सम्यग् जानामि, अहमिति शेष। इदं यौवनं **ध्वंसि**=क्षणभङ्गुरम्, अस्ति, इत्यपि, **मे**=मम जीमूतवाहनस्य, **प्रत्ययः**=विश्वास, ['प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमर] न, इति **न**, अपितु विश्वास एव। अहमिदं दृढं विश्वसिमि यत् क्षणभङ्गुरमिदं यौवनम्—इति भाव। प्रकृतार्थे दार्ढ्यबोधनाय नञ्द्वयोपादानम्, [इदमत्र बोध्यम्—सर्वं क्षणिकम्, सर्वं स्वलक्षणम्, सर्वं दुःखम्, सर्वं शून्यमिति बौद्धानां चत्वार्यार्यसत्यानि मतानि। एतेषां चतुर्णां तत्त्वतो ज्ञाता एव बुद्धतां प्राप्तो बोधिसत्त्व इत्युच्यते। जीमूतवाहनोऽपि जातकेषु बौद्धग्रन्थेषु बोधिसत्त्वतया व्यपदिष्ट इति तेन किं नाम यौवनस्य, अपितु वस्तुजातस्यैव क्षणिकता विदितैव। ध्वंसिशब्दे ध्वंसतेर्णिनि', ध्वंसोऽस्यास्तीति वा ध्वंसशब्दाद् 'अत इनिठनौ' इति इनिर्बोध्यः] **वा**शब्द समुच्चये, किं चेत्यर्थ। **क्षितौ**=पृथिव्याम्, **कः**=पुरुष, इदं यौवनं **कृत्याकृत्यविचारणासु**=इदं कृत्य कर्तव्यम्, इदम् अकृत्यम् अकर्तव्यम्, तयो विचारणासु विवेकेषु, कर्तव्याकर्तव्ययोर्विविच्य निर्णये—इति भाव, **विमुखम्**=पराङ्मुखम्, [द्वितीयान्तं वेत्तीति वेदनक्रियाया कर्म, यौवनस्य विधेयविशेषणम्] **न वेत्ति**=न जानाति[1] यौवने रागान्धो जनः सदसती विवेक्तुं नार्हतिइति सर्वेऽपि पण्डिता अपण्डिता वा जानन्त्येवेति भाव.। [अथवा विमुखमित्यस्याग्रे—इति शब्दमध्याहृत्य, यौवनं कृत्याकृत्यविचारणासु विमुखमिति को न वेत्ति—इत्येवं योजना कर्तव्या—इयास्तु विशेषोऽत्र पक्षे—इति शब्देन कर्मण उक्तत्वाद् विमुखमिति प्रथमान्तपदं बोध्यम्] **एवम्**=पूर्वोक्तेन प्रकारेण, **इन्द्रियवशम्**=इन्द्रियाणां चक्षुरादीनाम्, वशम्—अधीनम्, शब्दादि

(मेरे) आनन्द के लिये (पर्याप्त) हो सकती है, यदि इसी प्रकार भक्ति पूर्वक माता-पिता की सेवा करते हुए व्यतीत हो ॥६॥

१ मीप्सितफल.

विदूषकः—[सरोषम्] भो वअस्स ! ण णिव्विण्णो एव तुमं एत्तिअं कालं पदाणं जीवन्तमुआणं कदे इमं ईदिसं वणवासदुक्खं अणुहवन्तो। ता पसीद दाणिं पि दाव। गुरुअणसुस्सूसाणिव्वंधादो णिअत्तिअ इच्छापरिभोगरमणिज्जं रज्जसुहं अणुहवीअदु।

भो वयस्य ! न निर्विण्ण एव त्वमेतावन्तं कालमेतयोर्जीव-

---

विषयलम्पटमिति यावत्, अतएव निन्द्यमपि=निन्दायोग्यमपि, इदं यौवनम्, यदि, इत्थमेव=वर्तमानेन प्रसरेणैव, भक्त्या=पूज्येष्वनुरागो भक्तिः, तया, पितरौ=पितरं मातरं च, शुश्रूषमाणस्य=परिचरतः [शृणोतेः सन्, 'ज्ञाश्रुस्मृदृशां सनः' इति सन्नन्तादात्मनेपदे शानच्] मे=मम (यौवनसम्बन्धे षष्ठी) याति=व्यत्येति, तर्हि प्रीत्यै=आत्मप्रसादाय, भवेत्, संभावनायां लिङ्। अनेकदोषदूषितस्यासारस्यास्य यौवनस्य वृद्धपितृचरणशुश्रूषण एव विनियोग उचितः, तदैवास्यात्मप्रीतिजननेन साफल्यं संभाव्यते, अन्यथा व्यर्थमेवेदं स्याद्—इति भावः। क्वचित्तु 'ईप्सितफलप्राप्त्यै' इति पाठः। तस्य—ईप्सितस्य=प्राप्तुमिष्टस्य, फलस्य=आत्मप्रीतिरूपस्य, प्राप्त्यै=लाभाय—इत्यर्थो योज्यः।

अत्र जीमूतवाहनगतः शमः प्राधान्येन व्यज्यते, यौवनस्यानित्यताद्यालम्बनम्, पित्रोर्वार्धक्यदर्शनं रमणीयवनादि चोद्दीपनम्, वृद्धपितृशुश्रूषणेन यौवनयापनेच्छादयोऽनुभावाः, स्मृतिमत्यादयो व्यभिचारिणः। तत्र शमस्य लक्षणं यथा—

शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम्।

रागास्पदतयैव निन्द्यत्वे सिद्धे ध्वंसित्वादिकारणान्तरोपन्यासात् समुच्चयालङ्कारः। शार्दूलविक्रीडितं छन्दः॥६॥

अथ वैषयिकसुखलम्पटो विदूषकः स्वस्वामिनं विषयविरक्तं विज्ञाय चविषयोपभोगं सान्तरायमाशङ्कमानो रोषं नाटयन् नायकं वृद्धपितृशुश्रूषणाद्

---

विदूषक—(क्रोध से) हे मित्र ! तुम इन मृतप्राय बूढ़ों की खातिर तने (अधिक समय तक वनवास का ऐसा (घोर) दुःख सहते हुए भी न नहीं आये ? इसलिये अब भी मान जाओ और माता पिता की सेवा के ट को छोड़ कर इच्छा पूर्ण करने वाला मनोहर राज्यसुख भोगो।

न्मृतयोः कृते इदमीदृशं वनवासदुःखमनुभवन्?। तत् प्रसीद इदानीमपि तावत्, गुरुचरणशुश्रूषानिर्बन्धात् निवृत्य इच्छापरिभोगरमणीयं राज्यसुखमनुभूयताम्।

**नायक**—वयस्य ! न सम्यगभिहितं त्वया। कुतः ?—

---

विरम्य राज्यसुखमुपभोक्तुमनुनयति–**भो वयस्येति**। वयस्येति विदूषकेण नायकमबोधन रूपकनियमानुरोधात्। तदुक्तम्—

*'राजर्षिभिर्वयस्येति तथा विदूषकेण च'*। इति।

**त्वम्**=जीमूतवाहन **एतावन्तम्**=इयन्तम्, **कालम्**, अतिदीर्घकालमिति यावत्, **जीवन्मृतयोः**=जीवन्तौ मृतावितिजीवन्मृतौ तयोः, यथाकथञ्चित् सतोरपि वार्धक्यातिशयात् कायस्पन्दमपि कर्तुमशक्तयोरित्यर्थः, एतयोर्द्वयोः, **कृते**=निमित्तम्, **इदम्**=ईदृशम्-अनुभवैकगोचरं त्वादृशराजपुत्रायोग्यम्, वनवासस्य दुःखम्, अनुभवन्, न निर्विण्ण एव—न विरक्तोऽसि किम् ? प्रियस्य लाभप्रदस्यापि वस्तुनश्चिरसेवनं तद्विषये वैरस्यमुपजनयति, तव तु

यातिदीर्घकालं यावद् राज्यसुखापेक्षणम्, अनेकवनवसतिक्लेशसहनं च ते निर्वेदस्य हेतुरस्तीति भावः।] **तद्**—यस्माद् यौवनस्य भूयान् भागस्त्वया मृतकल्पयोर्निष्फलशुश्रूषयोः पित्रोः परिचर्यायामतिवर्तितस्तस्माद्-इत्यर्थः **प्रसीद**=अस्माद् राज्यसुखोपेक्षणाद् विरम्य प्रसन्नो भव। **इदानीमपि तावत्**=*यावदिदं ते यौवनं नात्येति*। **गुरुचरणेति**=*गुरुचरणयोः* शुश्रूषाय निर्बन्धः आग्रहः, तस्माद्, **निवृत्य**=विरम्य [ 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यनेन पञ्चमी ]पितृचरणपरिचर्याग्रहं परित्यज्येत्यर्थः। इच्छया-यथेच्छमित्यर्थः, परिभोगः–विषयरसास्वादः, तेन रमणीयम् मनोहरम्, **राज्यसुखम्, अनुभूयताम्**=उपभुज्यताम्।

नायको विदूषकोक्तेरनौचित्यं दर्शयति–**नेति**। यत् त्वया गुरुचरणपरिचरणाद् विरमणीयं राज्यसुखे च रमणीयमित्युपदिष्टं तदनुचितमित्यर्थः।

कुत इति जिज्ञासितं हेतुमुपन्यस्यति–**तिष्ठन्निति**। **पितुः**=जनकस्य,

---

**नायक**—मित्र ! आपने ठीक नहीं कहा। क्योंकि,

तिष्ठन् भाति पितु पुरो भुवि यथा सिंहासने किं तथा ?
यत् संवाहयत. सुखं तु चरणौ तातस्य किं राजके ?
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरोः ?
आयासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद् गुणः ? ॥७॥

पुरः=अग्रे, भुवि=अनास्तृते भूतले, तिष्ठन्, पुत्र इति शेष, यथा, भाति=शोभते, तथा, सिंहासने=राजासने, तिष्ठन्, भाति, किम् ? न भातीत्यर्थ । तातस्य=पितुः, चरणौ=पादौ, संवाहयतः=श्रमापनोदार्थं निपीडयतः, पुत्रस्य यत्, सुखं भवति, तद्, राजके=[राजैव राजक, तस्मिन्, स्वार्थे कन्] राज्ञि सम्भवति किम् ? न सम्भवति—इत्यर्थ । विविधराज्यचिन्ताग्रस्ततयाऽनुकम्पनीय राज्ञि दुर्घटं तत् सुखमिति भाव । कना राज्ञोऽनुकम्पनीयत्व दैन्यं च सूच्यते । क्वचिद् राजकमिति पाठ । तत्र संवाहयत इति पदं 'चरणौ' 'राजकम्' इत्युभाभ्यामप्यन्वेति । श्लिष्टं च तन्मन्तव्यम् । एकत्र संवाहन निपीडनम्, अपरत्र—संवहनाय प्रेरणम् । तथा चेयं योजना—तातस्य चरणौ संवाहयतो निपीडयत, यत् सुख तद् राजक राजसमूहम् [समूहे क प्रत्यय ], संवाहयतः=निजाज्ञा सवोढु प्रेरयत किम् ? पितृचरणसंवाहनजन्य सुख राजभिरुह्यमानाज्ञाचक्रस्य चक्रवर्तिनोऽपि दुर्लभमिति भाव । गुरोः=पितु, भुक्तोज्झिते=[पूर्वं भुक्त पश्चादुज्झितमिति भुक्तोज्झितम्, तस्मिन् । 'पूर्वकालैक'त्यादिना समास ] भुक्तावशिष्टे—उच्छिष्ट इति भाव । या धृतिः=संतोष, अस्ति, असौ धृतिः, भुक्ते=गृहीतास्वादे, भुवनत्रये=भुवनानां त्रये, अस्ति, किम् ? नास्तीत्यर्थं । भुवनत्रयराज्योपभोगजन्याऽपि प्रीति पितृभुक्तावशिष्टभोजनजन्या प्रीतिं नातिशेते इति तात्पर्यार्थ । उज्झितगुरोः=उज्झितौ त्यक्तौ, गुरू—मातापितरौ येन

जिस प्रकार मनुष्य पिता के सम्मुख पृथिवी पर खड़ा हुआ शोभा देता है, क्या वैसे सिंहासन पर बैठा हुआ दे सकता है ? जैसा सुख पिता के चरण दबाने वाले को मिलता है, क्या वैसा अनेक राजाओं के ऊपर शासन करने वाले को मिल सकता है ? क्या तीन लोकों का आनन्द भोगने में वह शान्ति मिल सकती है, जो पिता का उच्छिष्ट खाने में मिलती है ? जिसने अपने पिता को छोड़ दिया है, उसके लिए राज्य केवल मार ही है । क्या उससे कोई लाभ है ? ॥७॥

१ राजकम् । २ तेना । ३ 'धृतिर्योगान्तरे धैर्ये धारणाध्वरतुष्टिषु' इति विश्व ।

**विदूपक**—[आत्मगतम्] अह्मो से गुरुअणसुस्सूसाणुराओ !। [विचिन्त्य] भोदु ता एदं पि दाव अण्णं चिअ भणिस्सं। [प्रकाशम्] भो वअस्स ! ण क्खु अहं रज्जसोक्खं ज्जेव केवलं उद्दिसिअ एव्वं भणामि, अण्ण पि दे करणीज्जं अत्थि ज्जेव।

अहो अस्य गुरुजनशुश्रूषाऽनुरागः ! । भवतु तदेतदपि तावत् अन्यदिव भणिष्यामि। भो वयस्य ! न खल्वहं राज्यसुखमेव केवलमुद्दिश्य एवं भणामि, अन्यदपि ते करणीयमस्त्येव।

---

तादृशस्य पुरुषस्य, **राज्यम्**, **आयासः**=क्लेशमात्र खलु। **तत्र**=तस्मिन् तिरस्कृतगुरो राज्ञो राज्ये, **कश्चित्**=कोऽपि, **गुणः**=आत्मप्रीतिकर वस्तु, **अस्ति किं**, नास्तीत्यर्थ। प्रजाभिर्नृपति पितृवन्माननीयो भवति, यदि नृपति रेव स्वपितरौ तिरस्कुर्यात्, तर्हि तत् प्रजा अपि तमनुसरन्त्य स्वगुरून् तिरस्कुर्नेत्यो भर्म्यपशात् प्रच्यवेरन्। यत्र च राज्ये प्रजा उत्पथगामिन्यस्तद् राज्य दु खमूलमेव भवतीति सुष्ठूक्त 'तत्रास्ति कश्चिद् गुण' इति।

यद्यप्यत्र पद्ये पितृविषयो रतिभाव प्राधान्येन व्यज्यते, तथापि स शमानुभावस्य पितृशुश्रूषणस्याङ्गतया तमेव (शममेव) परिपुष्णाति। किं चात्र पितृपरिचरणत्यागस्य विषयसुखभोगस्य चानौचित्य प्रस्तुतमप्रतिपाद्य तत्कारणमप्रस्तुत प्रतिपादितमित्यप्रस्तुतप्रशसालङ्कार। वृत्त शार्दूलविक्रीडितम्॥७॥

**आत्मगतम्**='यत्तु श्राव्य न सर्वस्य तदात्मगतमुच्यते'। विदूषको नायकस्य कथमप्यविकम्पनीय पितृचरणपरिचर्यानुरागमनुभूय चिन्तयते—**अहो** इति। अहो इति विस्मयार्थको निपात। 'अहो हा च विस्मये' इत्यमर। गुरुजनस्य शुश्रूषायामनुराग प्रीति। **भवत्विति** आस्ता तावदस्य गुरुचरणानुराग, **अन्यदिवेति**, इवेति वाक्यालङ्कारे, नाय पितृशुश्रूषानिन्दया राज्यसुखप्रलोभनेन च वनवासाद् निवर्तयितु शक्य। तद अन्यदेव किंचिद् भणिष्यामि, येनाय ततो निवर्तेतेति भाव। **प्रकाशम्**=सर्वजनश्रवणयोग्य यथा स्यात्। तदुक्तम्–'सर्वश्राव्य प्रकाश स्यात्'। **न खल्विति**, अह केवल राज्य सुखमेव उद्दिश्य–निमित्तीकृत्य, एवम्–'त्वया पितृचरणशुश्रूषातो निवर्तनीय

---

**विदूषक**—( मन में ) धन्य है इसका माता पिता की सेवा में प्रेम ! ( सोच कर ) अच्छा, होवे यह भी, मै और तरह से इससे कहूँगा। ( प्रकट में ) हे मित्र ! मैं केवल राज्य के सुख को लक्ष्य करके ही ऐसा नहीं कह रहा। ( पितृ शुश्रूषा से अतिरिक्त ) और भी तो तुम्हारा कर्तव्य है।

**नायकः**—[सस्मितम्] वयस्य ! ननु कृतमेव यत्करणीयम् । पश्य—

**न्याय्ये वर्त्मनि योजिताः प्रकृतयः सन्तः सुखं स्थापिता**
**नीतो बन्धुजनस्तथात्मसमतां राज्ये च रक्षा कृता ।**

---

वनवासश्च त्वङ्कृत्य' इति, न भणामि, किन्तु अन्यदपि–पितृचरणशुश्रूषातिरिक्तमपि, राज्ञस्ते राज्यनिरीक्षणादिकं करणीयमस्त्येवेति कृत्वा भणामीति भावः ।

**नन्विति**–मया नृपतियोग्यं यत्करणीयं कर्तव्यमस्ति, तत् कृतमेव–अनुष्ठितमेव । तदेव श्रावयितुं विदूषकमभिमुखीकरोति–**पश्येति** ।

अथ स्वकृतं करणीयं वर्णयति–**न्याय्य** इति । **प्रकृतयः**=प्रजाः, राजशासनाङ्गभूताः सचिवादयो वा, **न्याय्ये**=न्यायादनपेते न्यायोचिते स्वस्वाधिकारानुरूपे [ 'धर्मपथ्यर्थन्यायादनपेते' इति न्यायशब्दाद् यत् ], **वर्त्मनि**=मार्गे कर्मणीति यावत्, **योजिताः** =नियोजिताः, सन्ति मयेति शेषः । [मया पूर्वमेव तथा विहितं यथा प्रजासु शासनारूढे सचिववर्गे च न कश्चिदप्युच्छृङ्खलमाचरति, इति भावः ], **सन्तः** =विद्वांसः, **सुखम्**=दानमानादिभ्या सुखपूर्वकं निरुपद्रवं च यथा स्यात् तथा, **स्थापिताः** , [ राज्योन्नतिहेतवो विद्वांसोऽपि दानमानादिना प्रजोपद्रवपरिहारेण च तथा मया सतोषिताः सन्ति, यथा ते मद्राज्यं विहाय नान्यत्र गन्तुं कामयेरन्निति भावः ] **तथा**=पूर्वक्रमप्रकारेणैव, **बन्धुजनः** =ज्ञातयः सगोत्रा वा, **आत्मसमताम्**=ऐश्वर्यादिवितरणेन स्वतुल्यताम् **नीतः**=प्रापितः ।[ प्रायः ईर्ष्यालवो राजसम्बन्धिन एव राजानमुन्मूलयितुं तद्विरुद्धं गुप्तमभिमन्त्रयन्ते, ततोऽपि मे भयं नास्ति, तेषां स्वतुल्यैश्वर्यवितरणेन सतोषितत्वादिति भावः ] **किं च राज्ये रक्षा कृता**=दुर्गनिर्माणादिना शत्रोराक्रमणादपि राज्यं सुरक्षितमिति भावः, **दत्तमनोरथाधिकफलः** =दत्तम्–वितीर्णम्, मनोरथाद्–ईप्सितादपि, अधिकं फलं येन तादृशः, **कल्पद्रुमोऽपि**=कल्पवृक्षोऽपि, **अर्थिने**=याचकाय, **दत्तः**=वितीर्णः [ सम्पत्प्राप्तेरिदमेव फलं यत् तस्याः (सम्पदः ) पात्रसात्करणम्,

---

**नायक**—मित्रवर ! मैंने जो कुछ करना था, कर लिया । देखो,

प्रजा अथवा मन्त्रियों को न्याय के मार्ग पर लगा दिया है, श्रेष्ठ पुरुषों को सुखी कर दिया है, बन्धु जनों को अपने तुल्य बना दिया है राज्य में

---

१. 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे' इति मेदिनी । २ 'अर्थी पुमान् याचके स्यात् सेवके च विवादिनि'–इति मेदिनी ।

दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने
किं कर्तव्यमतः परं कथय वा यत्ते स्थितं चेतसि ॥८॥

**विदूषकः**—भो वअस्स ! अच्चन्तसाहसिओ मदङ्गहदओ दे पडिवक्खो। तस्सिं अ समासण्णट्ठिदे दे पहाणामच्चसमधिट्ठिदं पि ण तुए विणा रज्जं सुत्थिरं त्ति पडिभादि।

भो वयस्य ! अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः।

---

तदपि मया राज्यप्राप्त्यनन्तरं सम्यगनुष्ठितम्, किमन्यत्, वनं जिगमिषुणा पित्रोपायनीकृत ईप्सितादप्यधिकफलदः कल्पतरुरपि मया याचकाय वितीर्णः। जीमूतवाहनः स्वपित्रा दत्तं कल्पतरुं तद्याचिने भिक्षवे वितीर्णवानिति बौद्धजातकेपूल्लिखितमत्राप्यनुसन्धेयम्। तदुक्तं क्षेमेन्द्रेण बृहत्कथामञ्जर्याम्—

त सर्वगुणसम्पन्नमभिषिच्यात्मजं पिता।
कल्पवृक्षं ददावस्मै नानासिद्धिसुधाफलम्॥
कान्ताकटाक्षविक्षेपचपलं यौवनं धनम्।
जीवितं चेति स ध्यात्वा तमर्थिभ्यस्तरुं ददौ॥ इति।]

**अतः**=अस्मात् पूर्वनिर्दर्शितात्, **परम्**=अन्यत्, **किं कर्तव्यम् अस्ति**? ममेति शेषः [नातोऽन्यत् किमपि कर्तव्यमवशिष्यत इति भावः], **वा**= अथवा, **यत्**, **ते**, **चेतसि**=मनसि, **स्थितम्**, मम कर्तव्यान्तरमस्ति, तत्, **कथय**। क्वचित्तु 'वा' स्थाने 'रे' इति पाठः। स च सूर्यसम्बोधने निपातः।

अत्रापि सर्वथात्मनः कृतकृत्यताप्रतिपादनेन जीमूतवाहनस्य शम एव पोष्यते। शार्दूलविक्रीडितं छन्दः॥८॥

अथ विदूषको जीमूतवाहनस्य वनवासत्यागे निमित्तान्तरमुपन्यस्यति-**भो** इति। **अत्यन्तसाहसिकः**=सहो बलम्, तेन प्रवर्तत इति साहसिकः, अत्यन्तं साहसिक इत्यत्यन्तसाहसिकः अतिसाहसवान्, **मतङ्गहतकः**=मतङ्गो हतक इति मतङ्गहतकः-['कुत्सितानि कुत्सनैः'-इत्यनेन समासः] दुष्टो मतङ्गनामको राजा, **ते**=तव **प्रतिपक्षः**=शत्रुरस्ति। अयं भावः-मतङ्गः खलु तव

---

रक्षा का प्रबन्ध भी कर दिया है, माँगने वालों को उनकी कामना से बढ़ कर फल देने वाला कल्पवृक्ष तक दे दिया है। इसके अतिरिक्त और क्या कर्तव्य बाकी है ? और जो तुम्हारे मन में है, उसे कहो ॥८॥

**विदूषक**—हे मित्र ! अत्यन्त साहसी दुष्ट मतङ्ग तुम्हारा शत्रु है। उसके निकट रहते हुए, प्रधान मन्त्री के शासन में होता हुआ भी, तुम्हारा

तस्मिंश्च समासन्नस्थिते ते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थिरमिति प्रतिभाति।

नायकः—धिङ् मूर्ख! मतङ्गो राज्यं हरिष्यतीति शङ्कसे?

विदूषकः—अघ इं? अथ किम्?

नायकः—यद्येवम्, तत् किं न स्यात्? ननु स्वशरीरात् प्रभृति

शत्रुरस्ति, स हि अत्यन्तमाहमिको न कार्याकार्यं विचारयति, प्रत्युत कार्याकार्यविचारणमलसानां कृत्यमिति मनुते। अत स राजधानीं त्वद्रहितां निरीक्ष्य यदा कदाप्यवसरं लब्ध्वा सहसा अभिषेणयेदिति। तस्मिन्=मतङ्गे, समासन्नस्थिते=समासन्ने समीपवर्तिनि स्थिते, प्रधानेनामात्येन-सचिवेन, अधिष्ठितम्-कृतशासनम्, अपि, ते, राज्यम्, त्वया=भवता जीमूतवाहनेन, विना, न सुस्थिरम्=न सुष्ठुतया स्थायि, इति प्रतिभाति=प्रतीयते। स हि राजशून्यायां राजधान्यामवश्यं स्वप्रणिधिभिः प्रकृत्युपजापमुत्पादयेत्, अतस्त्वया वनवासं परित्यज्य राजधान्यां सन्निधातव्यमेव। स्वसमीपे अमात्येन ज्वलति राज्ञी पुत्रं दत्त्वा नौदासनीयं नीतिविरुद्धत्वादिति भावः। अथ किमितिपदद्वयं स्वीकारे। मतङ्गस्तव राज्यं हरिष्यतीति शङ्का समाश्रयेवेति भावः। नायकोक्तौ यद्येवमिति-यदि, एवम्-मतङ्गो मम राज्यं हरेदपि, तत्-तर्हि, किं न स्यात्-अस्मदीप्सितं तत् किं न भवेत्, इदमपि मतङ्गेन राज्यहरणम्-ममाभीष्टमेव सम्पद्येतेति भावः। तदेव समर्थयते-नन्वित्यादि। स्वशरीरात् प्रभृति-प्रभृतिशब्द आरभ्यर्थे, स्वशरीरादारभ्य, सर्वं वस्तुजातम्, मया, परार्थमेव ननु स्वार्थमपि, परिपाल्यते-रक्ष्यते, ननु-निश्चयेन। ननु यदि ते सर्वं परार्थमेव तर्हि राज्यमिदं परस्मै कुतो न दीयते-इत्याशङ्कामपनोदयितुमाह-यत्तु इति। तु-किन्तु, राज्यं यत् स्वयम्-आत्मनैव न दीयते-परस्मै न समर्प्यते, तत्, तातस्य-पितुः, अनुरोधात् अनुरोधः-कामः तस्माद्-तातो मे राज्यमिदं कामयते, अतो न स्वयं दीयते। पितुरनुरोध एव परस्मै राज्य-

राज्य, तुम्हारे बिना सुस्थिर नहीं है, ऐसा मुझे जान पड़ता है।

नायक—धत् बेवकूफ! तुमें डर है कि मतङ्ग राज्य छीन लेगा?

विदूषक—और क्या?

नायक—यदि ऐसा हो भी तो इससे मेरा कौन सा अभीष्ट सिद्ध नहीं

१ क्वचित्पुस्तके—'विदूषकः—अघ इं (अथ किम्)' इति पाठो नास्ति।

सर्वं परार्थमेव मया परिपाल्यते । यत्तु स्वयं न दीयते, तत् तातानुरोधात्[1] । तत् किमनेनावस्तुना चिन्तितेन? वरं तताज्ञैवानुष्ठिता । आज्ञापितश्चास्मि तातेन, यथा—'वत्स ! जीमूतवाहन ! बहुदिवसपरिभोगेण दूरीकृतसमित्कुशकुसुममुपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्त्तते । तदितो

वितरणे प्रतिबन्धक , वस्तुतस्तु नाहं तुच्छमिद राज्यं मात्रयाऽपि कामय इति भाव । **तदिति,** अवस्तुना—तुच्छवस्तुना । तुच्छस्यास्य राज्यस्य चिन्तन व्यर्थमेवेत्यर्थ । **वरमिति**—एतद्राज्यपालनेन मया तताज्ञैव सम्यक् परिपालिता, नात्र ममाल्पशोऽप्यासक्तिरिति भाव । अथवा अलमनया तुच्छराज्यचिन्तया, एतदपेक्ष्य पितुराज्ञापालनमेव वरम् इति भाव । एतेन स्वशरीराद्यपेक्षणेन राज्य प्रत्यवस्तुत्वभावनया तच्चिन्ताया अप्यसहनेन च जीमूतवाहनस्य शम परा कोटिमारोपित कविना । अथ नायक पितुराज्ञामाह—**आज्ञापितश्चे**त्यादिना । **इदम्**=वर्तमानम्, **स्थानम्, बहुदिवसपरिभोगेण**=बहूनि दिवसानि चिरमिति यावत्, परिभोग उपयोग , तेन, [द्वितीयायोगविभागात् समास ] **दूरीकृतसमित्कुशकुसुमम्**=दूरीकृतानि साकल्येनोपयुक्ततया लुप्तानि समिधो यज्ञियकाष्ठानि, कुशा दर्भा , कुसुमानि पुष्पाणि च यत्र तादृशम्, **उपभुक्तमूलफलकन्दनीवारप्रायम्**=मूलानि च, फलानि च, कन्दाश्च, नीवाराश्च—मुनिधान्यानि च, इति मूलफलकन्द नीवारा , उपभुक्ता स्वोपयोगमानीता , मूलफलकन्दनीवारा , प्रायेण बाहुल्येन यत्र तथाभूतम् [ अत्र उपभुक्तप्रायमूलफलकन्दनीवारमित्युचित पाठ ] **तत्**=तस्माद्, **इत**=अस्मात् स्थानात्, **मलयपर्वतं गत्वा,** तस्मिन्, **किञ्चित्**=क्वमपि, **निवासयोग्यम्**=समिदादीना यज्ञवस्तूनाम, मूलादीनां च प्राणयात्रोपयोगिना पदार्थाना प्राचुर्येण निवासार्हम्. **आश्रमपदम**=आश्रमस्थानम्, **निरूपय=**पश्य–अन्विच्छेति यावदिति ।

होगा। अपने शरीर से लेकर सभी कुछ मैं दूसरों के लिये ही धारण करता हूं। जो मैं ( राज्य को ) स्वय ही नहीं देता, वह केवल पिता जी के अनुरोध से। इसलिए इस तुच्छ वस्तु की चिन्ता से क्या लाभ ? पिता की आज्ञा का पालन हो, यही अच्छा है। पिता ने मुझे आज्ञा दी है कि 'बेटा जीमूतवाहन !

[1] धु

मलयपर्वतं गत्वा किञ्चित् तस्मिन् निवासयोग्यमाश्रमपदं निरूपय' इति । तदेहि मलयपर्वतमेव गच्छावः ।

विदूषकः—जं भवं आणवेदि । एदु भवं । [इत्युभौ परिक्रामतः]

यद् भवानाज्ञापयति । एतु भवान् ।

विदूषकः—[अग्रतोऽवलोक्य] भो वअस्स ! पेक्ख पेक्ख । एसो क्खु सरसघणसिणिद्धचंदणवणुच्छङ्गपरिमिलणलग्गबहुलपरिमलो विमलतडणिवडणज्जरिज्जंतणिज्झरुच्छलितसिसिरसीअरासारवाही पढमसङ्गमोक्कण्ठिदपिआकण्ठग्गहो विअ मग्गपरिस्समं अवणअंतो रोमञ्चेदि पिअवअस्सं मलअमारुदो ।

भो वयस्य ! प्रेक्षस्व प्रेक्षस्व । एष खलु सरसघनस्निग्धचन्दनवनोत्सङ्गपरिमिलनलग्नबहुलपरिमलो विमलतटनिपतनजर्जराय-

---

अत्र चिरनिवासेन समिदादीनां मूलादीनां चाल्पत्वं जातम्, अतो मलयपर्वते प्रचुरसामग्रीकं किमप्याश्रमोचितं स्थानं मार्गयेति पित्राज्ञप्तमिति भावः । तत्=तस्मात्, एहि=आयाहि मलयपर्वतम्=मलयाख्यं गिरिमेव गच्छावः, आश्रमोचितस्थानान्वेषणार्थमिति शेषः । विदूषकः स्वीकरोति–यद् भवानिति । अथ प्राप्तौ मलयगिरिमिति सूचयितुं विदूषको नायकं संबोध्य मलयपवनं वर्णयति–भो वयस्येति । प्रेक्षस्व प्रेक्षस्व=पश्य पश्य, सरसेति=

---

बहुत दिनों तक उपयोग करने से इस स्थान पर ( अब ) समिधा, कुशा और पुष्प समाप्त हो गए हैं और कन्द, मूल, फल और नीवार ( मुनि-धान्य ) भी प्रायः नहीं रहे । अतः मलयपर्वत पर जाकर रहने योग्य आश्रम के लिये कोई स्थान देखो ।' इसलिये, आओ मलयपर्वत पर ही चलें ।

विदूषक—जैसी आपकी आज्ञा । आइए, आप ।

( दोनों चलते हैं )

विदूषक—( आगे देखकर ) हे मित्र ! देखो, देखो । रसीले, घने और स्निग्ध चन्दन वृक्षों के ससर्ग से अत्यन्त सुगन्धित, ऊँचे नीचे तटों से गिर कर निखरे हुए, झरनों के उछलते हुए ठण्डे जलकणों से युक्त, प्रथम मिलाप के लिये उत्सुक प्रियतमा के आलिङ्गन की भाँति मार्ग की थकावट को दूर करता हुआ, यह मलयाचल-समीर मेरे प्यारे मित्र को ( तुम्हें ) रोमाञ्चित कर रहा है ।*

माणनिर्झरोच्छलितशिशिरसीकरासारवाही प्रथमसङ्गमोत्कण्ठित-प्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः ।

**नायकः**—[ निरूप्य सविस्मयम् ] **अये ! प्राप्ता एव वयं मलय-पर्वतम् ।** [ समन्तादवलोक्य ] **अहो ! रामणीयकमस्य । तथा हि—**

---

सरसानि-आर्द्राणि, घनानि-निबिडानि, स्निग्धानि-स्नेहसहितानि यानि चन्दनवनानि-चन्दनवृक्षाणां विपिनानि, तेषामुत्सङ्गस्य-क्रोडस्य, परिमिल-नेन-सम्पर्केण, लग्न -सम्पृक्त, बहुल -अधिक, परिमल -सौरभ यत्र तादृश, चन्दनसौरभवानित्यर्थ, **विषमेति**=विषमेभ्यो निम्नोन्नतेभ्य, तटेभ्यो गिरि प्रान्तेभ्य, पतनेन, जर्जरायमाणा -विशीर्यमाणा, ये निर्झरा -जलप्रवाहा, तेषाम् उच्छलिता -ऊर्ध्वं गता, शिशिरा -शीतला, ये शीकरा -जलकणा, तेषाम्, आसारम्-प्रसर समूहमित्यर्थ, वहति-धारयतीति तादृश, निर्झरजल बिन्दुवाहकत्वाच्छीतलो मन्दश्चेत्यर्थ, **एष** =अनुभूयमान, **मलयमारुतः**= मलयपर्वतपवन, **प्रथमेति**-प्रथमे सङ्गमे-पतिसमागमे, उत्कण्ठितया जातो त्कण्ठया, प्रियया-दयितया (कृत) कण्ठग्रह इव-कण्ठाश्लेष इव, [मलयपवन-स्योपमानमिदम्] **मार्गपरिश्रमम्**=मार्गस्य अध्वगमनस्येत्यर्थ, परिश्रमम्-खेदम्, **अपनयन्**=दूरीकुर्वन्, **प्रियवयस्यं** त्वाम्, **रोमाञ्चयति**=उत्पुल-कयति । यथा प्रथमसमागम प्रत्यत्युत्कण्ठिता दयिता दृढकण्ठाश्लेषेण पत्युरध्व-खेदमपनयति रोमाञ्च च तस्य तनोति, तथैवाय मलयपवन आश्रमोचितस्थाना-न्वेषणार्थमिहागतस्य तव मार्गश्रान्तिमपहरन् शैत्यवशाद् रोमाञ्चमुद्भावयति इति भाव । पूर्णोपमालङ्कार । अत्र मलयमारुतस्य तादृशदयिताकण्ठग्रहो पमया जीमूतवाहनस्य वक्ष्यमाणमलयवतीसमागमसूचनेन नाटकाङ्ग पताका स्थानमुपन्यस्तम् । तदुक्त दर्पणे—

> द्व्यर्थो वचनविन्यास सुश्लिष्ट काव्ययोजित ।
> प्रधानार्थान्तराक्षेपी पताकास्थानक परम् ॥

**अये** इति । अहो इत्याश्चर्यद्योतको निपात । **रामणीयकम्**=रमणी-यत्वम् । रमणीयशब्दाद् भावे वुन् ।

---

**नायक**—( देख कर आश्चर्य के साथ ) अरे, हम तो मलयपर्वत पर पहुच ही गए ! (चारों ओर देखकर) अहा ! यह कैसा मनोहर है । क्योंकि,

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभिः ।
पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतै-
र्दृष्टोऽयं मलयाचलः किमपि मे चेतः करोत्युत्सुकम् ॥६॥

नायको मलयपर्वतस्य रामणीयकं वर्णयति—माद्यद्दिति। **माद्यद्दिग्गजगण्डभित्तिकषणैः**=माद्यन्तः—मदोन्मत्ताः, दिग्गजाः—दिशां गजा ऐरावतादयः, शरीरेण बलेन च तत्सदृशाः करिणः इत्यर्थः, तेषां गण्डभित्तयः प्रशस्ता गण्डाः कपोलाः, [प्रशंसावचनैश्चेत्यनेन समासः, 'मतल्लिकोद्घमिथा सु प्रकाण्डस्थलभित्तयः' इति वचनाद् भित्तिशब्दोऽत्र प्रशंसापरो बोध्यः, प्राशस्त्यं च स्थौल्यातिशयकृतम्] तासां कषणैः—कण्डूविनोदाय घर्षणैः, **भग्नस्रवच्चन्दनः**=भग्नानि—आमर्दितानि, अत एव स्रवन्ति—निर्यद्रसानि, चन्दनानि चन्दनतरवो यत्र तादृशः, **जलनिधेः**=जलानां निधेः समुद्रस्य, **वीचिभिः**=तरङ्गैः, **आस्फालितः**=ताडितः, अतएव **क्रन्दत्कन्दरगह्वरः**=क्रन्दन्ति—उच्चैः प्रतिध्वनन्ति, कन्दराः कृत्रिमा दर्यः, गह्वराणि—देवकृतानि नैसर्गिकाणि बिलानि गुहाख्यानि यत्र तथाभूतः । **सिद्धाङ्गनानाम्**=सिद्धानां देवयोनिविशेषाणाम्, अङ्गनाः—स्त्रियः [प्रशस्तान्यङ्गानि आसां सन्तीति अङ्गनाः, 'अङ्गात् कल्याणे' इति मत्वर्थीयो ना प्रत्ययः] तासाम्, **गतैः**=गमनैः [भावे क्त, हेतौ तृतीया] **पादालक्तकरक्तमौक्तिकशिलः**=पादयोः अलक्तकेन—यावकरसेन, रक्ता—रक्तिमानं नीता, मौक्तिकानाम्—मुक्तानाम् शिला यत्र तादृशः, [यद्यपि मुक्तानां शिला न भवन्ति, तथापि मुक्ताघटितत्वाद् मुक्तावदतिनिर्मलस्फटिकमयत्वाद् मुक्ताशिलात्वं बोध्यम्] **अयम्**=पुरोदृश्यमानः, मलयम्—चन्दनं तद्बहुलोऽचलो **मलयाचलः**=मलयगिरिः । **दृष्टः**=

यह मलयपर्वत, जिस पर मस्त दिग्गजों के गण्डस्थल की रगड़ से टूटे हुए चन्दन वृक्षों में से रस बह रहा है, जिस की कन्दराओं के गर्भ से आवाज आ रही है, जिस से समुद्र की तरङ्गें टकराती हैं, जहां सिद्धों की स्त्रियों के चलने फिरने के कारण उनके पाँवों के यावक रस से मोती की शिलाएं लाल हो गई हैं, मेरे मन को इस तरह उत्सुक कर रहा है कि कुछ कहा नहीं जाता ॥६॥

१ गण्डयोः २ 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु' इत्यमरः ।
३ 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा गह्वरम्' इत्यमरः ।

तदेह्यलारुह्य वासयोग्यं किञ्चिदाश्रमपदं निरूपयावः ।

विदूषकः—एव्वं करेम्ह । [ अग्रतः स्थित्वा ] एदु भवं ।

[ आरोहणं नाटयतः । ]

एवं कुर्वः ।　　　　　　एतु भवान् ।

नायकः—[ दक्षिणाक्षिस्पन्दनं सूचयन् ] अये !

दक्षिणं स्पन्दते चक्षुः फलाकाङ्क्षा न मे क्वचित् ।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम् ॥१०॥

विदूषकः—भो वअस्स ! अवस्समासण्णं दे पिअं णिवेदेदि ।

---

दृष्टिविषयीकृत सन्, मयेति शेष । मे=मम जीमूतवाहनस्य, चेतः=मन , किमपि = केनाप्यनिर्वचनीयप्रकारेणेत्यर्थ । उत्सुकम् = उत्कण्ठितम्, करोति, स्वविषये-इति शेषः । अत्र चन्दन-कन्दर-गह्वरादीनां बाहुल्येन, सिद्धजनसंचारसंबन्धेन च मलयपर्वतस्य निवासयोग्यत्वं व्यञ्जितम् । औत्सुक्यस्य हेतुभिः समर्थनात् काव्यलिङ्गम् । तदुक्तम्—'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति । शार्दूलविक्रीडितं छन्दः ॥९॥

तदेहीति । निरूपयावः=पश्याव । दक्षिणाक्षीति । दक्षिणस्याक्ष्णः स्पन्दनं स्फुरणम् । अये-इति विस्मयान्वितं सम्बोधनम् ।

दक्षिणमिति । दक्षिणम्, चक्षुः = नेत्रम्, स्पन्दते = स्फुरति, ममेति शेषः । मे=मम सर्ववस्तुषु निस्पृहस्य, क्वचित्=कस्मिंश्चिदपि कर्मणि, फलाकाङ्क्षा=फलस्य-इष्टानिष्टप्राप्तिपरिहाररूपस्य, आकाङ्क्षा-इच्छा, न=नास्तीत्यर्थः, किं च, मुनिवचः=मुनीनां-शकुनशास्त्रकर्तॄणाम्, वचः-दक्षिणचक्षुःस्फुरणस्य शुभसूचकत्वपरं वाक्यम् । तदुक्तम्—

---

—इसलिये आओ, इस पर चढ कर रहने योग्य कोई आश्रम स्थान देखें ।

**विदूषक**—ऐसा ही करें । ( आगे खडा होकर ) आइए आप ।

( दोनों चढने का अभिनय करते हैं )

**नायक**—( दाहिनी आँख का फड़कना सूचित करता हुआ ) मित्र !

मेरी दाईं आँख फड़क रही है, ( पर ) मुझे फल की इच्छा कोई नहीं । मुनियों का वचन भी झूठा नहीं होता । न जाने, यह ( शकुन ) क्या ( फल ) बतलाता है ? ॥१०॥

**विदूषक**—हे मित्र ! यह अवश्य निकट भविष्य में होने वाले तुम्हारे कल्याण की सूचना दे रहा है ।

भो वयस्य ! अवश्यमासन्नं ते प्रियं निवेदयति।

नायकः—एवं नाम यथाऽऽह भवान्।

विदूषकः—[विलोक्य] भो वअस्स ! पेक्ख पेक्ख। एदं क्खु सविसेसघणसिणिद्धपाअवविसोहिअं सुरहिहविग्गन्धगब्भिणुद्दामधूमणिग्गमं अणुव्विग्गसुहणिसण्णसावअगणं तवोवणं विअ लक्खीअदि।

भो वयस्य ! प्रेक्षस्व प्रेक्षस्व। एतत् खलु सविशेषघनस्निग्धपादपविशोभितं सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गममनुद्विग्नसुखनिषण्णश्वापदगणं तपोवनमिव लक्ष्यते।

---

वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः।
दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि च॥ इति।

मिथ्या=विसंवादि–प्रतारकमित्यर्थः। न=नास्तीत्यर्थः। मुनिवचनप्रामाण्याद् अवश्यमिदं दक्षिणाक्षिस्पन्दनं किमपि फलमुत्पादयेदिति भाव। तत्, इदम्=दक्षिणाक्षिस्पन्दनम्, किं नु=किं नाम फलम्, कथयिष्यति ? सर्वथा निस्पृहस्य मम न जाने किं फलमनेनोत्पादयिष्यते–इति भावः। अनुष्टुप् छन्दः॥१०॥

भो वयस्येति। आसन्नम्=अचिरभावि।

एवमिति। यथा भवान् आह, तत्तथैवास्त्वित्यर्थ।

भो वयस्येति। एतत्=पुरोदृश्यमानम्, सविशेषेत्यादि–सविशेषम्–अत्यधिकं यथा स्यात्तथा, घनैः–सान्द्रैः, स्निग्धैः–सरसैः, पादपैः–वृक्षैः, विशोभितम्–विशेषेण शोभा प्राप्तम्, सुरभीत्यादि=सुरभि–सुगन्धि, हविः–होमद्रव्यम्, तस्य गन्धः–सौरभम्, तेन गर्भितः–मिलितः, उद्दामः–अत्यधिकः, धूमः, तस्य निर्गमम् निर्गमनस्थानम् [ धूमस्य निर्गमो बहिर्निस्सरणं यस्मादिति वि दे तु व्यधिकरणबहुव्रीहिरापद्येत, षष्ठ्यन्तस्य च सोऽसौत्र एव ]। अनुद्विग्नेत्यादि–अनुद्विग्नः–केनाप्यत्रासितत्वाद् उद्वेगमप्राप्तः शान्तः

---

नायक—अच्छा, जैसा तुम कहते हो वैसा ही हो।

विदूषक—(देखकर) हे मित्र ! देखो, देखो। यह प्रदेश विशेष रूप से घने और स्निग्ध (हरे-भरे) वृक्षों से सुशोभित है, यहां सुगन्धित हवि के सुगन्ध से मिला हुआ धुआँ खूब निकल रहा है, और जङ्गली जानवर बेखटके मौज से बैठे हुए हैं, यह तो तपोवन जैसा प्रतीत होता है।

**नायकः—सम्यगुपलक्षितम् । तपोवनमेवैतत् । कुत –**

वासोऽर्थं दययेव नातिपृथव कृत्तास्तरूणा त्वचो
मग्नाऽऽलक्ष्यजरत्कमण्डलु नभ स्वच्छ पयो नैर्झरम् ।
दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्य क्वचिन्मेखला
नित्याकर्णनया शुकेन च पद साम्नामिद पठ्यते ॥११॥

---

इति यावत्, सुखम्–सुखपूर्वकम्–निर्भयमिति यावत्, निषण्ण –उपविष्ट, श्वापदानाम्–व्याघ्रादिहिंस्रजन्तूनाम्, गण –समूहो यत्र तादृशम्, **तपोवनमिव**=मुनीना तपश्चर्यारण्यमिव, लक्ष्यते–खलु ।

**सम्यगिति । उपलक्षितम्**=विज्ञातम् ।

तपोवनमेवेदमिति निश्चये कारणान्तरमाह–**वासोऽर्थमिति । क्वचित्**=कस्मिँश्चित् स्थाने, **वासोऽर्थम्**=[ वासस इति वासोर्थम्, 'अर्थेन सह नित्यसमास –' इत्यादिना समास , क्रियाविशेषणत्वान्नपुसकत्व कर्मत्व च ] वस्त्रमानप्रयोजनायेत्यर्थ , **दययेव**=करुणयेव, **नातिपृथवः**=नातिमहत्य –वस्त्रोपयोगिमात्रविस्तारा –इत्यर्थ , **कृत्ताः**=छिन्ना , **तरूणाम्**=वृक्षाणाम्, **त्वच.**=वल्कलानि, **दृश्यन्ते**=अवलोक्यन्ते, क्वचिद्, **नभस्स्वच्छम्**=नभ –आकाशम्, तदिव स्वच्छम्–निर्मलम् [ 'उपमानानि सामान्यवचनै –' इत्यनेन समास ] अतएव, **मग्नालक्ष्यजरत्कमण्डलु**=मग्नम्–जलान्तर्निहितमपि, आलक्ष्यम् समन्ताल्लक्षयितु योग्य–स्पष्ट प्रतीयमानम्, जरत्–जीर्णशीर्णम् [ जीर्यतरतृन् ] कमण्डलु–तपस्विना जलपात्रम्, यत्र तादृशम्, **नैर्झरम्**=निर्झराणाम्–वारिस्रोतसाम् [ शपिकोऽण् ] **पयः**=जलम्, दृश्यत इति शेष । ब्रह्मचारिणा जलपात्र यदा जीर्ण भग्न वा भवति, तदा ते तत् पात्र जले क्षिप्यते, अत्र नैर्झरे पयसि क्षिप्तानि तानि जीर्णभग्नानि पात्राणि जलनैर्मल्येन स्पष्टमाभान्तीति भाव । क्वचिद् भग्नालक्ष्येति पाठ ।

---

**नायक—**तुम्हारा अनुमान ठीक है । यह तपोवन ही है । क्योंकि, यहा वस्त्र के लिये वृक्षों की त्वचाए मानों दया-पूर्वक पतली पतली छीली गई है, आकाश के समान स्वच्छ झरनों के पानी में डूबे हुए टूटे फूटे कमण्डलु साफ दिखाई पडते है, कहीं कहीं ब्रह्मचारियों की, टूट जाने पर फेंकी हुई मूज की मेखलाए भी देखने में आती है और नित्य सुनने के कारण तोता तक भी सामवद के पद बोलता है ॥११॥

---

१ दययैव २ भग्ना ३ रज ४ कर्णतया

तदेहि प्रविश्य अवलोकयावः। [ प्रवेशं नाटयतः ]

नायकः—[ सर्वतो विलोक्य ] अहो ! नु खलु मुदितमुनिजन-प्रविचार्य्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्बटुजनाच्छिद्य-

कचित्, बटुभिः=ब्रह्मचारिभिः, [ उज्झनकर्तरि तृतीया ], त्रुटितोज्झिताः=त्रुटिताः-खण्डिताः, अत एव उज्झिताः-त्यक्ताः [ 'पूर्वकालैक-' इत्यनेन समासः ] मौञ्ज्यः-मुञ्जाख्यतृणनिर्मिताः [ मुञ्जशब्दाद् विकारार्थेऽण्, अणन्तत्वाद् ङीप् ] मेखलाः=कटिप्रदेशे धारणीयानि निवृतानि मुञ्जसूत्राणि, दृश्यन्ते। इदं च=पुरः श्रूयमाणम्, शुकेन=कीरेण [ पठनकर्तरि तृतीया ] नित्याकर्णनया=नित्यम्-प्रतिदिनम्, आकर्णनया-श्रवणेन, मनसि गृहीतमिति शेषः, साम्नाम्=सामवेदमन्त्राणाम्, पदम्, पठ्यते=उच्चार्यते। शुकसारिकादीनां यथाश्रुतोच्चारणं प्रसिद्धमेव। अत्र आश्रमस्वरूपवर्णनात् स्वभावोक्तिः। नातिदृढवल्कलकर्तने दयाहेतुकत्वसंभावनाद् हेतूत्प्रेक्षा। नगरस्वच्छमित्यत्र लुप्तोपमा। भमालदय जरत्कमण्डलुतया जलस्य नैर्मल्यं समर्थितमिति काव्यलिङ्गम्। शार्दूलविक्रीडितं छन्दः ॥११॥

एवं मलयपर्वतोऽयमिति विनिश्चित्य नायकस्तत्र प्रविश्य निरीक्षणार्थं विदूषकमाह्वयति—तदेहीति।

आश्रमं प्रविश्य सर्वतो विलोक्य विस्मयाक्रान्तमना नायक आत्मनो विस्मयं प्रकाशयति-अहो नु खलु इति। अहो नु खलु इति निपातसमुदायो विस्मयद्योतकः। अहो=आश्चर्यकरी, तपोवनस्य प्रशान्तरमणीयता=प्रशान्तता शान्तिप्रधानता, रमणीयता मनोहरत्वं चेति वाक्ययोजना। कीदृशस्य तपोवनस्येत्याकाङ्क्षायामाह—मुदितेत्यादि। मुदिताः-निस्पृहतया सदा प्रसन्नमनसः, मुनिजनाः, तैः प्रविचार्यमाणः-सावधानं मीमांस्यमानः, सन्दिग्धः-अनिश्चितार्थः, वेदवाक्यानाम्-श्रुतीनाम्, विस्तरः-समूहो यत्र तादृशस्य, पठद्दिति—पठद्भिः-अभ्यस्यद्भिः, बटुजनैः-मुनिकुमारकैः, आच्छिद्यमानाः-लोलूयमानाः आर्द्रार्द्राः-सरससरसाः [ प्रकारे गुणवचनस्य

अच्छा तो आओ घुसकर देखें।

( प्रवेश का अभिनय करते हैं )

नायक—( सब ओर देखकर ) अहा ! तपोवन कितना शान्त और रमणीय है। जहाँ प्रसन्नचित्त मुनिजन संदिग्ध वेदवाक्यों का विचार कर

**मानार्द्रार्द्रसमिधस्तापसकुमारिकाऽऽपूर्य्यमाणबालवृक्षकालवालस्य प्रशान्तरमणीयता तपोवनस्य । इह हि—**

**मधुरमिव वदन्ति स्वागतं भृङ्गशब्दै-**
**र्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः ।**

---

इत्यनेन द्वित्वम् ], समिधः–यज्ञियकाष्ठानि यत्र तथाभूतस्य, **तापसेति**–तापसानाम्–तपस्विनाम्, कुमारिकाभिः–बालिकाभिः, आपूर्यमाणानि–जलेनासिच्यमानानि, बालवृक्षकाणाम्–लघुपादपानाम्, आलवालानि–वृक्षमूले जलधारणस्थानानि यत्र तस्य, विषयनिस्पृहा मुनयोऽस्मिन्नाश्रमे वेदवाक्यानि मीमांसन्ते । मुनिकुमारका स्वाध्यायमभ्यस्यन्तोऽपि बालस्वभावात् कार्यान्तरं समिच्छेदनमपि विदधते, सुकुमारास्तु मुनिकुमारिकाः बालपादपानामालवालेषु जलमासिञ्चन्ति–इति भावः । स्वभावोक्तिरलङ्कारः ।

आत्मनो विस्मयं समर्थयितुं पुनरप्याह—इह हि इति । इह हि–इति पदद्वयं मधुरमिवेत्यादिपद्यान्वयि । **इह हि**=अस्मिंस्तपोवने, **शाखिनः**[3]=वृक्षा जडा **अपि**, **अतिथिसपर्य्याम्**=अतिथीनाम्–अकस्मात् स्वगृहमुपस्थितानामभ्यागतानाम्, सपर्य्याम्–पूजाम्, अतिथिसत्कारमिति यावत्, **शिक्षिताः**=उपदिष्टाः । **कथम्** ? कथमितीह प्रश्ने । तथाहि, **अमी**=वृक्षाः, **भृङ्गशब्दैः**=भृङ्गाणाम्–भ्रमराणाम्, शब्दैः–गुञ्जितैः, **मधुरम्**=श्रोत्रसुखदं यथा स्यात् तथा, **स्वागतमिव**=स्वागतवचनमिव, **वदन्ति**=व्याहरन्ति । **फलनम्रैः**=फलैः–फलानां भारेणेत्यर्थः, नम्रैः–नतैः, **शिरोभिः**=शाखाग्रभागैः, **नतिमिव**=प्रणाममिव, **कुर्वते**=विदधते, उभयत्र ममेति शेषः । **पुष्पवृष्टीः**=पुष्पाणाम्–विकसितकुसुमानाम्, वृष्टीः–वर्षणानि, **किरन्तः**=क्षिपन्तः, **मम** [ सम्बन्धसामान्ये षष्ठी ] **अर्घ्यम्**=अर्घार्हं द्रव्यम् [ अर्घाद् यत् ] **ददते इव**=वितरन्तीव । अत्र कविना प्रकृततपोवने पर्यायोक्त्या पुष्पफल

---

कर रहे हैं, जहाँ ब्रह्मचारिगण पढ़ते हुए गीली समिधाओं को तोड़ रहे हैं। और जहाँ तपस्वियों की कन्याएँ नन्हे नन्हे पौधों के आलवालों में पानी भर रही हैं। यहाँ तो—

क्या वृक्षों को भी अतिथि सत्कार की शिक्षा दी गई है? (क्योंकि वे)

---

१ *न्तः । २ 'अम्भसा यत्र धारणम् स्यादालवालमावालमावापः' इत्यमरः । ३ 'वृक्षो महीरुहः शाखी' इत्यमरः । ४ 'पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समाः' इत्यमरः ।

मम ददत इवार्घ्यं पुष्पवृष्टीः किरन्तः
कथमतिथिसपर्य्यां शिक्षिताः शाखिनोऽपि ॥१२॥

तन्निवासयोग्यमिदं तपोवनम् । मन्ये भविष्यतीह वसतामस्माकं निर्वृतिः ।

विदूषकः—भो वअस्स ! किं णु क्खु एदे ईसिवलिअकन्धरा णिच्चलमुहावसरंतदरदलिअदब्भकवला समुण्णमिदादिण्णैककण्णा सुहणिमीलिदलोअणा आअण्णंता विअ हरिणा लक्खीअन्ति ।

भो वयस्य ! किं नु खल्वेते ईषद्वलितकन्धरा निश्चलमुखा-

---

समृद्धिं सूचिता । शाखिनोऽप्यात्मनाभिर्विरोधे । जडानामपि शाखिनां तपस्विजनसंसर्गमाहात्म्यात् सर्वमुपपद्यत इति विरोधस्याभासत्वम् । यत्र च जडा अपि अतिथिसपर्याचतुरास्तत्र चेतनास्तथा स्युरित्यत्र किमु वक्तव्यमिति कैमुतिकन्यायेन तपस्विनामप्यातिथेयत्वसूचनात् काव्यार्थापत्तिर्व्यज्यते । तथाचेयमलङ्कारेणालङ्कारव्यक्तिः । मृङ्गाणां गुञ्जिते शाखिनां स्वागतव्याहरणस्य, शाखानमने तत् प्रणमनस्य, पुष्पवृष्टिकरणे तदर्घ्यदानस्योत्प्रेक्षणादुत्प्रेक्षापि । तदुक्तं प्रकाशे—'सम्भावनमथोत्प्रेक्षा प्रकृतस्य परात्मना' इति । चतुर्थपादोक्तस्य अतिथिसपर्याशिक्षणरूपस्य कारणस्य पूर्वपादत्रयोक्तेन तत्कार्येण समर्थनाद् अर्थान्तरन्यासः । तदुक्तं दर्पणे—

'कार्यं च कारणेनेद कार्येण च समर्थ्यते' । इति ।

मालिनीवृत्तम् । तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥१२॥

तदिति । तद्=यस्मात् पुष्पफलसमृद्धिमयमिदम्, तस्मादित्यर्थः ।

मन्ये इति । मन्ये=विश्वसिमीत्यर्थः । निर्वृतिः=सुखम् ।

भो वयस्येति—ईषद्वलितकन्धरा=ईषद्, वलिता–तिर्यक्कृता, कन्धरा–[कं शिरो धरतीति तथाभूता] ग्रीवा, यैस्तादृशाः, निश्चलेति–

---

भ्रमरों के गुञ्जन द्वारा मानो मीठे वचनों से मेरा स्वागत कर रहे हैं, फलों के बोझ से झुकी हुई चोटियों से मानो वह मुझे नमस्कार कर रहे हैं और पुष्पों की वर्षा करते हुए मानो वे मुझे अर्घ्य दे रहे हैं ॥१२॥

इसलिए यह तपोवन निवास के योग्य है । मेरे विचार में हमें यहां रहते हुए सुख मिलेगा ।

विदूषक—हे मित्र ! जरा तिरछी गरदन किये हुए जिनके निश्चल मुख

पसरद्दरदलितदर्भकवलाः समुन्नमितदत्तैककर्णाः सुखनिमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते ।

नायकः—[ कर्णं दत्त्वा ] सखे ! सम्यगुपलक्षितम् । तथाहि-

स्थानप्राप्त्या दधान प्रकटितगमका मन्द्रतारव्यवस्थां
निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वरेण ।

---

निश्चलानि-चर्वणक्रियाशून्यानि, मुखानि, तेभ्य , अपसरन्-शनैः पतन्, दरदलित -ईषच्चर्वित दर्भस्य-कुशस्य-कवल ग्रास , येषा तादृशा , समुन्नमितेति-समुन्नमित -सम्यगूर्ध्वमुत्थापित , दत्त -श्रवणाय प्रवणीकृत , एक , कर्ण -श्रोत्रम्, यैस्तादृशा , सुखेति-सुखन-श्रवणजेनानन्देन निमीलिते-मुद्रिते, लोचने-नेत्रे यैस्तादृशा , एते=पुरोदृश्यमाना , हरिणा[1]= मृगा , किं नु खलु=क शब्दमित्यर्थ , [ 'नु' इति निपात प्रश्ने, 'खलु' इति जिज्ञासायाम्-'नु पृच्छाया विकल्पे च' 'निषेधवाक्यालङ्कारजिज्ञासानुनये खलु' इत्युभयत्रामर ] आकर्णयन्तः=शृण्वन्त इव स्थिता , लक्ष्यन्ते=प्रतीयन्ते। श्रवणासक्तमृगस्वभाववर्णनात् स्वभावोक्तिरलङ्कार । तदुक्त दर्पणे—

'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्' इति ।

कर्णं दत्त्वेति—विदूषकोक्त मृगाणा शब्दाकर्णन निश्चेतु कर्णमेकाग्र श्रवणोन्मुख कृत्वेत्यर्थ । निर्णीय कथयति—सखे इति । सखे ! मृगा कचन शब्द शृण्वन्तीति त्वया साधु विज्ञातमित्यर्थ ।

तदेव समर्थयितुमुपक्रमते-तथाहीति, स्थानप्राप्त्येति । एते=पुरो दृश्यमाना , कुरङ्गा =हरिणा , दन्तान्तरालस्थिततृणकवलच्छेदशब्दम्=दन्तानाम्, अन्तराले-मध्ये, स्थित , य , तृणकवल -घासग्रास , तस्य च्छेद -दन्तसघर्षणेन च्छेदनम्-चर्वणमित्यर्थ , तस्य शब्द -तज्जनितो

---

से आधे चबाए हुए दर्भ के ग्रास बाहर गिर रहे हैं, और एक कान उठाकर लगाए हुए, आँखें बन्द किए हुए ये हरिण कुछ सुनते हुए से प्रतीत होते हैं ।

नायक—(कान लगाकर ) मित्र ! आपने ठीक अनुमान किया। क्योंकि, ये हरिण अपने अङ्गों को निश्चल किए हुए, दाँतों के बीच ली हुई घास के कौर के चबाने का शब्द बन्द करके ( तृण चबाना

---

१ 'मृगे कुरङ्गवातायुहरिणाजिनयोनय -'इत्यमर ।

एते दन्तान्तरालस्थिततृणकवलच्छेदशब्दं नियम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥१३॥

ध्वनिं, तमपि, नियम्य=निरुध्य [ घासग्रासचर्वणध्वनिमपि गीतश्रवणे प्रतिबन्धकं मत्वा चर्वणक्रियामेव स्थगितवन्तः सन्त इत्यर्थः ], व्याजिह्माङ्गाः=विशेषेण, समन्तात् जिह्मानि–अचलानि, निष्पन्दानीत्यर्थः, अङ्गानि–शरीरावयवा, येषां तादृशाः सन्तः, स्थानप्राप्तया=स्थानानाम्–उरःकण्ठादीनां स्वरोत्पत्तिस्थानानाम् प्राप्तिः–प्रकर्षेण सम्बन्धः, शब्दजनकवायोरिति शेषः, तया यथायथं तत्तत्स्थानात्स्वरोद्भावनेनेत्यर्थः, प्रकटितगमकाम्=प्रकटितः, प्रकाशितः, गमकः–षड्जादिसप्तस्वराणामुत्थानप्रकारः [ 'स्वरोत्थानप्रकारस्तु गमकः परिकीर्तितः' इति गगनतविदः ] यत्र तं तादृशीम्, मन्द्रतारव्यवस्थाम्=मन्द्रः–गम्भीरः तारः–उच्चः, तयोः गम्भीरोच्चयोः स्वरयोः, व्यवस्था–यथास्थानं नियमेन अवस्थानम्, दधानम्=धारयत्, अलिरुतेनेव=अलेः–भ्रमरस्य, रुतेन–शब्देनेव भ्रमरकूजनसदृशेनेत्यर्थः, निर्ह्रादिन्या:=रणन्त्या, विपञ्च्याः=वीणायाः, तन्त्रीस्वनेन=तन्त्रीणाम्=विपञ्चीगुणानां [ तार इति भाषायां प्रसिद्धानाम् ] स्वनेन–ध्वनिना, तन्त्रीभ्यो निर्गतेन ध्वनिनेत्यर्थः, मिलितम्=सम्बद्धमनुगतमिति यावत्। अतएव स्फुटललितपदम्=स्फुटानि स्पष्टं प्रतीतानि, ललितानि सुन्दराणि मनोहराणीति यावत्, पदानि–सुप्तिङन्तरूपाणि, यत्र तादृशम्, गीतम्=गानम्, आकर्णयन्ति=शृण्वन्ति। गीतप्रिया इमे हरिणा सुखास्वादप्रापकं चर्वणध्वनिमपि गीतध्वनिश्रवणे विघ्नरूपमाकलयन्तश्चर्वणक्रियां परित्यज्य निश्चला भूत्वा गीतध्वनिमाकर्णयन्ति। एतेन यद्गीतं जडान् मृगानपि वशयति तच्चेतनाँस्तथा कुर्यादित्यत्र किमु वक्तव्यमित्येव गीयमानगीतस्य सौभाग्यातिशयं सूचयति। किञ्चात्र गीते यथास्थानं स्वरोद्भावनेन स्वराणामुत्थानप्रकारः साधु प्रतीयते। यत्र मन्द्रः स्वर उचितस्तत्र मन्द्रः, यत्र तु

मन्द करके ) स्पष्ट और सुललित शब्दों वाले गीत को सुन रहे हैं, यह गीत भौंरों की गुंज के सदृश बजती हुई वीणा के तारों के स्वर से संयुक्त है, इसमें स्थान-प्राप्ति ( यथोचित कण्ठ आदि स्थानों से उच्चारण ) के कारण स्वरों का उत्थान प्रकार ( गमक ) स्पष्ट है और स्वरों की मन्द्र तार व्यवस्था भी विद्यमान है ॥१३॥

१ 'जिह्मस्तु कुटिलेऽलसे' इत्यमरः। २ 'वीणा तु वल्लकी विपञ्ची' इत्यमरः।

**विदूषकः**—भो वअस्स ! को उण एसो तवोवणे गाअदि ?
भो वयस्य ! कः पुनरेष तपोवने गायति ?

**नायकः**—यथैताः कोमलाङ्गुलितलाभिहन्यमाना नातिस्फुटं क्वणन्ति तन्त्र्यस्तथा काकलीप्रधानं गीयत इति तर्कयामि । [अङ्गुल्यग्रेणाग्रतो निर्दिशन्] अस्मिन्नायतने देवतामाराधयन्ती काचिद्दिव्या योषिदुपवीणयति ।

---

तारस्तत्र स एवेति मन्दतारस्वरव्यवस्थापनमप्यत्र गीते साधु कृतम् । किंचैव स्वभावसुन्दरमपीद गीत मधुरांकरुतानुकारिविपञ्चीस्वनानुगतमित्यहो अस्य सौन्दर्यातिशयः । अपि च यद्यपि गीयमानमस्पष्टार्थमप्यललितपदमपि चित्त हरत्येव तथापि इदं तु गीतं स्पष्टार्थं च ललितपद चेति यत् सत्यं सर्वाङ्गसुन्दरमिदमिति भाव । मृगजातिवर्णनात् स्वभावोक्तिरलापि । वृत्तं स्रग्धरा । तल्लक्षण यथा—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥१२॥

एवं नायककृतगीतप्रशंसया नायकं तदाकृष्टमिव मन्यमानो विदूषकस्तस्य हृदये गानकर्तृदर्शनोत्कण्ठामुत्पादयितु संबोध्य प्रश्नयति—कः पुनरिविक एप गायको भवेत, यो नगरं त्यक्त्वात्र विपयविरक्तविरलजनाधिष्ठिते तपश्चर्यारण्ये समागत्य गायतीति भाव ।

नायक उत्तरयति—**यथैता** इति । **यथा**=येन प्रकारेण—यस्माद् हेतोरिति भाव । **एताः**=पुरो ध्वनन्त्य , **तन्त्र्यः**=विपञ्चीगुणा , **कोमलेति**—कोमलै मृदुभि , अङ्गुलीनाम्, तलै , अभिहन्यमाना =ताड्यमाना , नातिस्फुटम्-अनतिस्पष्टम् यथा स्यात् तथा [ अतिस्फुटशब्देन 'न' शब्दस्य समास न तु नञ , अतएव नलोपो न ] **क्वणन्ति**=शब्दायन्ते, **तथा**=तेन प्रकारेण—तस्माद्धेतोरित्यर्थ , **काकलीप्रधानम्**=काकली-सूक्ष्ममधुरध्वनि

---

**विदूषक**—मित्र ! तपोवन में यह कौन गा रहा है ?

**नायक**—क्योंकि कोमल अङ्गुलियों से बजाए हुए वीणा के तार अधि स्पष्ट नहीं (धीमे) गूँज रहे हैं, इसलिए अनुमान करता हूँ कि इस गाने में काक ( मधुर और सूक्ष्म स्वर ) की प्रधानता है । ( उँगली से सामने की ओ संकेत करता हुआ ) इस मन्दिर में कोई दिव्याङ्गना देवता की आराध के लिये वीणा बजा रही है ।

---

१ 'तन्त्री वीणागुणे मता' इति मेदिनी । २ 'काकली तु कले सूक्ष्म' इत्यमर ।

**विदूषकः**-भो वअस्स ! एहि अम्हेवि देवदाअदणं पेक्खम्ह ।
भो वयस्य ! एहि आवामपि देवतायतनं प्रेक्षावहे ।

**नायकः**—वयस्य ! साधूक्तं खलु भवता । वन्द्याः खलु देवताः । [ उपसर्पन् सहसा स्थित्वा ] वयस्य ! कदाचिद् द्रष्टुमनर्होऽयं जनो भवति । तदावां तमालगुल्मान्तरितौ पश्यन्तावसरं प्रतिपालयावः । [ तथा कुरुत ]

---

प्रधान यत्र क्रियाया यथा स्यात् तथा, **गीयते**=गान क्रियते, **इति,तर्कयामि**=अनुमिनोमि । साधनेन साध्यस्यानुमानादनुमानालङ्कारः । नातिस्फुटकथनस्य कोमलाङ्गुलितलाभिहतिहेतुना समर्थनात् काव्यलिङ्ग च ।

**अस्मिन्निति**। **अस्मिन्**=पुरो दृश्यमाने, **आयतने**=देवतास्थाने, **देवताम्**, **आराधयन्ती**=उपासनया प्रसादयन्ती,**काचिद्**=अस्माभिरविज्ञाता, **दिव्या**=दिवि भवा-देवलोकवासिनी, **योषित्**=स्त्री, **उपवीणयति**=वीणया उपगायति [ 'सत्यापपाश-' इत्यादिना उपोपपदाद् वीणाशब्दाण्णिच् ] ।

एतेन 'नासूचितस्य प्रवेश ' इति रूपकनियमानुरोधाद् वक्ष्यमाणप्रवेशाया मलयवत्या. सूचना दत्तेति विभाव्यम् ।

विदूषको देवतायतनप्रेक्षणव्याजेन नायकं तत्र गन्तुं प्रेरयति-**भो वयस्येति** । नायकस्तदुक्तिं समर्थयते-**साधूक्तमिति** । सन्निहिते देवतायतने-देवता वन्दनीया एव, तद्वन्दनानन्तरमेव कार्यान्तरमनुष्ठेयम्, तद्देवतायतन प्रति गन्तुं त्वया साधूक्तम् ।

**उपसर्पन्**=देवमन्दिरं प्रति गमन नाटयन्, **सहसा स्थित्वा**-अकस्माद् गतिनिरोध नाटयित्वेत्यर्थ । गतिनिरोधे हेतुमाह-**कदाचिदिति** । कदाचिदिति संशयोपन्यास । **अयम्**=पुरो देवतायतने देवतामुपवीणयन्, **जनः**, **कदाचिद्**,द्रष्टुमनर्ह =परस्त्रीत्वाद् द्रष्टुमयोग्यो भवति-भवेदित्यर्थ ।अयं भाव –

---

**विदूषक**—हे मित्र ! आओ, हम भी इस देव मन्दिर को देखें ।

**नायक**—वयस्य ! आपने ठीक कहा । देवताओं का वन्दन अवश्य करना चाहिए । ( आगे बढ़ता हुआ ठिठक कर ) मित्र ! कदाचित् इस ( पूजा करने वाली स्त्री ) को देखना हमारे लिए अनुचित हो, इसलिए ( आओ ) हम दोनों इस आवनूस के झुरमुट के पीछे, छिपकर, देखते हुए देव-दर्शन के अवसर की प्रतीक्षा करें । ( वैसे ही करते हैं )

[ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च ]

**नायिका**—[ वीणया गायति ]

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥१४॥

---

यदि चेयमूढा तर्हि परस्त्रीत्वाद् अदर्शनीयैव । यदि चानूढा तर्हि कन्यकात्वाच्च तद्दर्शनं दोषावहम् । परं न ज्ञायत इयमूढानूढा वेति । **तद्**=ऊढात्वानूढत्वयोरनिश्चयादेव, **तमालतरुगुल्मान्तरितौ**=तमालतरूणां तमालवृक्षाणाम्, गुल्मेन समूहेन, अन्तरितौ व्यवहितौ, **अवसरम्**=देववन्दनावसरम्, **प्रतिपालयाव**=प्रतीक्षावहे । **तथा कुरुत**=तमालतरुसमूहपृष्ठे निलीय तिष्ठत ।

अथ पूर्वसूचितां सवीणां मलयवतीं तच्चेटीं च प्रवेशयति—**ततः प्रविशतीति** ।

**नायिकेति** । नायिकापि नायकवत् 'त्यागी कृती कुलीनः' इत्यादिनायकसामान्यलक्षणे प्रतिपादितैस्त्यागादिगुणैर्युता भवति ।

**उत्फुल्लेति**—**उत्फुल्लकमलकेसरपरागगौरद्युते**=उत्फुल्लानि विकसितानि, कमलानि, तेषां केसराः–किञ्जल्काः[1], तेषां परागः–पुष्परजः[2], तद्वद् गौरी–गौरवर्णा, द्युतिः–कान्तिः, यस्यास्तथाभूते, हे **भगवति**=ऐश्वर्यादिविशिष्टे ! [ भगशब्द ऐश्वर्यादिवाची । तदुक्तं वैष्णवे–'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा' इति । ] **गौरि**!=हे पार्वति, **युष्मत्प्रसादेन**=युष्माकम्, [बहुवचनं शिवगणपत्यादिगौरीकुटुम्बसंग्रहार्थम् ] प्रसादेन–अनुग्रहेण, **मम**=मलयवत्याः, **अभिवाञ्छितम्**=अभीप्सितम्, अनुरूपवरप्राप्तिरूपम्, **प्रसिध्यतु**=प्रकर्षेण सिध्यतु–निष्पद्यताम् । प्रार्थनायां लोट् । हिरत्र पादपूरणमात्रप्रयोजनः । वाचकलुप्तोपमालङ्कृतिः । वृत्तम् आर्या ॥१४॥

---

( भूमि पर बैठी हुई वीणा बजाती हुई मलयवती और उसकी दासी का प्रवेश )

**नायिका**—( वीणा के साथ गाती है )

खिले हुए कमल की तुरियों के पराग के समान गौर वर्ण वाली हे भगवति ! गौरि ! तुम्हारी कृपा से मेरी मन कामना सिद्ध हो ॥१४॥

---

१ 'किञ्जल्कः केसरोऽस्त्रियाम्—' इत्यमरः । २ 'परागः पुष्परजः' इत्यमरः ।

नायक —[कर्णं दत्त्वा] वयस्य ! अहो गीतम् ! अहो वाद्यम् !

व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धाऽमुना
विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधाऽयं लयः ।

---

कर्णं दत्त्वेति—स्पष्टश्रवणाय गानशब्ददिशि कर्णं कृत्वेत्यर्थः ।

अहो इति=गीतवाद्ये उभे अपि अत्यद्भुते, परमं मे विस्मयं पुष्णीत-इति भावः ।

अथ गीतवाद्ययोराश्चर्यकरं वैशिष्ट्यं प्रतिपादयति—व्यक्तिरिति । अत्र=अस्मिन् दिव्ययोषिता गीयमाने गीते, दशविधेनापि=दश-दश-सङ्ख्याकाः कल-तल निष्कोटितादयः, विधाः-प्रकारा भेदा इति यावत्, यस्य तादृशेनापि कल-तलादि-समग्रदशभेदसहितेनापीत्यर्थः, अमुना=सगीतशास्त्रेषु प्रसिद्धेन, व्यञ्जनधातुना=[व्यनक्ति स्वरान् इति व्यञ्जनः, व्यञ्जनश्चासौ धातुर्व्यञ्जनधातुस्तेन] व्यञ्जनाख्येन वादित्रवादनकौशलेन, व्यक्तिः=स्फुटता, लब्धा=प्राप्ता । तदुक्तं नाट्यशास्त्रे—

विस्तारः करणश्चैवाविद्धो व्यञ्जनकस्तथा ।
चत्वारो धातवो ज्ञेया वादित्रकरणाश्रयाः ॥

विस्तारादीनां प्रत्येकं लक्षणानि विस्तरभयान्न लिख्यन्ते । तज्जिज्ञासुभिरेकोनत्रिंशत्तमोऽध्यायो नाट्यशास्त्रस्याध्येतव्यः ।

व्यञ्जनधातोर्दशभेदत्वं यथा तत्रैव—'इति दशविधः प्रयोज्यो वीणायां व्यञ्जनो धातुः' । ते च दशभेदा विस्तृत्य तत्रैव निरूपिताः । यथा—

व्यञ्जनधातुर्ज्ञेयः कलतलनिष्कोटितान्ययोन्मृष्टम् ।
रेफावमृष्टपुष्पानुस्वनितं बिन्दुरनुबन्धः ॥
अङ्गुष्ठाभ्यां तु तन्त्रीणां स्पर्शनं यत् कलं तु तत् ।
वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तलम् ॥
सव्याङ्गुष्ठप्रहारस्य निष्कोटितमिहोच्यते ।
मध्याप्रदेशिनी धातमुन्मृष्टमिति गडि[illegible] ॥

---

नायक—( कान लगाकर ) वाह ! वाह ! [illegible] और बजाना है ।

इस में तो दशों प्रकार का वीणावादन-कौशल [illegible] है, तीन प्रकार की लय ( की गति ) द्रुत [illegible]

गोपुच्छाप्रमुखाः क्रमेण यतयस्तिस्रोऽपि संपादिता-
स्तत्त्वौघानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः ॥१५॥

---

सर्वाङ्गुलिसमाक्षेपाद् रेफ इत्यभिधीयते ।
कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामधोगतम् ॥
तन्त्रीषु त्रिप्रकारं वाप्यवमृष्टमिति स्मृतम् ।
कनिष्ठाङ्गुष्ठसंयुक्तं पुष्पमित्यभिधीयते ॥
तत्स्थानिधरन्थामस्तथानुस्वनितमुच्यते ।
गुर्वक्षरैकतन्त्र्यां तु बिन्दुरित्यभिसंज्ञितः ॥
व्यासशमामादेयामनुबन्ध सार्वधातुको ज्ञेय ।

व्यपनाख्यस्य वीणावादनप्रकारस्य यावन्तोऽपि दश भेदास्तलादय उपरि लक्षिता अत्र गीते स्पष्टं प्रतीयन्त इति भाव । किं च **द्रुतमध्यलम्बितपरिच्छिन्नः**=[ द्रुतश्च मध्यश्च लम्बितश्चेति द्रुतमध्यलम्बिता । तत्र द्रुत शीघ्र, मध्यो नातिशीघ्रो नातिविलम्बित , लम्बितो विलम्बित , तै परिच्छिन्न ] द्रुतमध्यलम्बिताख्यैर्भेदै , परिच्छिन्न -परिमित , **अयम्**=संगीतशास्त्रे प्रख्यात ,**लयः**=तालान्तरालवर्ती काल , **त्रिधा**=द्रुतादिभिस्त्रिभि प्रकारै , **विस्पष्टः**=सुप्रकाशित , अत्र गीत इति शेष । द्रुतादिभेदेन प्रसिद्धत्रिविधोऽपि लयोऽत्र सुस्पष्ट भासते–इति भाव ।

तत्र लयलक्षणं यथा नाट्यशास्त्रे—

तालान्तरालवर्ती य स कालो लय उच्यते ।
त्रिविध स च विज्ञेयो द्रुतो मध्यो विलम्बित ॥

**गोपुच्छाप्रमुखाः**=गोपुच्छा–गोपुच्छेति नाम्नी यति , प्रमुखा–आदि , यासां ता , गोपुच्छादय इत्यर्थ , प्रमुखशब्देन समा-स्रोतोवह्योर्यत्योर्ग्रहण बोध्यम् , **तिस्रः**=त्रिसंख्याका , **यतयः**=तालानां विरामा , **अपि**, **क्रमेण**=क्रमश , **संपादिता**=कृताः । मध्ये मध्ये यथास्थानं यतीनां सन्निवेशोऽपि गीतेऽत्र सम्पादित इति भाव. । यतिलक्षण यथा—

तालच्छन्दोऽवगतिविषये वाद्यते यो विराम
वाद्यैर्हीन· श्रवणसुभगो नामत सा यति स्यात् ।

---

विलम्बित ( धीमी ) भी पृथक् पृथक् स्पष्ट है, गोपुच्छा आदि तीनों यतियों का भी इसमें क्रम से अच्छा जमाव हुआ है और सत्त्व, ओघ, अनुगत—ये तीन वाद्यवादन के प्रकार भी भली भाँति दरसाये गए हैं ॥१५॥

**चेटी—**[सप्रणयम्] भट्टिदारिए! चिरं क्खु वादअंतीए कुदो ण परिस्समो अग्गहत्थाणं ?

---

लयगानाद् यतिः सम्यक् कथिता दत्तिलादिभि ।
समा स्रोतोवहा चैव गोपुच्छा चेति सा त्रिधा ॥

*गोपुच्छालक्षणं नाट्यशास्त्रे यथा—*

गुरुभिर्लघुभिश्चैवमपि भावितमक्षरम् ।
लम्बिता येन भूयिष्ठा गोपुच्छा दक्षिणे यतिः ॥

किंच **तत्त्वौघानुगताः**=तत्त्वं च, ओघश्च, अनुगतश्चेति तत्त्वौघानुगता —तत्त्वादिनामका, **त्रयः, वाद्यविधयः**=वाद्यवादनविधानानि इत्यर्थः । **सम्यक्**=यथायथम्, **दर्शिताः**=प्रकाशिता । तत्त्वादिभेदेन त्रिधा प्रसिद्धा वाद्यवादनशैल्यप्यत्र वीणावाद्ये वादयित्र्या साधु निदर्शितेति भाव ।

तत्त्वादिलक्षणं यथा—

त्रिविधं वैणववाद्यं कर्तव्यं गीतमंश्रयं तज्ज्ञैः ।
तत्त्वं तथानुगतमोघश्चानेककरणसंयुक्तम् ॥
लय-ताल वर्ण-पदयतिगीत्यक्षरभावकं भवेत्तत्त्वम् ।
गीतं च यदनुगच्छेदनुगतमित्युच्यते वाद्यम् ॥
आविद्धकरणबहुलमुपर्युपरिपाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यं चौघं बुधैर्ज्ञेयम् ॥
स्थिते तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ।
द्रुते चौघं प्रयुञ्जीया(?)देष वाद्यगतो विधिः ॥

इदमत्र बोध्यम्—अत्र 'अहो रामणीयकम्' इत्यत प्रभृति, 'व्यक्तिव्यंजनधातुना' एतत् पद्य यावत्—कविना नायके अद्भुतरसस्य साधु परिपोष कृत । तथाहि—लोकोत्तररमणीयानि तपोवनं मलयवत्या गीतं वीणावादनं चात्रालम्बनम् । 'वासोऽर्थम्' 'मधुरमिव वदन्ति' 'स्थानप्राप्तया' 'व्यक्तिर्व्यंजनधातुना' इत्यादिभिस्तद्वर्णनमत्रोद्दीपनम् । अहो रामणीयकम्, अहो गीतम्, अहो वादित्रमित्यादिकथन नेत्रविकासादयश्चानुभावा, हर्षादयश्च व्यभिचारिण । एतैर्विभावादिभिर्नायकगतो विस्मयोऽभिव्यज्यमानो रसपदवीमारोहति । किं च एतेन पद्येन गीतवादिनकलानैपुण्यं च मलयवत्या व्यज्यते । शार्दूलविक्रीडितं छन्द ॥१५॥

**भर्तृदारिके** इति । चेट्या भर्तृदारिकेति नाम्ना नायिकायाः संबोधनं

भर्तृदारिके ! चिरं खलु वादयन्त्याः कुतो न परिश्रमोऽ
ग्रहस्तयोः ?

नायिका—[ साधिक्षेपम् ] हञ्जे ! कुदो मे देईए पुरदो वीणं
वादअन्तीए अग्गहत्थाणं परिस्समो !

हञ्जे ! कुतो मे देव्याः पुरतो वीणां वादयन्त्या
अग्रहस्तयोः परिश्रमः !

चेटी—भट्टिदारिए ! णं भणामि किं पदाए णिक्करुणाए
पुरदो वाइदेण ? जा पत्तिअं कालं करणआजणदुक्करेहिं णिअ
मोवासणेहिं आराधअन्तीए अज्जवि ण दे पसादं दंसेदि ।

---

रूपकनियमानुरोधाद्। तदुक्तम्—'वाच्या प्रकृतिभी राज्ञ कुमारी भर्तृदारिक'
इति । भर्तुः स्वामिनो दारिका कन्येति तदर्थः । चिरमिति—चिरं=वीणा
वादयन्त्यास्तव अग्रहस्तयोः=[ हस्तयोरग्रे—इति अग्रहस्तौ—राजदन्ता-
दित्वादग्रशब्दस्य पूर्वनिपातः ] हस्तस्याग्रभागयोरित्यर्थः । [ एकेन वीणा
धारणादिकार्यमपरेण तन्त्रीताडनमिति द्विवचनं युक्तमेव] कुतः=कस्मात्,
परिश्रमः=श्रान्तिः, न=न भवतीत्यर्थः । चिरं वादनं परिश्रान्तिहेतुः,
तव तु सुकुमार्या अपि चिरं वादयन्त्या न परिश्रम इत्यत्र को हेतुरिति भावः ।

साधिक्षेपमिति—अधिक्षेपस्तिरस्कारः, तेन सहेति साधिक्षेपम्—
सहार्थेऽव्ययीभावः । तिरस्कारसुद्र्येत्यर्थः । हञ्जे=इति । हञ्जे इति नायिकया
चेट्याः संबोधनम् । ['हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः]
एतेन मलयवतीनिष्ठो देवीविषयो रतिभावो व्यज्यते ।

नन्विति । ननु=इति निश्चये, एतस्याः, निष्करुणायाः=
निर्दयायाः, पुरतः=अग्रे, वादितेन=वीणाया वादनेन, किम्=किं फलम्,
न किमपीत्यर्थः, इति निश्चयेन, भणामि=कथयामि । या देवी, एता-

भर्तृदारिके ! ननु भणामि किमेतस्या निष्करुणायाः पुरतो वादितेन ? या एतावन्त कालं कन्यकाजनदुष्करैर्नियमोपासनैराराधयन्त्या अद्यापि न ते प्रसादं दर्शयति ।

विदूषकः—कण्णआ क्खु एसा, किं ण पेक्खह्म ?

कन्यका खल्वेषा, किं न प्रेक्षावहे ?

नायकः—को दोषः? निर्दोषदर्शनाः कन्यका भवन्ति। किन्तु कदाचिदस्मान् दृष्ट्वा बालभावसुलभलज्जासाध्वसान्न चिरमिह तिष्ठेत्, तदनेनैव लताजालान्तरेण पश्यावः।

न्तम्=अनिदीर्घमित्यर्थ, कालम्=समय यावत्, कन्यकेति—कन्यकाजनानाम्—अनूढाना युवतीनाम्, दुष्करैः—दुःखेन कर्तुं शक्यैः, नियमोपासनैः= नियमा व्रतानि, उपासनानि ध्यानादीनि, तैः, आराधयन्त्याः=प्रसादयन्त्या अपि, ते=तव, अद्यापि=अद्य यावत्, प्रसादम्=अनुग्रहम्, न दर्शयति= न प्रकटयति । अतस्त्यज्यता निरर्थक परिश्रम इति भाव ।

विदूषकश्चेद्व्युत्तया नायिकाया कन्यात्व निर्धार्याह—कन्यकेति। किं नेति—कुतो न ता पश्याव, परस्त्रियो दर्शने दोष आम्नायते, न पुनरनूढाया अपीति भाव । नायकस्तदुक्तिं समर्थयते—को दोष इति। निर्दोषेति—निर्दोषम्—पापाजनकम्, दर्शन यासा ता निर्दोषदर्शना । किन्त्विति—अस्मान्, दृष्ट्वा, कदाचिद्, बालभावेति—बालभावे, सुलभात्—नैसर्गिकादित्यर्थ, लज्जासाध्वसात्—[लज्जा च साध्वस चानयो समाहारे लज्जासाध्वसम्—तस्माद्] लज्जया, साध्वसेन—भयेन चेत्यर्थ, इह=देवायतने, चिरं न तिष्ठेत्=शीघ्रमेवेत प्रतिनिवर्तेत, अपरिचितदर्शनपरिनिहीर्षयेति भाव । तद्=यत अस्मद्दर्शनजनितलज्जासाध्वसात् तस्या इतो निवर्तन सभावित तस्मादित्यर्थ, अनेनैव=समीपस्थितेन, लताजालान्तरेण= लताना जाले–समूहे, अन्तरेण—छिद्रेण—अवकाशेन, पश्यावः। विदूषकोक्तौ

कठिन (दुष्कर) व्रत और उपवासों से इसकी आराधना कर रही हैं परन्तु यह आप पर अब भी अपनी कृपा नहीं दरसाती ।

विदूषक—यह तो कोई कन्या है, इसलिये क्यों न देखें ।

नायक—क्या हानि है? कन्याओं के देखने में कोई दोष नहीं। किन्तु

१ 'भीतिर्भी साध्वस भयम्' इत्यमर । २ 'अन्तरमवकाशावधि परिधानान्तर्धिभेदतादर्थ्ये' इत्यमर ।

**विदूषकः**—एव्वं करेम्ह । [ उभौ पश्यत ] एवं कुर्वः ।

**विदूषकः**—[ दृष्ट्वा सविस्मयम् ] भो वअस्स ! पेक्ख पेक्ख । अहह अच्चरिअं ! ण केवलं वीणाविण्णाणेणेव्व सुहं करेदि । जाव इमिणा वीणाविण्णाणाणुरूवेण रूवेण वि अच्छीणं सुहं उप्पादेदि । का उण एसा ? किं दाव देई ? आहो णाअकण्णआ ? आहो विज्जाहरदारिआ ? आहो सिद्धकुलसम्भवेत्ति ?

भो वयस्य ! प्रेक्षस्व प्रेक्षस्व । अहह आश्चर्य्यम् ! न केवलं वीणाविज्ञानेनैव सुखं करोति । यावत् अनेन वीणाविज्ञानानुरूपेण रूपेणापि अक्ष्णोः सुखमुत्पादयति । का पुनरेषा ? किं तावत् देवी ? आहोस्वित् नागकन्यका ? आहोस्वित् विद्याधरदारिका ? आहोस्वित् सिद्धकुलसम्भवेति ?

---

**यावदिति** । यावदित्यवधारणे[1] । **अनेन**=चक्षुर्विषयीक्रियमाणेन, **वीणाविज्ञानानुरूपेण**=वीणायाम्–वीणावादनप्रकारे इत्यर्थ , विज्ञानम्–विशिष्टं ज्ञानमनुभव –नैपुण्यमित्यर्थं , तस्य, **अनुरूपेण**=योग्येन, **रूपेण**=सौन्दर्येण, **अक्ष्णो**=नेत्रयो , **सुखम्**, **उत्पादयति** । यथास्या वीणावादननैपुण्यमद्भुतम्, तथैव सौन्दर्यमप्यद्भुतमेवेति भाव ।

विदूषको नायक प्रति जिज्ञासते–**का पुनरिति** । **एषा**=देवतायतनस्थिता सुन्दरी, **का**=किंजातीया, भवेत्, **किं तावद् देवी**=काचन देवकन्यास्ति ?

---

सम्भव है, हमें देखकर बालिकोचित लज्जा और भय के कारण यह यहा देर तक न ठहरे । इसलिये इस लता-कुञ्ज की आड़ में होकर देखें ।

**विदूषक**—ऐसा ही करें ।

( दोनों देखते हैं )

**विदूषक**—( देख कर आश्चर्य से ) हे मित्र ! देख, देख । अहा ! बड़ा ही आश्चर्य है । यह तो न केवल वीणा चातुर्य से ( हमें ) सुखी कर रही है, किन्तु वीणा-चातुर्य के अनुरूप ( अपने ) सौन्दर्य से भी ( हमारी ) आँखों को आनन्द दे रही है । तो यह कौन होगी ? क्या यह कोई देवी है ? या नाग कन्या ? या कोई विद्याधर की पुत्री ? अथवा सिद्धों के कुल में उत्पन्न हुई कोई बालिका है ?

---

१ 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमर ।

नायकः—[ सस्पृहमवलोकयन् ] **वयस्य ! केयमिति नावगच्छामि। एतत् पुनरहं जानामि ।**

**स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुःसहस्रं हरे-**
**र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः स्थिते।**

---

**आहोस्वित्**=अथवा, **नागकन्यास्ति** ? विद्याधरपुत्री, सिद्धकुलोत्पन्ना वा काचिदस्ति । देवादिषु यादृशं सौन्दर्यं प्रसिद्धं तादृशमेवास्या अपि दृश्यते, परं विशिष्य न निर्णीयते—केयं किंजातीयेति भावः ।

नायकोक्तौ **सस्पृहमिति**—स्पृहा=अभिलाषः, तया सहेति सस्पृहम् । **केयमिति**—इयं का—इत्यहमपि, न अवगच्छामि—न जानामि । **एतदिति**—पुनः शब्दस्त्वर्थे—किन्त्वेतदहं जानामि—इत्यर्थः ।

किं जानासीति जिज्ञासायामाह—**स्वर्गस्त्रीति**। **इयम्, यदि स्वर्गस्त्री**=स्वर्गलोकवासिनी काचन देवकन्या स्यात् । **तत्**=तर्हि, **हरेः**=इन्द्रस्य, **चक्षुःसहस्रम्**=चक्षुषा नेत्राणाम्, सहस्रम्, सहस्रसंख्याकानि चक्षूंषि—इत्यर्थः । **कृतार्थम्**=कृत—सिद्धः अर्थः—प्रयोजनं यस्य तत्, सफलमिति भावः, **अभवत्**=जातम् । [ रम्यवस्तुनिरीक्षणमेव चक्षुःफलम्, इयं च सर्वरम्यातिशायिनी, अत इमां दृष्ट्वैव चक्षुःसहस्रफलमिन्द्रेण लब्धम्, अन्यथा व्यर्थमेव तस्य भवेत् चक्षुःसहस्रम् इति भावः ] **चेत्**=यदि, इयं **नागी**=नागकन्या, स्यात्, तर्हि **अस्याः मुखे**=आनने, **स्थिते**=विद्यमाने सति, **रसातलम्**=पातालम्, **शशभृता**=[ शशं बिभर्तीति शशभृत्, तेन ] पूर्णचन्द्रमसा, **शून्यम्**=रहितम्, न=स्यादित्यर्थः । **चेत्, इयम्, विद्याधरी**=विद्याधरस्य देवयोनिविशेषस्य कन्याऽस्ति, तर्हि, **नः**=अस्माकम्, **जातिः**=विद्याधरनाम्ना प्रसिद्धा जातिः, **सकलान्यजातिजयिनी**=सकलासु, अन्यासु जातिषु, जयिनी—उत्कर्षवती, अस्ति । [ वीणावादनविज्ञानेन, सौन्दर्येण चानुपमयाऽनया विद्याधरजातेर्महानुत्कर्षः सम्पन्नः, नहीदृशं सौन्दर्यं वादनकलानैपुण्यं चान्यजातिषु क्वाप्यवलोक्यत इति भावः ] **यदि, इयम्, सिद्धान्वयजा**=सिद्धानाम्—सिद्धाख्यदेवयोनिविशेषाणाम्,

---

**नायक**—(उत्सुकता से देखता हुआ) मित्र ! यह कौन है, यह तो मैं नहीं जानता, किन्तु इतना तो जानता हूँ कि—

यदि यह कोई स्वर्गसुन्दरी है तो इन्द्र की हजार आँखें कृतार्थ होगईं। यदि नागकन्या है तो इसके मुख के विद्यमान होते हुए पाताल लोक चन्द्रमा

जातिर्न[1] सकलान्यजातिजयिनी विद्याधरी चेदियं
स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धा प्रसिद्धास्ततः ॥१६॥

विदूषक —[नायकमवलोक्य सहर्षमात्मगतम्] दिट्ठिआ चिरस्स दाव कालस्स पडिदो क्खु एसो गोअरे मम्महस्स। [आत्मानं निर्दिश्य भोजनमभिनीय] अहवा णहि णहि, मम एव्व एकस्स बह्मणस्स।

दिष्ट्या[2] चिरस्य तावत् कालस्य पतितः खल्वेष गोचरे मन्मथस्य। अथवा नहि नहि, ममैव एकस्य ब्राह्मणस्य।

अन्वये–कुले, जाता–उत्पन्ना, स्यात्, ततः=तर्हि सिद्धाः, त्रिभुवने=त्रिषु भुवनेषु [ समाहारे द्वन्द्व ] प्रसिद्धाः=प्रख्याता, स्युरिति शेष, सिद्धेष्वप्यस्य रूपस्य कलानैपुण्यस्य च पूर्वमदर्शनाद् इति भावः।

अनेन नायिकाया अपूर्वं सर्वातिशायिसौन्दर्यमभिव्यज्यते। द्वितीय पादे नायिकामुखसम्बन्धेन पातालस्य सार्वदिकपूर्णचन्द्रवत्त्वबोधनेन मुख चन्द्रमसोरभेदातिशयोक्ति, इतरलोकापेक्षया पातालस्य व्यतिरेकश्च व्यङ्ग्यौ। अनयोश्चैकाश्रयानुप्रवेशसंकरः। सन्देहोपन्यासात् सन्देहालङ्कृति। एवं नायिकानुपमगुणवर्णनया तस्या नायकस्यानुरागो व्यज्यते। शार्दूलविक्रीडित वृत्तम् ॥१६॥

नायकमवलोक्येति–नायकस्य वैराग्यापगम, अनुरागोत्पत्तिश्च विदूषकस्य हर्षे हेतु। दिष्ट्येति–दिष्ट्येत्यानन्दसूचकमव्ययम्। एषः= नायक, चिरस्य कालस्य=चिरकालानन्तरम् इत्यर्थ। मन्मथस्य=कामस्य, गोचरे पतितः=कामवशोऽभवदित्यर्थ। आत्मानं निर्दिश्य=अङ्गु

से रहित नहीं (कहा जा सकता)। यदि यह विद्याधरी है तो हमारी जाति अन्य सब जातियों से बाजी ले गई और यदि यह सिद्ध कुल में उत्पन्न हुई है तो समझो कि सिद्ध तीनों लोकों में विख्यात होगए ॥१६॥

विदूषक—(नायक को देख कर, प्रसन्न होकर, मन में) सौभाग्य से बड़ी देर के बाद यह कामदेव के चंगुल में फँसा है (अपनी ओर संकेत और भोजन करने का अभिनय करके) अथवा नहीं नहीं, मेरे अकेले ब्राह्मण के (चंगुल में फँसा है)।

१ 'अन्ववायोऽन्वयो वंश' इति कुलनामस्वमर।
२ 'दिष्ट्या समुपजोषं चेत्यानन्दे–' इत्यमर।

चेटी—[सप्रणयम्] भट्टिदारिए ! णं भणामि, किं एदाए णिक्करुणाए पुरदो वाइदेण ? [इति वीणामाक्षिपति]

भर्तृदारिके ! ननु भणामि, किमेतस्या निष्करुणायाः पुरतो वादितेन ?

नायिका—[सरोषम्] हञ्जे ! मा भअवदिं गोरिं अधिक्खिव । णं अज्ज किदो मे भअवदीए पसादो ।

हञ्जे ! मा भगवतीं गौरीमधिक्षिप । नन्वद्य कृतो मे भगवत्या प्रसादः ।

चेटी—[सहर्षम्] भट्टिदारिए ! कहेहि दाव कीरिसो ?

भर्तृदारिके ! कथय तावत् कीदृशः ?

नायिका—हञ्जे ! जाणामि, अज्ज सिविणए एदं ज्जेव वीणं वादअंती भअवदीए गोरिए भणिदम्हि—"वच्छे मलअवदि ! परितुट्ठम्हि तुह एदिणा वीणातंतिवादणादिसएण, इमाए अ बालजणदुक्कराए असाहारणाए ममोवरि भत्तिए । ता विज्जाहरचक्कवट्टी अचिरेण ज्जेव पाणिग्गहणं दे णिव्वत्तइस्सदि" त्ति ।

---

ल्यारम्भनिर्देशं नाटयितेत्यर्थः । अथवेति पक्षान्तरे । नहीति—न मकरध्वजं मन्मथगोचरे पतित इति, अपि तु ममैवायमधीनतां गत इति भाव. । इयन्तं कालमयं शमपरायणो न मम मनागप्यशृणोत् । इदानीं तु कामबाणासुरानिपातित विषयलम्पटं यथेच्छं नर्तयिष्यति हृदयम् । चेटी पुनरपि नायिका व्यर्थवीणावादनप्रयासाद् निवर्तयति—भर्तृदारिके इति । आक्षिपति= नायिकाहस्ताद् वीणामाच्छिनत्ति । नायिकोक्तौ मा—इति । अधिक्षिप= तिरस्कुरु । नन्विति—अद्य, भगवत्या, मे, प्रसादः=अनुग्रहो वरप्रदानरूपः, कृत । चेटी प्रसाद जिज्ञासते—भर्तृदारिके इति ।

---

चेटी—(प्रेम-पूर्वक) भर्तृदारिके ! मैं कहती तो हूँ कि इस निष्ठुरा (गौरी) के आगे (वीणा) बजाने से क्या लाभ ? (यह कह कर वीणा छीनती है)

नायिका—(क्रोध से) हञ्जे ! भगवती गौरी की निन्दा न कर । आज भगवती ने मेरे ऊपर कृपा की है ।

चेटी—(प्रसन्न होकर) भर्तृदारिके ! जरा कहो तो कैसी कृपा ?

हञ्जे! जानामि, अद्य स्वप्ने एतामेव वीणां वादयन्ती भगवत्या गौर्या भणिताऽस्मि—"वत्से मलयवति! परितुष्टाऽस्मि तवैतेन वीणाविज्ञानातिशयेन, अनया च बालजनदुष्करया असाधारणया ममोपरि भक्त्या। तद् विद्याधरचक्रवर्ती अचिरेणैव ते पाणिग्रहणं निर्वर्त्तयिष्यति" इति।

चेटी—[ सहर्षम् ] भट्टिदारिए! जइ एव्वं, ता कीस सिविणअं इमं भणीअदि? ण हिअअत्थिदो वरो देईए दिण्णो।

भर्तृदारिके! यद्येवं, तत् कस्मात् स्वप्नः अयं भण्यते? ननु हृदयस्थितो वरो देव्या दत्तः।

---

नायिका चेटीं प्रत्युत्तरयति–हञ्जे इति। भणितास्मि=कथितास्मि। [ कर्मणि क्त ] परितुष्टा=प्रसन्ना। वीणाविज्ञानातिशयेन=वीणाया वीणाविषये, यद् विज्ञानं नैपुण्यम्, तस्यातिशय उत्कर्षस्तेनेत्यर्थः। बालजनदुष्करया=बालजनैर्दुष्करा दुःखेन कर्तुं शक्या, तया। असाधारणया=असामान्यया विशिष्टया। तत्=तस्मात्, विद्याधरचक्रवर्ती=चक्रं राजमण्डलम्, वर्तयति शास्तीति चक्रवर्ती, विद्याधराणां चक्रवर्ती सम्राट्, अचिरेणैव=शीघ्रमेव, पाणिग्रहणम्=विवाहम्, निर्वर्तयिष्यति=विधास्यति, त्वां स्वपत्नीत्वेन स्वीकरिष्यतीत्यर्थः। यद्यपि मलयवतीपाणिग्रहणानन्तरं जीमूतवाहनस्य चक्रवर्तिपदारोहणं जातं तथापि चक्रवर्तिपदं भविष्यदर्थे णिनिर्बोध्यः। तथा च यो विद्याधरस्य चक्रवर्तिपदमारोक्ष्यति स त्वां परिणेष्यति इति भावः। भर्तृदारिके इति—यद्येवं ते भगवत्या वरो दत्तः, तर्हि कस्माद् हेतोः स वरस्त्वया स्वप्न इति कथ्यते। मिथ्यावस्तु स्वप्नशब्देन व्यवह्रियते। न चायं मिथ्या। यतो वस्तुतो हृदयेनापि त्वं विद्याधरचक्-

---

नायिका—चेटी! मुझे स्मरण है कि आज स्वप्न में जब मैं इसी वीणा को बजा रही थी तो भगवती गौरी ने मुझे कहा—"बेटी! मैं तेरी इस वीणा बजाने की कुशलता और मेरे प्रति इस असाधारण भक्ति से, जो कि बालकों में दुर्लभ होती है, प्रसन्न हूँ। इसलिए (कोई) विद्याधरचक्रवर्ती शीघ्र ही तेरा पाणिग्रहण करेगा"।

चेटी—( हर्ष से ) भर्तृदारिके! यदि ऐसी बात है तो स्वप्न क्यों कहती हो? देवी ने मनचाहा ही वर दिया है।

विदूषकः—[ श्रुत्वा ] भो वअस्स ! अवसरो क्खु एसो अह्माणं देईदंसणस्स । ता एहि उवसप्पम्ह ।

भो वयस्य ! अवसरः खल्वेषोऽस्माकं देवीदर्शनाय । तदेहि उपसर्पावः ।

नायकः—न तावत् प्रविशामि ।

विदूषकः—[ अनिच्छन्तमपि नायकं बलादाकृष्य उपसृत्य ] सोत्थि भोदिए । भोदि ! सच्चं ज्जेव चतुरिआ भणादि, वरो एव्व सो देईए दिण्णो ।

स्वस्ति भवत्यै । भवति ! सत्यमेव चतुरिका भणति, वर एव स देव्या दत्तः ।

---

वर्तितमेव वरम्–पतिं कामयते । अतस्त्वदहृदयस्थित एव वरस्तुभ्यं देव्या दत्तः । अत्र चेट्या वक्रोक्त्या नायिकाया हृदयमुद्घाटितम् ।

अथ विदूषको नायकस्य पूर्वमुदितानुरागमुद्दीपयितुं समुचितमवसरं मन्वा-नस्तं देवीदर्शनाय प्रेरयति–भो वयस्येति । देवीदर्शनाय=देव्या भगवत्या गौर्याः [ देव्या नायिकाया मलयवत्या –इति तु विदूषकस्य हृदि स्थितोऽ-भिप्रायः ] दर्शनाय–साक्षात्काराय ।

नायकः प्रवेष्टुं निषेधति—न तावदिति ।

स्वस्तीति—भवत्यै=नायिकायै मलयवत्यै, स्वस्ति=कल्याणम्, अस्तु । ['नमःस्वस्ति–'इत्यादिना चतुर्थी] 'भवति' इति विदूषकेण नायिकायाः संबोधनं नाट्यनियमानुरोधेन । तदुक्तं दर्पणे—

वदेद् राज्ञीं च चेटीं च भवतीति विदूषकः ।

सत्यमेवेति—एषा चेटी सत्यमेव भणति, देव्या एव वर एव दत्त इत्यापाततः शब्दयोजना । एष उपस्थितो नायक एव वरो वरणीयः पतिर्दत्त इति तु हृदि स्थितोऽभिप्रायः ।

---

विदूषक—( सुनकर ) हे मित्र ! हमारे लिये देवी के दर्शन का यही अवसर है । आओ, चलें ।

नायक—मैं तो नहीं जाऊँगा ।

विदूषक—( झिझकते हुए नायक को बलपूर्वक खैंच कर और समीप जाकर ) आपका कल्याण हो । यह ठीक ही कहती है । देवी ने यह 'वर' ही दिया है ।

**नायिका**—[ ससाध्वसमुत्तिष्ठन्ती नायकमुद्दिश्य ] **हञ्जे ! को ए क्खु एसो ?**

हञ्जे ! को नु खल्वेषः ?

**चेटी**—[ नायकं निरूप्यापवार्य्य ] **इमाए अणण्णसरिसाए आकिदीए एसो सो भअवदीए पसादीकिदो त्ति तक्केमि ।**

अनया अनन्यसदृश्या आकृत्या एष स भगवत्या प्रसादीकृत इति तर्कयामि ।

**नायिका**—[ सस्पृहं सलज्जञ्च नायकमवलोकयति ]

**नायकः**—तनुरियं तरलायतलोचने !

श्वसितकम्पितपीनघनस्तनि !।

---

उत्तिष्ठन्तीति प्रस्थातुमिति शेषः । **नायकमुद्दिश्येति**—पृच्छतीति शेषः । **निरूप्य**=दृष्ट्वेत्यर्थः । **अपवार्य**=नायको न शृणुयादिति हेतोः परावृत्य, कथयतीति शेषः । तदुक्तं दशरूपके—

'रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम्' ।

**अनयेति**—**अनया**=पुरोदृश्यमानया, **अनन्यसदृश्या**=अनन्यसाधारण्या-लोकोत्तरया, **आकृत्या**=सौन्दर्येणेत्यर्थः, उपलक्षितः, **एषः**=पुर उपस्थितः, सोऽस्ति, यो भगवत्या गौर्या, स्वप्ने तुभ्यं **प्रसादीकृतः**=स्वप्रसादरूपेण दत्तः । इति **तर्कयामि**=अनुमिनोमि ।

**सस्पृहमिति**—अनेन मलयवत्या नायकविषयोऽनुरागः सूचितः । तदुक्तं दर्पणे—'दृष्ट्वा दर्शयति व्रीडां संमुखं नैव पश्यति' इत्यादि ।

स्वविषये नायिकायाः स्पृहामनुभूयोद्दीपिततद्विषयानुरागो नायकश्चाटूक्तिभिस्तां संबोधयति—**तनुरिति** । **तरलायतलोचने !**=तरले-चपले, आयते-विस्तृते, लोचने-नेत्रे यस्यास्तथाभूते ! **श्वसितकम्पितपीनघनस्तनि !**=श्वसितेन-श्वासेन, कम्पितौ-वेपमानौ [आदिकर्मणि क्तः], पीनौ-स्थूलौ,

---

**नायिका**—( हड़बड़ा कर उठती हुई नायक की ओर इशारा करके ) चेटी ! यह कौन है ?

**चेटी**—( नायक को देखकर ) इस असाधारण आकृति से अनुमान करती हूँ कि यह वही ( वर ) है, जो भगवती ने तुम्हें प्रसाद रूप में दिया है।

( नायिका नायक को लज्जा तथा चाह की दृष्टि से देखती है )

**नायक**—हे चञ्चल और दीर्घ नयनों वाली ! श्वास ( दम फूलने ) के

श्रममल तपसैव गता पुन
किमिति सम्भ्रमकारिणि ! खिद्यते ?॥१७॥

**नायिका**—[ अपवार्य ] हञ्जे ! अदिसद्धसेण ण सक्कुणोमि एदस्स अहिमुही ठादुं । [ नायक तिर्य्यक् सलज्जम् पश्यन्ती किञ्चित् पराङ्मुखी तिष्ठति ] ।

हञ्जे ! अतिसाध्वसेन न शक्नोमि एतस्याभिमुखी स्थातुम् ।

**चेटी**—भट्टिदारिए ! किं एदम् ? भर्तृदारिके ! किमेतत् ?

---

नौ–कठिनौ, स्तनौ–कुचौ यस्यास्तादृशि ! [ स्तनशब्दात् 'स्वाङ्गाच्चोपसर्जनाद्–' त्यादिना ङीप्, उभयमपि सम्बुद्धौ रूपम् । ] **इयम्**=पुरो दृश्यमाना, ते **तनु**=शरीरयष्टि , **तपसैव**=देव्याराधनव्रतादिनैव, **अलम्**=अत्यर्थम्, **श्रमम्**=श्रान्तिम्, **गता**=प्राप्तास्ति । **संभ्रमकारिणि !** [ सम्भ्रमस्त्वरा, तां करोतीति सम्भ्रमकारिणी, तत्सम्बोधने रूपम् ] इत प्रस्थातु त्वरमाणे ! त्यर्थ । **पुनः**=भूयोऽपि, **किमिति**=केन निमित्तेन, **खिद्यते**=आयास क्रियते । तव तन्वी तनुस्तपसैव निरतिशय श्रान्ता, किमर्थं पुनरपि प्रस्थान-परयेयमायास्यत इति भाव । अत्र नायकगतो नायिकाविषय पूर्वानुरागो व्यज्यते । तदुक्त दर्पणे—

'श्रवणाद् दर्शनाद् वापि मिथ सरूढरागयो ।
दशाविशेषो योऽप्राप्तौ पूर्वराग स उच्यते ॥'

नायिकात्रालम्बनम् । तस्यास्तरलायतलोचनत्वकम्पितपीनघनस्तनत्वा-रोपनम् । चाटूक्तिरनुभाव । उत्कण्ठादयो व्यभिचारिण । श्वासकम्पौ नायिकाया उद्वेगमभिव्यङ्क्त । द्रुतविलम्बित वृत्तम् । तल्लक्षण यथा—'द्रुत विलम्बितमाह नभौ भरौ' ॥१७॥

चेट्युक्तौ **किमेतदि**ति । किमेतदनुचितमनुष्ठीयते । अतिथेरस्मे पराङ्मुखीभूयावस्थानमनुचितमिति भाव ।

---

रण तुम्हारे स्थूल और कठिन कुच काँप रहे हैं । तुम्हारा यह शरीर तपस्या ने से ही काफी दुर्बल होचुका है तो फिर क्यों घबराकर कष्ट उठाती हो !

**नायिका**—(हटकर) सखि ! अधिक घबराहट ( भय ) के कारण मैं इसके मने नहीं ठहर सकती । (नायक को लज्जापूर्वक तिरछी दृष्टि से देखती हुई सी सा मुँह फेर कर खड़ी होजाती है )

**चेटी**—भर्तृदारिके ! यह क्या ?

नायिका—हञ्जे ! ण सक्कुणोमि एदस्स आसरणे चिट्ठिदुं। ता एहि अरणदो गच्छम्ह । [ उत्थातुमिच्छति । ]

हञ्जे! न शक्नोमि एतस्यासन्ने स्थातुम्। तदेह्यन्यतो गच्छावः

विदूषकः—भो ! भाअदि क्खु एसा । मम पठिअविज्जं विअ मुहुत्तअं धारेमि ।

भो ! बिभेति खल्वेषा। मम पठितविद्यामिव मुहूर्तं धारयामि।

नायकः—को दोषः ?

विदूषकः—भोदि ! किं एत्थ तुह्माणं तवोवणे ईरिसो आआरो ?—जेण अदिही आअदो वाआमेत्तएण वि ण संभावीअदि ?

भवति ! किमत्र युष्माकं तपोवने ईदृश आचारः ?—येनातिथिरागतो वाङ्मात्रेणापि न सम्भाव्यते ?

---

विदूषके क्तौ भो इति । एषा बिभेति=अपरिचितपुरुषदर्शनाद् इति शेष । तद् एनामित्त प्रतिष्ठमानाम्, मुहूर्तं=स्वल्पसमय यावत्, धारयामि=गमनाद् वारयामि । कामिव-मम पठितविद्यामिव= यथाहं मन्दमेधतया स्वाधीतं मुहूर्तमात्र धारयामि, नाधिकम्, तथेमामपि । विदूषकस्य परिहासशीलत्वाद् परिहासार्थैवेयमुपमा । को दोष इति-धार्यता न कोऽपि दोष इति भाव ।

भवतीति—अतिथि =अभ्यागत , न विद्यते तिथिरागमनातिथिर्यस्य स , अकस्माद् आगन्तुक इत्यर्थ । वाङ्मात्रेण=वागेवेति वाङ्मात्रम्, तेन [ मयूरव्यंसकादित्वात् समास ] केवलया सूनृतया वाण्यापीत्यर्थ । न

---

नायिका—चेटी ! म इसके समीप नहीं ठहर सकती । इसलिये आओ, दूसरी ओर चलें । (उठने की इच्छा करती है)।

विदूषक—हे मित्र ! यह डरती है । अपनी पढ़ी हुई विद्या की तरह थोड़ी देर इसे रोकता (ठहराता) हूँ ।

नायक—क्या हर्ज है ?

विदूषक—देवि ! क्या यहां तुम्हारे तपोवन में ऐसा शिष्टाचार है कि आये हुए अतिथि का केवल वाणी से भी सत्कार नहीं किया जाता ?

चेटी—[ नायिकां दृष्ट्वा आत्मगतम् ] अणुरज्जदि विअ एत्थ एदाए दिट्ठी। भोदु एव्वं दाव भणिस्सं। [ प्रकाशम् ] भट्टिदारिए! जुत्तं भणादि बह्मणो। उइदो क्खु दे अदिहिजणसक्कारो। ता किं ईदिसे महाणुभावे पडिवत्तिमूढा विअ चिट्ठसि? अहवा चिट्ठ तुवं, अहं एव्व जधाणुरूवं करइस्सं। [ नायकं निर्दिश्य ] साअदं अज्जस्स? आसणपडिग्गहेण अलङ्करेदु अज्जो इमं पदेसं।

अनुरज्यतीवात्रैतस्या दृष्टिः। भवतु एवं तावद् भणिष्यामि। भर्तृदारिके! युक्तं भणति ब्राह्मणः। उचितः खलु ते अतिथिजन-सत्कारः। तत् किमीदृशे महानुभावे प्रतिपत्तिमूढा तिष्ठसि? अथवा तिष्ठ त्वम्, अहमेव यथाऽनुरूपं करिष्यामि। स्वागत-मार्यस्य। आसनपरिग्रहेण अलङ्करोत्वार्य इमं प्रदेशम्।

सम्भाव्यते=न सत्क्रियते। अतिथिर्वाङ्मात्रेणापि सत्काराकरणं सदाचार-विरुद्धमिति भावः।

अनुरज्यतीवेति—एतस्याः=मलयवत्याः, दृष्टिः, अत्र=नायके, अनु-रज्यतीव=सानुरागेवास्ति। इमां नायके जातानुरागामिव लक्षयामीति भावः। ईदृशे=अनन्यसामान्यसौन्दर्येण सौजन्योचितेन व्यवहारेण च प्रकटित-स्वमाहात्म्ये, महानुभावे=महान्, अनुभाव—प्रभावस्तेजो यस्य तादृशे, [ विषयसप्तमीयम् ] ईदृशमहानुभावपुरुषविषय इत्यर्थः, किम्=केन कारणेन, प्रतिपत्तिमूढेव=प्रतिपत्तौ[1] गौरवे—सत्क्रियायाम्, मूढेव, कर्तव्यज्ञानशून्येव, तिष्ठसि=वर्तसे? स्वकर्तव्यमतिथिसत्कारं किमिति विस्मरसि। अथवा=अत-

चेटी—(नायिका को देख कर मन ही मन में) इसकी आँखें इस (नायक) के ऊपर अनुरक्त सी जान पड़ती हैं। तो मैं इस तरह बात छेड़ती हूं। (मुँह से बोलते हुए) भर्तृदारिके! यह ब्राह्मण ठीक कहता है। आप को अतिथि का सत्कार करना ही चाहिये। तो किस लिये इस श्रेष्ठ पुरुष के सत्कार के विषय में मूढ सी खड़ी हो। अथवा आप ठहरिए, मैं ही यथोचित (सत्कार) कर दूंगी। (नायक से) आपका स्वागत हो। आसन स्वीकार करके श्रीमान् इस स्थान को अलंकृत करें।

१ 'प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च'—इति मेदिनी।

**विदूषकः**—भो वअस्स ! सोहणं एसा भणादि । उवविसिअ एत्थ मुहुत्तअं वीसमम्ह।

भो वयस्य ! शोभनमेषा भणति । उपविश्यात्र मुहूर्तं विश्राम्यावः ।

**नायकः**—युक्तमाह भवान् । [ उभावुपविशतः ]

**नायिका**—[ चेटीमुद्दिश्य ] अइ परिहाससीले ! मा एव्वं करेहि। कदावि कोवि तावसो पेक्खदि, तदो मं अविणीदेत्ति सम्भाव इस्सदि ।

अयि परिहासशीले ! मैवं कुरु । कदापि कोऽपि तापसः प्रेक्षते, ततो मामविनीतेति सम्भावयिष्यति ।

[ ततः प्रविशति तापसः ]

**तापसः**—आज्ञापितोऽस्मि कुलपतिना कौशिकेन । यथा—

---

चतुरागा आसनान्यप्यप्रभवन्ती तिष्ठ त्वम्, अहमेव दासीजनस्ते, **यथानुरूपम्**=उचितमनतिक्रम्य-यथोचितमिति भाव । **करिष्यामि**=आतिथ्यं सम्पादयिष्ये । चेटी सत्करोति-**स्वागतमिति** । **आसनपरिग्रहेण**=आसनस्य आस्तरणस्य, परिग्रहेण-स्वीकारेण ।

विदूषकश्चेद्युक्तं समर्थयते-**भो वयस्येति** ।

एवं चेटीवचसा सविदूषके नायके दत्तास्तरणे उपविशति सति अपरिचितजनसन्निधानेनास्मनोऽविनयमाशङ्कमाना नायिका चेट्यै कुप्यति-**अयि इति** । त्वं सर्वदैवोचितमनुचितं वा समयमविभाव्यैव परिहासं करोषि । **एवम्**=अपरिचितजनसन्निधानम् । **मा कुरु** [ माशब्दोऽयम्, नमाङ्, अत एव न माङि लुङ् ] । एवमकरणे हेतुमाह-**कदापीति** । **कदापि** कदाचित्, **कोऽपि**=अतर्कितोपनत, तापस यदि मां **प्रेक्षते**=अपरिचितजनसन्निहिताम् इति शेष, तत =तर्हि, स माम्, **अविनीता**=कुलीनकन्यक

---

**विदूषक**—हे मित्र ! यह ठीक कहती है । थोड़ी देर बैठ कर आराम कर लें ।

**नायक**—आपने ठीक कहा । ( दोनों बैठते हैं )

**नायिका**—( चेटी से ) अरी ठठोलीवाज ! ऐसा न कर । ( यदि कदाचित् कोई तपस्वी देखे तो मुझे निर्लज ही समझेगा ।

**"वत्स शाण्डिल्य ! पितुराज्ञया सिद्धराजमित्रावसुर्भविष्यद्-विद्याधरचक्रवर्त्तिनं कुमारजीमूतवाहनमिहैव मलये पर्वते क्वापि वर्त्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमद्य गतः। तच्च प्रतीक्षमाणाया मलयवत्याः कदाचित् मध्यन्दिनसवन-वेलावधिरतिक्रामेत्, तदेनामाहूयागच्छ" इति । तत् तपोवन-गौरीगृहमेव गच्छामि ।** [परिक्रम्य भूमिं निरूप्य सविस्मयम् ] **अये ! कस्य पुनरियं पांशुले भूप्रदेशे प्रकाशचक्रचिह्ना पदपङ्क्तिः ?** [अग्रतो जीमूतवाहनं निर्दिश्य] **नूनमस्यैवेयं महापुरुषस्य। तथाहि-**

---

जनोचितविनयशून्येयमिति, **सम्भावयिष्यति**=उत्प्रेक्षिष्यते शङ्किष्यते ।

अत्र कोऽपि तापस. प्रेक्षत इत्यनेन जनिष्यमाणप्रवेशस्तापसः सूचितः । 'नासूचितस्य प्रवेश' इति नाट्यनियमात् ।

तापसं प्रवेशयति—तत इति । **आज्ञापितोऽस्मीति । कुलपतिना**= कुलाना छात्रसमूहानाम्, पतिः—भोजनाच्छादनाध्यापनादिना पालयिता, तेन। तदुक्तम्—

सुनीनां दशसाहस्रं योऽन्नपानादिपोषणात् ।
अध्यापयति विप्रर्षि स वै कुलपतिः स्मृतः ॥

**कौशिकेन**=कुशिककुलोत्पन्नेन। अग्रे सुगमम्। **तमिति—तम्**=युवराजं मित्रावसुम्, **मध्यन्दिनसवनवेलावधिः**=मध्यन्दिने-मध्याह्ने, सवनम्[1]—स्नानम्, तस्य वेला—समयः, तस्या., अवधिः—सीमा, **अतिक्रामेत्**=व्यतीयात्। गौर्या

---

( तपस्वी का प्रवेश )

**तापस**—कुलपति कौशिक ने मुझे आज्ञा दी है कि "बेटा शाण्डिल्य ! पिता की आज्ञा से आज सिद्धराज मित्रावसु अपनी बहन मलयवती के वर के लिये यहीं कहीं मलयपर्वत पर विद्यमान भावी विद्याधर चक्रवर्ती कुमार जीमूतवाहन को ढूँढने गया है । उस ( मित्रावसु ) की प्रतीक्षा करते हुए उस ( मलयवती ) का मध्याह्न स्नान समय न निकल जावे, इसलिये उसे बुला लाओ" इसलिये, तपोवन स्थित गौरी के मन्दिर में जाता हूं । ( घूमता हुआ भूमि पर देख कर आश्चर्य से ) अरे, इस धूली में ( ये ) किसके पाओं के चिह्न हैं । जिन में चक्र का चिह्न स्पष्ट दीख रहा है । ( सामने जीमूतवाहन को देखकर ) ये अवश्य इसी महापुरुष के ( पादचिह्न ) हैं । क्योंकि —

---

१ 'सवनं स्वध्वरे स्नाने सोमनिर्दलनेऽपि च' इति मेदिनी ।

उष्णीषः स्फुट एष मूर्द्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्द्धते ।

उपासनार्थं गृहीतव्रता मलयवती प्रातरादिषु तिसृष्वपि संध्यासु स्नाति । तदेव तस्य मध्याह्नस्नानावसर । अत मोऽवसरस्तस्या कदाचिद् व्यतीयाद्, इति हेतो, **एनाम्**=मलयवतीम् । आगच्छ **अये** इति, **पांशुले**=पांसुले धूलिबहुले [ पांशुलशब्दस्तालव्यमध्योऽप्यस्ति–'तालव्या अथ दन्त्याश्च शम्बशूकरपांशव '–इति द्विरूपकोश. ] **प्रकाशचक्रचिह्ना**=प्रकाशम्–व्यक्तिमापन्नं स्पष्टं भासमानम्, चक्रस्य, चिह्नम्–लक्ष्म यत्र सा । **पदपङ्क्तिः**=पदानां पादचिह्नानाम् पङ्क्ति । पाणिपादे शङ्खचक्रचिह्नलाञ्छितश्चक्रवर्ती भवतीति सामुद्रिकागमसिद्धान्त । अत कस्यचिद् भविष्यच्चक्रवर्तिन एवैषा पदपङ्क्ति । **नूनमिति**-नूनमिति निश्चये । **महापुरुषस्य**=महाश्चासौ पुरुषस्तस्य । [ 'आन्महत '–इत्यादिना महच्छब्दस्यात्वम् ] पूर्वनिश्चयं समर्थयते–**तथाहीति** ।

**उष्णीष** इति । **यथा**=येन प्रकारेण, यस्माद्धेतोरित्यर्थ । **मूर्धनि**=शिरसि, **स्फुटः**=प्रकाशमान, **एष** **उष्णीषः**=चक्रवर्तिलक्षणभूत उष्णीषाख्यो रेखाविशेष, विभाति=विशिष्य शोभते । [ उष्णीषो मुकुटमिति तु नोचितं व्याख्यानम्, सामुद्रिकलक्षणवर्णनप्रसङ्गे–मुकुटनिर्देशस्यासङ्गते, तस्य सामुद्रिकलक्षणत्वाभावात् । बुद्धद्वरांशिवरामोऽप्युष्णीषमिह सामुद्रिकलक्षणत्वेनैवावर्णयत् ], **भ्रुवोः**, **अन्तः**=मध्ये, **इयम्**=स्फुटं प्रतीयमाना, **ऊर्णा**=लोमावर्त, विभातीति शेष । **चक्षुः**, **तामरसानुकारि**=तामरसं कमलम्, अनुकरोति तच्छीलम्, कर्णान्तविश्रान्ततया विस्तृतत्वेन रक्ततया च कमलदलसदृशमित्यर्थ । **वक्षःस्थलम्**=उर, **हरिणा**=सिंहेन, **स्पर्धते**=स्पर्धां करोति–हरिवक्ष स्थलवदस्य वक्ष स्थलमपि विस्तीर्णम्–इति भाव । किं **च**, **इदम्**=धूलौ व्यक्तम्, **पदद्वयम्**=पादचिह्नद्वयम्, **चक्राङ्कम्**=चक्रम्–चक्ररूप, अङ्क -चिह्न यत्र तादृशमस्ति, **तथा**=तेन प्रकारेण–

यह सिर पर उष्णीष चिह्न शोभा दे रहा है, भौहों के मध्य में ऊर्णा ( भौंरी विद्यमान ) है, आंखें कमल के समान हैं, छाती सिंह की छाती से टक्कर

१ 'पादतच्चिह्नयो स्थानत्राणयोरङ्कवस्तुनो.' इति पदशब्दार्थगणनायां मेदिनी । २ 'उष्णीषस्तु शिरोवेष्टे किरीटे लक्षणान्तरे' इति मेदिनी । ३ 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवो ' इत्यमर । ४ 'पङ्केरुहं तामरसम्' इति कमलनामस्वमर ।

चक्राङ्कञ्च यथा पदद्वयमिदं मन्ये तथा कोऽप्ययं
नो विद्याधरचक्रवर्त्तिपदवीमप्राप्य विश्राम्यति ॥१८॥

**अथवा कृतं सन्देहेन। व्यक्तमेतेनैव जीमूतवाहनेन भवितव्यम्।** [मलयवतीं निरूप्य] **अये! इयमपि राजपुत्री।** [उभौ विलोक्य] **चिरात् खलु युक्तकारी विधिः स्यात्, यदि युगल-**

---

तस्मादेतोरिति भावः। **मन्ये**=अनुमिनोमीति भावः। **अयम्**=पुरःस्थितः, **कोऽपि**=अनिर्वचनीयमहिमा युवा, **विद्याधरचक्रवर्तिपदम्**=विद्याधराणां चक्रवर्तिनः=सम्राजः, पदम्=सिंहासनम्, **अप्राप्य**=अनधिगत्य, **नो विश्राम्यति**=न विश्रमिष्यति, न निवर्तिष्यत इति भावः [ 'वर्तमानसामीप्ये वर्तमानवद् वा'—इति वर्तमानसमीपे भविष्यति लट् ] अचिरादेवास्य चक्रवर्तिपदमधिरोढ्यतीति भावः।

अत्रोष्णीषादिभिर्हेतुभिर्नायकस्य भविष्यच्चक्रवर्तित्वानुमानादनुमानालङ्कारः। तल्लक्षणं यथा—

'अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्'।

यथाशब्दोऽत्रानुमान एव। तदुक्तं विश्वकोशे—'यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः'। अयमत्रानुमानप्रयोगः—अयं युवा लप्स्यमानचक्रवर्तिपदः, उष्णीषादिचक्रवर्तिलक्षणोपेतत्वाद्, दुष्यन्तशिशुभरतादिवत्। चक्रादिचिह्नाना राजलक्षणत्वं सामुद्रिके उक्तम्। तद् यथा—

यस्य पादतले पद्मं चक्रं वाप्यथ तोरणम्।
अङ्कुशं कुलिशं वापि स राजा भवति ध्रुवम्॥
भ्रुवोर्मध्ये यस्य रोम भालश्चैव सुविस्तृतः।
करे च चरणे चिह्नं चक्रादि स हि राज्यभाक्॥

वृत्तं शार्दूलविक्रीडितम् ॥१८॥

**अथवेति—सन्देहेन कृतम्**=सन्देहो न कर्तव्य इत्यर्थः।

**इयमपीति**—इयं राजपुत्र्यपि, अत्रैव वर्तते इति शेषः। **चिरादिति**—यदि, **अन्योऽन्यानुरूपम्**=परस्परस्य योग्यम्, **एतद्**=मदग्रे वर्तमानम्,

---

होती है और दोनों हाथों पर चक्र के चिह्न हैं, इसलिये मैं समझता हू कि जो कोई भी है, यह विद्याधर चक्रवर्ती की पदवी प्राप्त किये बिना विश्राम नहीं लेगा ॥१८॥

अथवा सन्देह नहीं करना चाहिये। सचमुच, इसे ही जीमूतवाहन होना

मेतदन्योन्यानुरूपं घटयेत्। [ उपसृत्य नायक निर्दिश्य ] स्वा भवते।

**नायकः**—भगवन्! जीमूतवाहनोऽभिवादयते।

[ उत्थातुमिच्छति ]

**तापसः**—अलमलमभ्युत्थानेन। ननु "सर्वस्याभ्याग गुरुः" इति भवानेवास्माकं पूज्यः। तद् यथासुखं स्थीयताम्

**नायिका**—अज्ज! पणमामि। आर्य्य! प्रणमामि।

**तापसः**—[ नायिका निर्दिश्य ] वत्से! अनुरूपभर्तृगामि

---

**युगलम्**=यूनोर्युग्मम्, **विधि**=विरञ्चि, **घटयेत्**=मेलयेत्, तर्हि स चि **रात्**=चिरकालानन्तरम्, **युक्तकारी**=उचितकर्ता स्यात्। अथ भाव विवाहोचितं वय प्राप्तया मलयवत्या कृते चिरकाङ्क्षितो योग्यो वरो ने प्राड् मिलित आसीत्। इदानीं त्वेतदनुरूपो वरोऽयमुपलब्ध। इयमपि चार रूपेण गुणेन चानुरूपैव। तथा चानयोर्यदि विवाहो भवेत् तर्हि अस्माभि श्चिरकाङ्क्षितो योग्यसमागमो विधिना कृत स्यादिति।

**उत्थातुमिच्छति**=तापसं दृष्ट्वा अभ्युत्थानं नाटयितु यतत इत्यर्थ

**अलमलमिति**-अभ्युत्थानयत्नो न कर्तव्यः। कुत इति जिज्ञासाया माह-**ननु** इति। 'सर्वस्याभ्यागतो गुरु' इति शास्त्रवचनात् त्वमेवास्मा पूजनीय, अभ्यागतत्वाद्। **अभ्यागतः**=अतिथि, **गुरुः**=गुरुवदादरणीय

**अनुरूपेत्यादि**-अनुरूपं भर्तारं गच्छतीति-अनुरूपभर्तृगामिनी

---

चाहिये। (मलयवती को देखकर) अये, यह भी राजपुत्री है। (दोनों के देखकर) यदि विधाता एक दूसरे के योग्य इस जोड़े को मिला दे तो चिरकाल के बाद विधाता युक्तियुक्त कार्य करने वाला सिद्ध होगा। (पास जाकर नायक के प्रति) आप का कल्याण हो।

**नायक**—भगवन्! जीमूतवाहन आपको प्रणाम करता है। (अभ्युत्थान करना चाहता है)

**तपस्वी**—रहने दीजिये, उठने (अभ्युत्थान) की आवश्यकता नहीं। "अतिथि सब का गुरु होता है" इसके अनुसार आप ही हमारे पूज्य हैं, इसलिये आराम से बैठिये।

**नायिका**—आर्य! प्रणाम करती हू।

**तापस**—(नायिका से) वत्से! अपने योग्य वर को प्राप्त करो।

भूया । राजपुत्रि ! त्वामाह कुलपति कौशिकः । यथा—"अतिक्रामति मध्यन्दिनस्नवनवेला, तत् त्वरितमागम्यताम्" इति ।

**मलयवती**—जं गुरु आणवेदी । [आत्मगतम्]

यद् गुरुराज्ञापयति ।

एक्कत्तो गुरुवअणं अण्णत्तो दइअदंसणसुहाइं ।
गमणागमणाधिरूढं अज्ज वि दोलायदि मे हिअअं ॥१६॥

एकतो गुरुवचनम् अन्यतो दयितदर्शनसुखानि ।
गमनागमनाधिरूढमद्यापि दोलायते मे हृदयम् ॥

---

स्वस्वरूपयोग्य वर प्राप्नुहि-इति भाव । **त्वरितम्**=शीघ्रम् । नायिका गुरोराज्ञा स्वीकरोति-**यद्गुरुरिति** ।

**एकत** इति—**एकत** =एकस्मिन् पक्षे, [ सार्वविभक्तिकस्तसि ] **गुरुवचनम्**=गुरो –कौशिकस्य, वचनम्–आज्ञा, गृह प्रति निवर्तनायेति शेष । **अन्यत** =अन्यस्मिन् पक्षे, **दयितदर्शनसुखानि**=दयितस्य-प्रियस्य-जामूतवाहनस्य, दर्शनम्–साक्षात्कार , तत्सुखानि–तज्जनितानन्द-सन्दोह , अत , **मे**=मम, **हृदयम्**=मन , **गमनागमनाधिरूढम्**=गमन गृह प्रति, अगमनम्–गृहमगत्वात्रैव दयितदर्शनसुखानुभव , तयो , अधिरूढम्–उत्सुकम्, सत्, **अद्यापि**, **दोलायते**=दोलेव न स्थिरीभवति, गन्तव्यमगन्तव्य चेति निर्णेतु न प्रभवतीति भाव । गाथाछन्द । तल्लक्षण यथा—

प्रथमे द्वादशमात्रा द्वितीयेऽष्टादशभि सयुक्ता ।
यथा द्वितीय तथा तृतीय पञ्चदशविभूषिता गाथा ॥

इद प्राकृतपद्यमद्ययावन्मुद्रितेषु बहुषु पुस्तकेषूपलभ्यते, क्वचित्तु नोपलभ्यते । वस्तुतस्तु पद्यमिद प्रक्षिप्तमेवाभाति । अनेन हि पद्येन नायिकाया धीरोदात्तत्व विलुप्यते । या खलु कस्मिंश्चिद् यूनि सञ्जातचक्षूरागमात्रा गुरोराज्ञापालनेऽपि विकल्पते, स्वगृहीत व्रतमपि नापेक्षते, स्वकुलमप्येकपदे

---

राजपुत्रि ! आपको कुलपति कौशिक ने कहा है—मध्याह्नकाल के स्नान का समय बीत रहा है, सो शीघ्र आओ ।

**नायिका**—जो गुरु जी की आज्ञा । (मन ही मन) एक ओर तो गुरु जी की आज्ञा और दूसरी ओर प्रियतम के दर्शन का आनन्द, जाऊँ या ठहरूँ, ऐसा विचारते हुए मेरा हृदय अब भी अस्थिर हो रहा है ॥१६॥

[उत्थाय निःश्वस्य सलज्जं सानुरागश्च नायकं पश्यन्ती तापससहिता निष्क्रान्ता]

**नायकः**—[सोत्कण्ठं निःश्वस्य नायिकां पश्यन्] —

अनया जघनाभोगभरमन्थरयानया।
अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥२०॥

**विदूषकः**—भो ! दिट्ठं तुए पेक्खिदव्वं, ता दाणिं मज्झण्ण-सूरकिरणसंतावदिढणिदो विअ मे उदरग्गी धमधमाअदि। ता एहि णिक्कमम्ह। जेण बह्मणो अदिही भविअ मुणिजणसआसादो लद्धेहिं कन्दमूलफलेहिं पि दाव पाणधारणं करेमि।

भो ! दृष्टं त्वया प्रेक्षितव्यम्। तदिदानीं मध्याह्नसूर्यकिरण-

---

विस्मरति, सा खलु धृष्टा कथमिव धीरोदात्ता भवितुमर्हति। नच चरित्र-चित्रणे परमपटुः श्रीहर्षो नायिकां तथा वर्णयेदिति चेतो विश्वसिति ॥१६॥

**अनयेति**—**जघनाभोगभरमन्थरयानया**=जघनस्य—कटिपुरोभागस्य आभोगः—विस्तारः, तस्य, भरः—भारः, तेन मन्थरम्—मन्दम्, यानम्—गमनं यस्यास्तथाभूतया गजेन्द्रवन्मन्दगामिन्येत्यर्थः, **अन्यतोपि**=अन्यस्यामपि दिशि, **व्रजन्त्या**=गच्छन्त्या, **अनया**=नायिकया, **मे**=मम, **हृदये**=मनसि, **पदम्**=चरणम् [ स्थानम् ], **निहितम्**=स्थापितम् [ कृतम् ]। अनया गजगामिन्या सर्वथाक्रान्तं मे चेत इति भावः। यत्रैव गमनं तत्रैव पदनिधानं लोके दृष्टम्। अत्र तु गमनमन्यत्र पदनिधानं चान्यत्रेति कारणकार्ययोर्भिन्न-देशावस्थित्या असङ्गतिरलङ्कारः। तदुक्तम्—'कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः'। अनुष्टुप् छन्दः ॥२०॥

विदूषकोक्तौ—**दृष्टमिति**। त्वया, **प्रेक्षितव्यम्**=दर्शनयोग्यं वस्तु, दृष्टम्। **तदिति**—तदिति वाक्यारम्भे। **इदानीम्**=अस्मिन् समये, **मध्याह्नसूर्य**-

---

(उठकर, साँस लेकर, लज्जा और प्रेम से नायक को देखती हुई, तपस्वी के साथ बाहर निकल जाती है)

**नायक**—(उत्कण्ठा से निःश्वास लेकर नायिका को देखता हुआ) जघन के भार के कारण मन्दगति वाली इस (नायिका) ने दूसरी ओर जाते हुए भी मेरे हृदय पर पाँव रख दिया है ॥२०॥

**विदूषक**—जो देखना था, सो देख लिया। दोपहर के सूर्य की किरणों

---

१ 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः'—इत्यमरः।

सन्तापद्विगुणित इव मे उदराग्निर्धमधमायते। तदेहि निष्क्रामावः। येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशात् लब्धैः कन्दमूलफलैरपि यावत् प्राणधारणं करोमि।

**नायकः**—[ऊर्ध्वमवलोक्य] मध्यमध्यास्ते नभस्तलस्य भगवान् सहस्रदीधितिः। तथाहि—

**किरणसंतापद्विगुणितः**=मध्याह्नस्य–[अह्नो मध्यम् इति मध्याह्न, एकदेशिसमास, 'अह्नोह्न एतेभ्य –'इत्यनेनाह्नन्शब्दस्याह्नादेशः] सूर्यः–ललाटन्तप', तस्य किरणैः –रश्मिभि., सन्ताप, तेन द्विगुणित इव–द्विगुणतां नीत इव, मे=मम, **उदराग्निः**=जठरानल', **धमधमायते**=अधिकं दीप्यते, मध्याह्नवशाद् बुभुक्षा मे मर्दामित्यर्थ.। सूर्यकिरणसंतापस्योदराग्निद्विगुणीकरणे हेतुत्वमुत्प्रेक्षितमित्युत्प्रेक्षालङ्कारः।

मध्यमिति—**सहस्रदीधितिः**=सहस्रं दीधितयः किरणा यस्य स. सूर्य इति यावत्। **नभस्तलस्य**=नभस आकाशस्य, तलम्, तस्य, मध्यम्–मध्यप्रदेशम्, **अध्यास्ते**=अधितिष्ठति। [मध्यमित्यत्र–'अधिशीङ्स्थासां कर्म–' इत्यनेन द्वितीया]

तापादिति–**तापात्**=ग्रीष्मसन्तापात् [विरहसन्तापाच्च] **तत्क्षणघृष्टचन्दनरसापाण्डू**=तत्क्षणे–सतापानुभवक्षण एव, घृष्टानि–स्वगण्डभित्त्या घर्षितानि, चन्दनानि–चन्दनतरव., तेषां रसेन–द्रवेण, आपाण्डू–ईषत्पाण्डुवर्णौ, [विरहसंतापानुभवक्षणे घृष्टचन्दनद्रवलेपेन घृष्टचन्दनपङ्कवद् वा आपाण्डू–इति च] **कपोलौ**=गण्डस्थले, **वहन्**=धारयन्, **संसक्तैः**=निरन्तरचलितैः, **निजकर्णतालपवनैः**=निजस्य–स्वस्य, कर्णौ, तयोस्तालं –आस्फालनम्, तस्य पवनैः –तदुत्पन्नैर्वायुभिः, अथवा कर्णावेव

के सताप से मानो दुगुनी बढी हुई मेरी जठराग्नि धधक रही है। इसलिये आओ चलें। जिससे कि मैं ब्राह्मण अतिथि होने के कारण ऋषियों से प्राप्त किये हुए कन्दमूल फल आदि से ही अपनी प्राण रक्षा करूं।

**नायक**—(ऊपर देखकर, सूर्य भगवान् आकाश के मध्य में विराज रहे हैं। क्योंकि—

१ 'भानुः करो मरीचि स्त्रीपुंसयोर्दीधितिः स्त्रियाम्–'इत्यमरः। २ 'ताल ······गीतकालक्रियामाने करास्फाले द्रुमान्तरे–'इति मेदिनी।

तापात् तत्क्षणघृष्टचन्दनरसापाण्डू कपोलौ वहन्
संसक्तैर्निजकर्णतालपवनैः संवीज्यमाननः ।
सम्प्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः शीकरै-
र्गाढायल्लकदुःसहामिव दशां धत्ते गजानां पतिः ॥२१॥

[ निष्क्रान्ताः सर्वे ]

इति प्रथमोऽङ्कः ।

---

तालौ तालवृन्तौ, तयोः पवनैः —तज्जैः समीरणैः, **संवीज्यमाननः**= संवीज्यमानम्—स्वस्पर्शेन सेव्यमानम्, आननम्—मुखम्, यस्य तादृशः, **हस्तोज्झितैः**=हस्तेन—शुण्डादण्डेन [ करेण च ] उज्झितैः—त्यक्तैः क्षिप्तैरिति यावत्, **शीकरैः**=जलकणैः, **विशेषसिक्तहृदयः**=विशेषेण—अतिशयेन, सिक्तम्—उक्षितम्, हृदयम्—वक्षःप्रदेशः, येन तादृशः, **एषः**= पुरःस्थितः, **गजानाम्**=करिणाम्, **पतिः**=यूथपो गजेन्द्र इति यावत्, **गाढायल्लकदुःसहाम्**=गाढम्—अतिभूमिं गतम्, आयल्लकम्—उत्कण्ठा,[1] तेन, दुःसहाम्—दुःखेन सोढुं शक्याम्, **दशामिव**=कामजनितावस्थामिव, **धत्ते**=धारयति । यथा कश्चिद्विरहपीडितो विरहानलतापशान्तये कपोलयोश्चन्दनपङ्कमुपलिम्पति, तालवृन्तेन स्वाननं वीजयति, अम्बुकणैश्च विरहानलज्वालाभिर्दन्दह्यमानं हृदयमासिञ्चति, तथैवायमपि गजयूथपो लक्ष्यते । अस्यापि कपोलौ स्वघर्षणजनितचन्दनपादपद्रवैरुपलिप्ततया पाण्डुवर्णौ, एषोऽपि स्वमुखं निरन्तरचलिताभ्यां तालवृन्ताभ्यामिव कर्णाभ्यां वीजयति । स्वशुण्डादण्डाहृतैर्वारिभिर्हृदयमात्मनोऽभिषिञ्चति । अतोऽयं विरहोत्कण्ठितो दुर्मदः कामदशामनुभवन्निव लक्ष्यते—इति भावः । ग्रीष्मर्तौ हस्तिनां स्वभावोऽयमिति स्वभावोक्तिः । गाढोत्कण्ठाजनितदुःसहदशोत्प्रेक्षणादुत्प्रेक्षा च, सा च श्लेषानुप्राणिता । ग्रीष्मवर्णनमुखेन द्वितीयाङ्के प्रतिपादयिष्यमाणो नायकस्य विप्रलम्भोऽप्यत्र कविनोपक्षिप्तः । शार्दूलविक्रीडितं वृत्तम् ॥२१॥

---

इस समय यह गजराज गर्मी के कारण अत्यधिक उत्कण्ठा से होने वाली दु:सह दशा जैसी दशा का अनुभव कर रहा है । इसके दोनों कपोल तत्काल रगड़े हुए चन्दन वृक्षों के रस से कुछ कुछ शुभ्र होरहे हैं, कर्णरूपी

---

1 'स्यादायल्लकमाध्यानमुत्कण्ठोत्कलिका रतिः' ।

इति प्रथमोऽङ्क इति–इतिशब्द समाप्तिबोधक । अङ्कयति चिह्नयति रसैर्भावैश्च पदार्थान्–इत्यङ्क । तल्लक्षण यथा—

श्रङ्क इति रूढिशब्दो भावैश्च रसैश्च चिह्नयत्यर्थान् ।
नानाविधानयुक्तान् यस्मात्तस्माद् भवेदङ्क ॥
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति सहार ।
किञ्चिदिव लग्नबिन्दु सोऽङ्क इति सदावगन्तव्य ॥

इति श्रीमदच्युतानन्दतनुजन्मश्रीपरमेश्वरानन्दशर्मकृताया प्राशविनोदिन्या नागानन्दव्याख्याया प्रथमोऽङ्क समाप्त. ॥१॥

---

तालवृन्तों से उत्पन्न हुई पवन निरन्तर इसके मुख पर बीजना डुला रही है और वह अपनी सूँड से छिड़के हुए जल बिन्दुओं से अपने हृदय को विशेष रूप से सींच रहा है ॥२१॥

( सब का प्रस्थान )

# द्वितीयोऽङ्कः ।

[ततः प्रविशति चेटी]

**चेटी**—आणत्तह्मि भट्टिदारिआए मलअवदीए। जहा—'हञ्जे! मणोहरिए! अज्ज चिराअदि मे भाअरो अज्जो मित्तावसू। ता गदुअ जाणेहि किं आअदो ण वेत्ति'। [परिक्रामति। नेपथ्याभिमुखं दृष्ट्वा] का उण एसा तुरिदतुरिदं इदो ज्जेव्व आअच्छदि? [निरूप्य] कहं चदुरिआ!

आज्ञप्ताऽस्मि भर्तृदारिकया मलयवत्या। यथा—'हञ्जे मनोहरिके! अद्य चिरयति मे भ्राता आर्य्यः मित्रावसुः। तद् गत्वा जानीहि किमागतो न वा' इति। का पुनरेषा त्वरितत्वरितमित एवागच्छति? कथं चतुरिका!

---

अथ प्रथमाङ्के परस्परदर्शनसंजातचक्षूरागयोर्नायकयोर्विप्रलम्भपरिपोषं दर्शयितुकामो द्वितीयाङ्के आदौ नायिकाया कामसन्तापशान्तये चन्दनलतागृहचन्द्रमणिशिलातलसज्जाकरणाद्यर्थमुपक्षेप्तुं प्रवेशकमारभते—'**ततः प्रविशति चेटी**' इत्यादिना। प्रवेशकलक्षणं तूपरिष्टादुल्लेखिष्यते।

**आज्ञप्तास्मीति**—**आज्ञप्ता**=आदिष्टा। **अद्य**=अद्यैव, नेतः पूर्वं कदापि, **चिरयति**=चिरं करोति, [चिरशब्दात् 'तत्करोति—' इति णिच्] विलम्बते इत्यर्थः। आर्य इति भ्रातुः स्वापेक्षया ज्येष्ठस्य आदरसूचनार्थम्। केति—**त्वरितत्वरितम्**=त्वरायामतिशयबोधनार्थं द्विर्वचनम्। अतिशीघ्रमित्यर्थः। **इत एव**=अस्यामेव दिशि। इतः एवातिशीघ्रमागच्छन्तीयं का भवेदिति भावः। अन्तिकमुपस्थितां दृष्ट्वा प्रत्यभिजानाति—**कथं चतुरिकेति**।

---

(चेटी का प्रवेश)

**चेटी**—राजकुमारी मलयवती ने मुझे आज्ञा दी है कि "सखि मनोहरिके! मेरे भाई आर्य मित्रावसु ने आज देर कर दी है। इसलिये जाकर पता तो कर कि वे लौटे हैं या नहीं?" (घूमती है। नेपथ्य की ओर देख कर) यह कौन अतिशीघ्रता से इधर ही आ रही है? (देख कर) क्या चतुरिका है?

[ ततः प्रविशति द्वितीया चेटी ]

**प्रथमा—**[ उपसृत्य ] **हला चदुरिए ! किं णिमित्तं उण मं परिहरिअ एव्वं तुरिदाए गच्छीअदि ?**

हला चतुरिके ! किं निमित्तं पुनर्मां परिहृत्य एवं त्वरितया गम्यते ?

**द्वितीया—हला मणोहरिए ! आणत्तम्हि भट्टिदारिआए मलअवदीए—'हञ्जे चदुरिए ! कुसुमावचअपरिस्समणिस्सहं मे सरीरं। सरदादवजणिदो विअ मे संदावो अधिअदरं बाधेदि। ता गच्छ तुमं, बालकदलीपत्तपरिक्खित्ते चंदणलदाघरए चन्द-मणिसिलाअलं सज्जीकरेहि' त्ति। अणुचिट्ठिदं अ मए जधा आणत्तं। जाव गदुअ भट्टिदारिआए णिवेदेमि।**

---

आत्मानम् असम्भाष्यैव सत्वरं प्रयान्तीं चतुरिकामालोक्य जातशङ्का मनोहरिका तां संबोध्य जिज्ञासते—**किं निमित्तमिति**। **परिहृत्य**=परित्यज्य मामसम्भाष्यैवेत्यर्थः।

चतुरिकोत्तरयति—**हलेति**। हलेति सख्याः सम्बोधने। तदुक्तम्—'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इति।

**कुसुमेति—कुसुमावचयपरिश्रमनिःसहम्**=कुसुमानाम्, अव-चय.—वृन्तात् त्रोटनम्, संचयनं वा, तेन यः परिश्रम—परिश्रान्तिः, तेन निःसहम्—अशक्तम्, मे **शरीरम्** [ कर्म ]। **संतापः**=व्यथा [ आपाततो घर्मजनिता—वस्तुतस्तु कामज्वरोत्पादिता ], **शरदातपजनित इव**=शरदि-शरदृतौ, आतपो घर्मः, तेन जनित इव—उत्पादित इव, **अधिकतरम्**=अतिशयेन, **बाधते**=व्यथयतीत्यर्थः।

संतापे तु सहत्वप्रतीत्यर्थं शरदातपजनितसंतापसादृश्यम् बोधितम्। शर-त्काले निर्मलाकाशे तपत सूर्यस्यातपो नितरां तीव्रतया दुःसहो भवति। वस्तु-तस्तु विदग्धया नायिकया कामज्वरजनितसंतापस्य घर्मजनितत्वबुद्धये तत्र शरदातपसादृश्यं बोधितम्। न चेत्कश्चिन्मे कामव्यथां जानीयादिति।

---

(दूसरी चेटी—चतुरिका का प्रवेश)

**पहली (मनोहरिका)**—( पास आकर ) सखि चतुरिके ! तू किस लिये मुझे छोड़ कर (मुझे बिना कुछ कहे ही) इस प्रकार शीघ्रता से जा रही है ?

हला मनोहरिके! आज्ञप्ताऽस्मि भर्तृदारिकया मलयवत्या- 'हञ्जे चतुरिके ! कुसुमावचयपरिश्रमनिःसहं मे शरीरम्। शरदातपजनित इव मे सन्तापोऽधिकतरं बाधते । तद् गच्छ त्वं, बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातलं सज्जीकुरु' इति । अनुष्ठितञ्च मया यथाऽऽज्ञप्तम् । यावद् गत्वा भर्तृदारिकायै निवेदयामि ।

प्रथमा—जइ एव्वं, ता लहुं गदुअ णिवेदेहि, जेण से तहिं गदाए उवसमदि संदावो ।

यद्येवं, तल्लघु गत्वा निवेदय, येनास्यास्तत्र गताया उपशाम्यति सन्तापः ।

द्वितीया—[ विहस्यात्मगतम् ] ण ईरिसो से संदावो जो एव्व उवसमिस्सदि । विवित्तरमणीअं चंदणलदाघरअं पेक्खन्तीए अधिअदरो संदावो हुविस्सदि त्ति तक्केमि । [ प्रकाशम् ] ता

---

तदिति-तत्=तस्माद् मम सतापशान्त्यर्थमिति यावत्, त्वम्=चतुरिका, बालकदलीपत्रपरिक्षिप्ते=बालानि-अभिनवोद्गतानि, मृदूनि इति यावत्, कदल्याः-कदलीवृक्षस्य, पत्राणि-पलाशानि, तैः परिक्षिप्ते-परिवेष्टिते, सूर्यकिरणप्रवेशानर्हे, चन्दनलतागृहे=मृदुभिश्चन्दनशाखाभिर्विरचिते निकुञ्जे, चन्द्रमणिशिलातलम्=चन्द्रमणिशिला-चन्द्रकान्तोपलशिला, तस्यास्तल पीठम्, सज्जीकुरु=असज्ज सज्ज कुरु-इति सज्जीकुरु-संविधेहि। अनुष्ठितम्=संपादितम्। यथाज्ञप्तम्=आज्ञप्तमनतिक्रम्य-आदेशानुसारेणेत्यर्थः । यद्येवमिति-यदि, एवम्=अनेन त्वदुक्तप्रकारेण अतिसताप

---

**दूसरी (चतुरिका)**—सखि मनोहरिके ! राजकुमारी मलयवती ने मुझे आज्ञा दी है कि "हे चतुरिके ! फूल तोड़ने की थकावट से निर्बल मेरे शरीर को (विरहजन्य) सताप शरद ऋतु की धूप की तरह कष्ट दे रहा है इसलिये तू जा और कोमल केले के पत्तों से आवृत चन्दन-कुञ्ज में रखी हुई चन्द्रमणि शिला को सँवार" । और मैंने आज्ञानुसार कार्य कर दिया है तब तक जाकर राजकुमारी को सूचना दे देती हूँ ।

**पहली (मनोहरिका)**—यदि ऐसा है तो शीघ्र जाकर सूचना दे जिससे कि वहाँ जाकर उसका सन्ताप शान्त हो ।

गच्छ तुमं । अहम्पि 'सज्जीकिदं मणिसिलाअलं' त्ति गदुअ भट्टिदारिआए णिवेदेमि ।

नेदृशोऽस्याः सन्तापो य एवमुपशमिष्यति । विविक्तरमणीयं चन्दनलतागृहं प्रेक्षमाणाया अधिकतरः सन्तापो भविष्यतीति तर्कयामि । तद्गच्छ त्वम् । अहमपि 'सज्जीकृतं मणिशिलातलम्' इति गत्वा भर्तृदारिकायै निवेदयामि ।

[ इति निष्क्रान्ते ]

प्रवेशकः ।

---

पीडितास्ति भर्तृदारिका, तत्=तर्हि, लघु[1]=शीघ्रम्, निवेदय=विज्ञापय । अस्याः=नायिकाया मलयवत्या, तत्र=चन्दनलतागृहे । उपशमम्=शान्तिम् । विहस्येति—नायिकाया संताप कीदृश इत्यत्र विषये मनोहरिकाया अज्ञानमेव चतुरिकाया हासस्य कारणम् । नेदृश इति—ईदृशः=घर्मजनित, एवम्=चन्दनलतागृहे चन्द्रमणिशिलातलोपवेशनशयनादिना, उपशमिष्यति=उपशम गमिष्यति । अन्यश्चेति—विविक्तरमणीयम्=विविक्त[2] निर्जनमेकान्तम्, रमणीयम्-मनोहर च, अधिकतरं भविष्यति=उद्दीपकत्वादिति भाव । तर्कयामि=सभावयामि । नायमस्या आतपजनित सताप, यच्छीतोपचारैश्चन्दनलतागृहे चन्द्रमणिशिलातलोपवेशनशयनादिभिरुपशाम्येत्, अपि त्वन्यविधोऽय काममंतापो य प्रत्युतैभि पूर्वोक्तै शीतोपचारैर्वृद्धिमेवोपेयात्, न पुन शान्तिम् । विरहोद्दीपकत्वादेतेषामिति भाव ।

निष्क्रान्ते इति—सूचनायार्थं सूचयित्वा चेट्यौ निर्गते इत्यर्थ ।

प्रवेशक इति—प्रवेशक समाप्त इत्यर्थ । प्रवेशकलक्षणं यथा दशरूपके—

---

दूसरी ( चतुरिका )—( हँस कर मन में ) इसका सताप ऐसा नहीं है, जो इस प्रकार शान्त हो जाय । मैं तो समझती हूँ, एकान्त और रमणीय लता-कुञ्ज को देखकर इसका संताप और अधिक बढ़ेगा । ( प्रकट में ) अच्छा तो तू जा । मैं भी राजकुमारी को निवेदन करती हूँ कि मणिशिला तैयार है ।

( दोनों का प्रस्थान )

प्रवेशक

---

१ 'लघु क्षिप्रमर द्रुतम्' इत्यमर । २ 'विविक्तौ पूतविजनौ' इत्यमर ।

[ ततः प्रविशति सोत्कण्ठा मलयवती चेटी च ]

**मलयवती** –[ निःश्वस्यात्मगतम् ] **हिअअ ! तह णाम तदा तस्सि जणे लज्जाए मं परम्मुहीकरिअ दाणिं तहिं अत्तणा गदंसि त्ति अहो ! दे अत्तंभरित्तणं । [ प्रकाशम् ] हञ्जे चदुरिए ! आदेसेहि मे भअवदीए आअदणं।**

हृदय ! तथा नाम तदा तस्मिन् जने लज्जया मां पराङ्मुखीकृत्येदानीं तत्रात्मना गतमसीति । अहो ! ते आत्मम्भरित्वम् । हञ्जे चतुरिके ! आदिश मे भगवत्या आयतनम् ।

---

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
प्रवेशकस्तु नाद्याङ्के नीचपात्रप्रयोजितः ॥

अत्र प्रवेशके नीचपात्राभ्यां चेटीभ्यां कुसुमावचयचन्दनलतागृहचन्द्रकान्तमणिशिलातलनिर्माणादिरूपो वृत्तोऽर्थः, चन्दनलतागृहे नायिकायाः प्रवेशश्च वर्तिष्यमाणोऽर्थः प्राकृतभाषया निदर्शितः ।

अथ पूर्वसूचितां मलयवतीं प्रवेशयति–**ततः प्रविशतीति**। ततः=चेटयोर्निष्क्रमणानन्तरम् । **सोत्कण्ठाम्**=उत्कण्ठया सहिताम् । उत्कण्ठालक्षणं यथा—

रागे त्वलब्धविषये वेदना महती तु या ।
संशोषिणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥

**हृदयेति–हे हृदय !**=हे मम मनः ! **तदा**=तस्मिन् काले-गौर्यायतने परस्परदर्शनावसरे इत्यर्थः । **तस्मिन् जने**-प्रियतमे (पतिबुद्ध्या भावितत्वाद् नामाग्रहणम् ), **तथा नाम**=केनचिद् अवर्णनीयेन प्रकारेण **माम्**=मलयवतीम्, **लज्जया, पराङ्मुखीकृत्य**=परावृत्तमुखीं कृत्वा-प्रियतमस्य वाण्यादिनाप्यातिथ्यं कर्तुमननुमत्य, **इदानीम्, आत्मना**=स्वमेव–मां परित्यज्यैव, **तत्रैव**=प्रियतमे, **गतम्**=प्राप्तम्, असि ( कर्तरि क्तः ) **इति**=एवंभूतम्, **अहो** इत्यसम्भावनायाम्, **ते**=तव **आत्मम्भरित्वम्**

---

( उत्कण्ठित मलयवती और चेटी का प्रवेश )

**मलयवती**—( आह भर कर मन में ) हे हृदय ! तू कितना स्वार्थी है उस समय तो लज्जा से मुझे उनकी ओर से विमुख कर दिया और स्वयं उसी के पास चला गया है ! ( प्रकट में ) चेटी चतुरिके ! मुझे देवी के मन्दिर का मार्ग दिखा ।

चेटी—[ आत्मगतम् ] चंदणलदाघरअं पत्थिदा भणादि भअवदीए आअदणं । [ प्रकाशम् ] णं चंदणलदाघरअं भट्टिदारिआ पत्थिदा ।

चन्दनलतागृहं प्रस्थिता भणति भगवत्या आयतनम् । ननु चन्दनलतागृहं भर्तृदारिका प्रस्थिता ।

नायिका—[ सलज्जम् ] हञ्जे ! सुट्ठु सुमराविदं । ता एहि तहिं ज्जेव गच्छम्ह ।

हञ्जे ! सुष्ठु स्मारितम् । तदेहि तत्रैव गच्छावः ।

---

(आत्मानं स्वात्ममात्रं बिभर्ति पोषयति—इत्यात्मम्भरिः—'फलेग्रहिरात्मम्भरिश्च' । तस्य भावस्तत्त्वम्) स्वार्थमात्रपरत्वम् । शरीरमात्रेणाहमत्र तिष्ठामि, मनस्तु मम तत्रैव प्रेयसि संगतमित्यर्थः । अत्र याहं सदैव सर्वस्मिन्नपि करणीये कर्मणि त्वा प्रियसुहृदित्याकलय्य त्वदाज्ञानुवर्तिन्यभवम्, प्रियमप्रियं वा वस्तु त्वद्विना न जात्वप्युपाभुज्जि, तां वञ्चयित्वा त्वं तूष्णीं निर्गत्य एकाक्येव प्रियं वस्त्वास्वादयसि—इत्यहो ते स्वार्थपरायणत्वम्—इत्येवं मनसि अप्रस्तुतकुमित्रव्यवहारसमारोपात् समासोक्तिः । तल्लक्षणं यथा कुवलयानन्दे—

'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' ।

एतेन मनःसंगतिरूपा कामदशात्र वर्णिता । तदुक्तम्—

चक्षूरागस्तदनु मनसः सङ्गतिर्भावना च
व्यावृत्ति स्यात्तदनु विषयग्रामतश्चेत[illegible] ।
निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं च पश्चात्
चैफल्यं मूर्च्छा तदनु मरणं [illegible] ॥

हञ्जे इति—आदिश=बोधयेत्यर्थः । अत्र [illegible] मलयवत्या देवतायतनमार्गप्रश्नेन तच्चित्तस्य [illegible]

नन्विति—ननुरत्र शङ्कायाम् । [illegible] रिका किमिति भगवत्या आयतनस्य मार्गं [illegible] ।

---

चेटी—( मन में ) राजकुमारी [illegible] कहती है कि देवी के मन्दिर का [illegible] । ( [illegible] ) [illegible] कुञ्ज की ओर चली है ।

नायिका—( लज्जा से ) [illegible] वहीं चलें ।

**चेटी**—एदु एदु भट्टिदारिआ। [ अग्रतो गच्छति ]
एतु एतु भर्तृदारिका।
[ नायिका अप्यन्यतो गच्छति ]

**चेटी**—[ पृष्ठतो दृष्ट्वा सोद्वेगमात्मगतम् ] अहो! से सुण्णहिअअत्तणं! कहं त ज्जेव देवीभवणं पत्थिदा। [ प्रकाशम् ] भट्टिदारिए! ए इदो चन्दणलदाघरअं। ता इदो इदो एहि।

अहो! अस्याः शून्यहृदयत्वम्! कथं तदेव देवीभवनं प्रस्थिता। भर्तृदारिके! नन्वितश्चन्दनलतागृहम्। तदित इत एहि।
[ नायिका सविलक्षं सलज्जं च तथा करोति ]

**सलज्जमिति**—कामाक्रान्ताया मे हृदयशून्यता चेट्या विज्ञातेति नायिकाया लज्जानुभवः। **सुष्ठु**=साधु। **तत्रैव**=चन्दनलतागृहे।

**अन्यतो गच्छति**=चन्दनलतागृहाद् अन्यस्यां दिशि गच्छति, छिन्नचित्तत्वादिति भावः।

**अहो** इति—अहो अत्र विषादे। **शून्यहृदयत्वम्**=शून्यं हृदयं यस्याः, तस्या भावस्तत्त्वम्, [ सामान्ये नपुंसकं कृत्वा ततस्त्वो विधेयः, शरदः कृतार्थेत्यादावेषैव गतिः ] अन्यमनस्का गन्तव्यमार्गमपि न चेततीत्यर्थः।

**कथमिति**—**तदेव**=पूर्वदृष्टप्रियतमदर्शनदम्। **नन्विति**—**चन्दनलतागृहम्**, **इतः**=अस्यां दिशि वर्तते, **तत्**=तस्माद्, **एहि**=आयाहि।

**सविलक्षमिति**—विलक्षं—विस्मयान्वितं। अत्र च विलक्ष इति भावप्रधानो निर्देशः तथा च वैलक्ष्यं विस्मय इत्यर्थः। बोधिताप्यहं नाचेतिषमिति आत्मनोऽन्यमनस्कतातिशयेन विस्मयः। चेट्या स्वस्य प्रियतमलाभमनस्कताविज्ञानाच्च लज्जोदयः।

**चेटी**—राजकुमारी जी! आइये, आइये। (आगे आगे चलती है)
(नायिका दूसरी ओर जाती है)

**चेटी**—( पीछे देखकर, घबराकर मन में ) ओहो! यह कैसी शून्यहृदय हो रही है, फिर उसी देवी के मन्दिर की ओर कैसे चल पड़ी। ( प्रकट में ) राजकुमारी! चन्दनकुञ्ज तो इधर है, इसलिये इधर आओ।
( नायिका घबराकर और लज्जा पूर्वक वैसा ही करती है )

१ 'अहो धिगर्थे शोके च करुणार्थविषादयोः' इति मेदिनी। २ 'विलक्षो विस्मयान्वितः' इत्यमरः।

**चेटी**—इदं चंदणलदाघरअं । ता पविसिअ चंदमणिसिलादले उपविसिअ समस्ससदु भट्टिदारिआ ।

इदं चन्दनलतागृहम् । तत् प्रविश्य चन्द्रमणिशिलातले उपविश्य समाश्वसितु भर्तृदारिका ।

[ उभे उपविशतः ]

**नायिका**—[ निःश्वस्य आत्मगतम् ] भअवं कुसुमाउह ! जेण तुमं रूवसोहाए णिज्जिदो सि, तस्सिं तुए ण किंवि किदं । मं उण अणवरद्धं अबलत्ति करिअ पहरंतो कहं ण लज्जेसि ? [ आत्मानं निर्वर्ण्य मदनावस्थां नाटयन्ती प्रकाशम् ] हञ्जे ! कीस उण घणपल्लवणिरुद्धसूरकिरणं तादिसं पि चंदणलदाघरअं ण मे अज्जवि संदावदुक्खं अवणेदि ।

भगवन् कुसुमायुध ! येन त्वं रूपशोभया निर्जितोऽसि, तस्मिन् त्वया न किञ्चिदपि कृतम् । मां पुनरनपराद्धामबलेति

---

**भगवन्निति**—**कुसुमायुध**=[ कुसुमानि-अरविन्दादिपुष्पाण्येव आयुधानि-अस्त्राणि यस्य स , सबोधने रूपमिदम् ] हे मदन ! । अरविन्दादीनां च कामसायकत्वमन्यत्रोक्तम् । यथा—

अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥

**येन**=प्रियतमेन, त्वम् , **रूपशोभया**=रूपं लावण्यम् , तज्जनितया शोभया श्रिया, **निर्जितः**=पराभूतोऽसि, तस्मिन् त्वया, **किञ्चिदपि**=पीडोत्पादनादिशत्रुजनोचितं किमपि कर्म, **न कृतम्** । **अनपराद्धाम्**=अपराधरहिताम् [ अपराध्यते कर्तरि निष्ठा, ततो नञ् समासः ] मां तु **अबला**=निर्बलेयम्, **इति कृत्वा**=इति विचार्य, **प्रहरन्**=स्ववाणप्रहारं कुर्वन् [ 'लक्षणहेत्वोः क्रियायाः' इति शतृप्रत्ययः ] मयि बाणप्रहारकरणेनेत्यर्थः , **कथं न लज्जसे**=धिगिति लज्जां नानुभवसि । कारणकार्ययोर्वैयधिकरण्यादसङ्गतिर-

---

**चेटी**—राजकुमारी ! यह है चन्दन-कुञ्ज । इसलिये आप इसके अन्दर जाकर चन्द्रमणिशिला पर बैठ जायँ ।

( दोनों बैठ जाती हैं )

**नायिका**—( साँस छोड़कर, मन में ) भगवन् कामदेव ! जिस ने तुम्हें ( अपने ) सौन्दर्य से मात कर दिया है, उसका तो तू कुछ न बिगाड़ सका ।

कृत्वा प्रहरन् कथं न लज्जसे ? हञ्जे ! कस्मात् पुनरेतद्घनपल्लवनिरुद्धसूर्यकिरणं तादृशमेव चन्दनलतागृहं न मे अद्यापि सन्तापदुःखमपनयति ! ।

चेटी—[सस्मितम्] जाणामि अहं एत्थ कारणं; किंतु असंभावणीअं त्ति भट्टिदारिआ ण तं पडिवज्जदि ।

जानाम्यहमत्र कारणम्, किन्तु असम्भावनीयमिति भर्तृदारिका न तत् प्रतिपद्यते ।

---

आलङ्कारः । तथा च प्रत्यनीकालङ्कृतिर्व्यज्यते । स्वपराभवकर्तरि अशक्नुवाना तदनुरक्तां मां त्रासयसीति भावः । प्रत्यनीकलक्षणं यथा—

प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥

**हञ्जे—घनपल्लवनिरुद्धसूर्यकिरणम्**=घनैः—सान्द्रैः, पल्लवैः—पत्रैः, निरुद्धाः—वारिताः, सूर्यस्य किरणाः—रश्मयो यत्र तादृशम्, **तादृशमेव**=मया शतशः सन्तापहारकत्वेन पूर्वमनुभूतमेव, **एतत्**=मया अधिष्ठीयमानम्, **चन्दनलतागृहम्, अद्यापि, मे, सन्तापदुःखम्**=सन्तापजनितां पीडाम्, **कस्मात्**—केन हेतुना—इत्यर्थः, **न, अपनयति**—दूरीकरोति । **सस्मितम्** इति–स्मितं मन्दहासः । सन्तापमिति सामान्यं निर्दिश्य मां भ्रामयितुं सन्तप्तेयमिति चेट्या मन्दहासे हेतुः । **जानामीति—अत्र**=चन्दनलतागृहे स्थितवत्या अपि ते सन्तापस्यानपगमे, इत्यर्थः । **किन्त्विति–तत्**=मया निर्दिष्टं कारणम्, **असम्भावनीयम्**=सम्भावयितुमयोग्यम् इति कथयित्वा, **भर्तृदारिका, न प्रतिपद्यते**=न स्वीकरिष्यति [ वर्तमानसमीपे भविष्यति लट् ] ।

---

किन्तु मुझ निरपराध को अबला जान कर चोट करते हुए क्या तुझे लज्जा नहीं आती ? ( अपनी ओर देख कर, कामातुर दशा को दर्शाती हुई, प्रकट में ) सखि ! यह वही चन्दनकुञ्ज है, जहां घने पत्तों के कारण सूर्य की किरणों का प्रवेश नहीं होता। फिर क्या कारण है कि यह आज मेरे सन्तापजनित दुःख को दूर नहीं कर रहा है ?

**चेटी**—( मुस्करा कर ) मुझे इसका कारण भली भाँति ज्ञात है, परन्तु राजकुमारी इसको असम्भव कह कर मानेंगी नहीं ।

**नायिका**—[ आत्मगतम् ] लक्खिदा विअ अहं एदाए, तहवि पुच्छिस्सं । [ प्रकाशम् ] हञ्जे ! किं तव एदिणा । कहेहि दाव, किं तं कारणं ?

लक्षितेवाहमेतया, तथापि प्रच्छामि । हञ्जे ! किं तवैतेन । कथय तावत्, किं तत् कारणम् ?

**चेटी**—एसो दे हिअअच्छिदो वरो ।

एष ते हृदयेष्टो वरः ।

**नायिका**—[ सहर्षं ससम्भ्रम चोत्थायागतो द्विनाणि पदानि गत्वा ]

कहिं कहिं सो ? कुत्र कुत्र सः

**चेटी**—[ उत्थाय सस्मितम् ] भट्टिदारिए ! सो को ?

भर्तृदारिके ! स कः ?

---

**लक्षितेवेति**—अनया चेट्या मम रहस्यं विज्ञातमिति भाव ।

**हञ्जे इति** यद्यहं त्वदुक्तं कारणं न प्रतिपत्स्ये तर्हि, **एतेन**=ममाप्रतिपत्त्या, **तव**=चेट्या, किं हीयते—इति शेष, मम स्वाकृत्या अस्वीकृत्या वा न तव कापि हानिरिति भाव ।

**एष इति**—**एष**=त्वया चिन्त्यमान, **ते हृदयेष्टः**=हृदयस्य—मनस, इष्ट—प्रिय, **वर**=वरणीयोऽर्थ, वरत्वेनेप्सितो देवतायतनदृष्टो युवति निगूढाभिप्राय, तव सतापानपगमे हेतुरिति शेष ।

**सहर्षमित्यादि**—चेट्या '**एष वर.**' इत्युक्तया त हृदयेष्ट युवान भ्रमेण समीपवर्तिनमिव मत्वा मलयवती हर्षमनुभवन्ती सत्वरमुत्थाय **द्वित्राणि**=द्वे वा त्रीणि वा [ 'सख्ययाव्ययासन्ना—' इत्यादिना समास, तदनु डच् प्रत्यय ] पदानि, गत्वा जिज्ञासते—**कुत्र कुत्र स** इति ।

चेटी जिज्ञासते—**स क** इति । त्वया 'स' इति तच्छब्देन को निर्दिश्यते

---

**नायिका**—( मन में ) यह मुझे ताड गई है, फिर भी पूछती हूँ । ( प्रकट में ) चेटी ! तुझे इससे क्या ? ( मैं स्वीकार करूँ या न करूँ ) । कह तो सही, वह क्या कारण है ?

**चेटी**—यह तुम्हारा मनचाहा वर ( तुम्हारे सताप का कारण है ) ।

**नायिका**—( झटपट खुशी से उठकर आगे दो तीन कदम भर कर ) कहाँ है कहाँ है वह ( वर ) ?

**चेटी**—( उठकर मुस्करा कर ) राजकुमारी ! वह कौन ?

[ नायिका सलज्जमुपविश्य अधोमुखी तिष्ठति ]

**चेटी**—भट्टिदारिए ! एदम्हि वत्तुकामा—एसो दे हिअअच्छिदो वरो देईए दिण्णत्ति सिविणए पत्थाविदे जो तक्खणं एव्व विमुत्तकुसुमचावो विअ भअवं मअरद्धओ भट्टिदारिआए दिट्ठो। सो दे इमस्स संदावस्स कारणं, जेण एव्व सहावसीदलं पि चंदणलदाघरअं ण दे संदावदुक्खं अवणेदि ।

भर्तृदारिके ! एतदस्मि वक्तुकामा—एष ते हृदयेष्टो वरो देव्या दत्त इति स्वप्ने प्रस्तुते यस्तत्क्षणमेव विमुक्तकुसुमचाप इव भगवान् मकरध्वजो भर्तृदारिकया दृष्टः । स ते अस्य सन्तापस्य कारणम्, येनैवं स्वभावशीतलमपि चन्दनलतागृह न ते सन्तापदुःखमपनयति ।

---

इति भाव । **नायिका सलज्ज**मित्यादि—स्वसभ्रमेण स्वरहस्योद्भेद विज्ञाय लज्जामनुभूय शिरोऽवनमय्य तिष्ठतीत्यर्थ ।

**भर्तृदारिके** इति—हे **भर्तृदारिके**=हे मलयवति, **एतद्**=वक्ष्यमाणम्, **वक्तुकामा**=कथयितुमभिलाषवती, [ 'तुकाममनसोरपि' इत्यनेन तुमुनो मलोप ] **अस्मि**, अहमिति शेष । तव तु 'एष ते हृदयेष्टो वर' इत्यर्धवाक्य एव श्रुते सभ्रम सजात । इदानीं सकल मद्विवक्षित शृणु इत्यभिप्राय । **एष ते** इत्यादि–देव्या आयतने यदा **'एष ते हृदयेष्टो वरो देव्या दत्त.'** इति **स्वप्ने**=स्वप्नसम्बन्धिनि सलापे, **प्रस्तुते**=प्रक्रान्ते, **तत्क्षणमेव**=तस्मिन्नेव काले, **विमुक्तकुसुमचाप**=विमुक्त–त्यक्त, कुसुमचाप–पुष्पनिर्मित धनु, येन तादृश, पुष्पकार्मुकरहित, भगवान्, **मकरध्वज इव**=कामदेव इव स्थित, य =य कोऽपि युवा, **भर्तृदारिकया**=त्वया मलयवत्या, **दृष्ट**=साक्षात्कृत, स एव, तेऽस्य सतापस्य कारणम्, नान्यत् किमपि–इति भाव ।

---

( नायिका बैठकर लज्जा से नीचा मुँह कर लेती है )

**चेटी**—राजकुमारी ! मैं तो यह कहना चाहती थी कि 'देवी ने तुम्हें यह मनोवाञ्छित वर दिया है' इस प्रकार स्वप्न की बात चलने पर उसी क्षण आप ने कुसुमबाण रहित भगवान् कामदेव के सदृश जिस ( मनुष्य ) को देखा था, वही आपके इस सन्ताप का कारण है, जिस से स्वभावत ठण्डा भी यह चन्दन-गृह आज आपके सन्तापजनित क्लेश को नहीं मिटा रहा है ।

**नायिका**—[ चतुरिकाया अलकानि सज्जयन्ती ] **हञ्जे ! चदुरिआ क्खु तुमं। किं दे अवरं पच्छाईअदि, ता कहिस्सं।**

हञ्जे ! चतुरिका खलु त्वम्। किं ते अपरं प्रच्छाद्यते, तत् कथयिष्यामि।

**चेटी—भट्टिदारिए ! णं दाणिं एव्व कहिदं इमिणा वरालावमत्तजणिदेण संभमेण। ता मा संतप्प। जइ अहं चदुरिआ, तदा सोवि भट्टिदारिअं अपेक्खंतो ण मुहुत्तअं पि अण्णहिं अहिरमिस्सदि। ता एदंपि मए लक्खिदं।**

भर्तृदारिके ! ननु इदानीमेव कथितममुना वरालापमात्रजनितेन सम्भ्रमेण। तन्मा सन्तप्यस्व। यद्यहं चतुरिका, तदा सोऽपि भर्तृदारिकामप्रेक्षमाणो न मुहूर्तमप्यन्यस्मिन्नभिरंस्यते। तदेतदपि मया लक्षितम्।

---

**अलकानि सज्जयन्तीति**—अलकाः=चूर्णकुन्तला[1]—तान् सज्जयन्ती=प्रसाधयन्ती। अलकशब्दस्य क्लीबत्वं चिन्त्यम्। चेट्या अलकप्रसाधनं स्वरहस्ये सदानुकूल्यसंपादनार्थम्। **चतुरिकेति**—न केवल नाम्ना, अपि त्वर्थतोऽपि त्वं **चतुरिका**=रहस्यार्थबोधने निपुणा, असीति भाव। **प्रच्छाद्यते**=गोप्यते, त्वत्तो रहस्यार्थगोपनं व्यर्थमेवेत्यर्थ।

**ननु इति—अमुना**=अनिरनिर्वृत्तेन, **वरालापमात्रजनितेन**=वरशब्दोच्चारणमात्रोत्पन्नेन, **संभ्रमेण**=भ्रान्त्या, **इदानीमेव**=अस्मिन्नेव समये कथितम्, **ननु**=निश्चयेनेत्यर्थ। अयं भाव—त्वया मां प्रति स्वरहस्यकथनं नावश्यकम्, त्वद्रहस्यं तु 'एष ते हृदयेष्टो वर.' इति मदुक्तवाक्यघटकवरशब्द-

---

**नायिका**—( चतुरिका की अलकें सँवारती हुई ) चेटी ! तू सचमुच चतुरिका है। तुझ से और क्या छिपाऊँ। इसलिये कहती हूँ।

**चेटी**—राजकुमारी ! अभी २ केवल 'वर' शब्द कहने से उत्पन्न हुई तुम्हारी घबराहट ने ही सब कुछ कह दिया है। इसलिये दु-खी मत हो। यदि मैं सचमुच चतुरिका ( चतुर ) हूँ तो मैंने यह भी ताड़ लिया है कि उसे भी आपके दर्शनों के बिना क्षण भर के लिये भी किसी और वस्तु में अनुराग नहीं है।

---

१ 'अलकाश्चूर्णकुन्तला·' इत्यमर·।

**नायिका**—[ सास्रम् ] हञ्जे ! कुदो अम्हाणं एत्तिआइं भाअधेआइं ?

हञ्जे ! कुतोऽस्माकमियन्ति भागधेयानि ?

**चेटी**—भट्टिदारिए ! मा एव्वं भण। किं मधुमहणो वच्छत्थलेण लच्छिं अणुव्वहंतो णिव्वुदो भोदि ?

भर्तृदारिके ! मैवं भण। किं मधुमथनो वक्षःस्थलेन लक्ष्मीमनुद्वहन् निर्वृतो भवति ?

---

श्रवणमनन्तर जातेन त्वत्संभ्रमेणैव प्रकाशितम्, इति कृत पिष्टपेषणेन।

**यदी**त्यादि—यद्यह **वस्तुतश्चतुरिका**=रहस्योद्भेदने निपुणास्मि, **ततः**=तर्हि, **सोपि**=यस्त्वया देवतायतनेऽविलक्षीकृत, **भर्तृदारिकां**=त्वा मलयवतीम्, **अपश्यन्**=अनीक्षमाण, [ 'लक्षणहेत्वो क्रियाया.'–इति हेतौ शतृप्रत्यय ] त्वददर्शनेनेत्यर्थ, **मुहूर्त्तमपि**=क्षणमात्रमपि, **अन्यस्मिन्**=त्वदतिरिक्ते वस्तुनि [ त्वा विहायान्यस्या ललनायामित्यान्तरोऽभिप्राय ] न **अभिरमते**=नाभिरतिं प्राप्नोति–नानुरज्यतीत्यर्थ, इत्येतदपि मया **लक्षितम्**=ज्ञातमेव। अय भाव —यदि वस्तुतस्त्व मम गूढाभिसंधिविज्ञान चातुर्ये विश्वसिषि, तर्हि त्वामह ब्रवीमि–यथा त्व तस्मिन्निरतिशयमनुरक्ता त विना व्यथसे, तथैव सोऽपि त्वयि सातिशयमनुरक्तस्त्वा विना न कस्मिन्नपि वस्तुनि रमत इति त्वया विश्वसनीयम्।

**सास्र**मिति—साश्रुपातमित्यर्थ। चेट्या आश्वासनजन्यहर्षोद्गम एव नायिकाया अश्रुपातस्य हेतु। **हञ्जे** इत्यादि—**अस्माकम्, इयन्ति**=एतत् परिमाणानि, **भागधेयानि**=भाग्यानि, **कुतः**=क्व संभाव्यन्ते इति शेष। यस्य बहु भाग्य तत्रैव तादृशा महापुरुषा अनुरज्यन्ति, नान्यस्मिन् अल्पभाग्ये। यदि सत्यमह तदनुरागभाजनं तर्हि विपुलभागधेयास्मि–इति भाव।

नेद्शुक्तौ **किमि**त्यादि—**मधुमथनः**=[मथ्नातीति मथन, कर्तरि ल्यु, मधोर्मथनो मधुमथन ] मधुनामकस्य दैत्यस्य हन्ता–नारायण, **वक्षःस्थलेन**=उरसा, **लक्ष्मीम्**=श्रियम्, **अनुद्वहन्**=अधारयन्–अनाश्लिष्यन्निति यावत्, **निर्वृत** =प्रीत, **भवति किं** ? न भवतीत्यर्थ। अय भाव –

---

**नायिका**—( आँसू भरकर ) चेटी ! भला, हमारे ऐसे भाग्य कहाँ !

**चेटी**—राजकुमारी ! ऐसा न कहो। क्या भगवान् मधुसूदन लक्ष्मी को बिना छाती से लगाए सुखी रह सकते हैं ?

**नायिका**—किं सुअणो पिअं वज्जिअ अण्णं भणिदुं जाणादि? सहि ! अदो वि मं संदावो अहिअदर बाहेइ । जं सो महाणुभाओ वाआमेत्तएण वि अकिदपडिवत्तिं अदक्खिणत्ति मं सम्भावइस्सदि । [ इति रोदिति ]

किं सुजनः प्रियं वर्जयित्वा अन्यद् भणितुं जानाति ? सखि ! अतोऽपि मे सन्तापोऽधिकतरं बाधते, यत् स महानुभावो वाङ्मात्रेणाप्यकृतप्रतिपत्तिमदक्षिणेति मा सम्भावयिष्यति ।

---

यथा नारायणो वक्षसा श्रियमालिङ्गयैव निर्वृतिं प्राप्नोति नान्यथा, तथा सोऽपि तव प्रियतमस्त्वामाश्लिष्यैव निर्वृता भविष्यति । प्रस्तुतमसकार्यं अप्रस्तुतकीर्तनादप्रस्तुतप्रशंसा ।

नायिकोक्तौ **किमिति**—सुजनाः प्रियमेव भाषन्ते न पुनः सम्भाव्यमानमप्यप्रियम्, अप्रियभाषणं मन्यन्ते शिक्षितमेव नेत्यर्थः । त्वयापि सौजन्येन मधुमथनेत्याद्यप्रस्तुतप्रशंसया मम प्रियमेव भाषितम् इति भावः । अत्रापि विशेषे प्रस्तुते सामान्यसंकीर्तनादप्रस्तुतप्रशंसा । **सखीति**—हे सखि [ 'सख्यशिश्वीति भाषायाम्' इत्यनेन सखिशब्दात् ङीप्, 'अम्बार्थ-' इति ह्रस्व ] **अतोऽपि**=अस्मादपि वक्ष्यमाणाद् हेतोः, **सन्तापः**=कामज्वरजनितः, **माम्**, **अधिकतरम्**=सातिशयम्, **बाधते**=पीडयति, यत् सः **महानुभावः**=[ महान् अनुभावः प्रभावो यस्य सः ] महोदयः, **वाङ्मात्रेणापि**=[ वागेव वाङ्मात्रम् तेन, मयूरव्यंसकादित्वात् समासः ] केवलया सूनृतया वाचापि, **अकृतप्रतिपत्तिम्**=[ न कृता प्रतिपत्तिः यया ताम् ] अकृतसत्काराम्, **माम्**=मलयवतीम्, **अदक्षिणा**=अचतुरा लोकव्यवहारशून्या, इति, **संभावयिष्यति**=उत्प्रेक्षिष्यते-मंस्यते । लोकव्यवहारशून्यत्वं हि कन्यानाम् परिणेयत्वमापादयति । विशेषतो विदग्धस्तु न कथमपि तादृशां विवहेदिति तस्या आन्तरोऽभिप्रायः । अतएव तस्याः सन्तापातिशयः ।

---

**नायिका**—क्या सुजन भी कभी प्यारी बात के अतिरिक्त और कुछ बोलना जानते हैं ? सखि ! मुझे इस बात से भी अधिक दुःख हो रहा है कि वह महापुरुष, जिसका मैंने वाणी मात्र से भी सत्कार नहीं किया, मुझे फूहड़ समझेगा । ( यह कह कर रोती है )

चेटी—भट्टिदारिए ! मा रोद । [ उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य हृदये ददाति ] णं भणामि मा रोद त्ति । अअं खु थणपट्टदिण्णो चन्दणपल्लवरसो इमेहिं अविरलपडन्तेहिं अस्सुविन्दूहिं उण्हीकिदो ण दे हिअअसन्दावदुक्खं अवणेदि । [ कदलीपत्रमादाय वीजयति ]

भर्तृदारिके ! मा रुदः । ननु भणामि मा रुद इति । अयं खलु स्तनपट्टदत्तश्चन्दनपल्लवरसोऽमीभिरविरलपतद्भिरश्रुबिन्दुभिरुष्णीकृतो न ते हृदयसन्तापदुःखमपनयति ।

नायिका—[हस्तेन निवारयन्ती] सहि ! मा वीजेहि । उण्हो खु एसो कदलीदलमारुओ ।

सखि ! मा वीजय । उष्णः खल्वेष कदलीदलमारुतः ।

---

इति रोदितिः=इति–पूर्वोक्तहेतो , रोदिति–अश्रूणि मुश्चति ।
निष्पीड्य=विमर्दनेन तद्रस निस्सार्य इत्यर्थ ।
अयं खल्विति—स्तनपट्टदत्तः=स्तनोपरिपरिहिते पट्टवासासि दत्तः–धारित , अयम्, चन्दनपल्लवरसः=मलयजकिसलयजलम् अविरलपतद्भिः=अविरलम्–निरन्तरम् ,पतद्भिः ,अश्रुबिन्दुभिः ,उष्णीकृतः=उष्णता नीत , सन् , ते=तव, हृदयसंतापदुःखम्=हृदयेय सताप कामज्वरजनितस्ताप , तज्जन्यं दु खम्, न अपनयति=न दूरीकरोति सखीति—मा वीजय–कदलीदलव्यजनचालनेन पवन नोत्पादयेत्यर्थ कदलीदलमारुतः=कदल्या –कदलीवृक्षस्य, दलात् जात मारुत पवन , उष्णः=तप्त अस्ति । कदलीदलमारुतस्योष्णता विरुध्यत इ विरोध । विरहतापवर्धनाच्च तदाभासत्वम् ।

---

चेटी—राजकुमारी ! रो मत । (उठकर चन्दन का पत्ता लेकर छाती प निचोड़ती है) मैं कहती तो हूँ, मत रो । यह स्तनों पर निचोड़ा हुआ चन्द के पत्तों का रस इन निरन्तर गिरती हुई आँसुओं की बूँदों से मिल कर गर होने के कारण तेरे हृदय के सन्ताप की पीड़ा को नहीं दूर कर सकता ( केले का पत्ता लाकर हवा करती है )

नायिका—( हाथ से हटाती हुई ) सखि ! हवा न कर । यह केले पत्ते की हवा भी गरम है ।

**चेटी**—भट्टिदारिए ! मा इमस्स दोसं करेहि ।
भर्तृदारिके ! मा अस्य दोषं कुरु ।

कुणासि घणचन्दणलआपल्लवसंसग्गसीदलं पि इमं ।
णीसासेहिं तुमं चिअ कदलीदलमारुअं उण्हं ॥१॥

करोषि घनचन्दनलतापल्लवसंसर्गशीतलमपीमम् ।
निःश्वासैस्त्वमेव कदलीदलमारुतमुष्णम् ॥

**नायिका**—सहि ! अत्थि कोवि इमस्स दुक्खस्स उवसमोवाओ ।

सखि ! अस्ति कोऽप्यस्य दुःखस्योपशमोपायः ।

**चेटी**—भट्टिदारिए ! अत्थि, जदि सो इह आअच्छे ।
भर्तृदारिके ! अस्ति, यदि स इहागच्छेत् ।

[ ततः प्रविशति नायको विदूषकश्च ]

---

**भर्तृदारिके** इति—यत् कदलीदलमारुतस्त्वयोष्ण इत्यनुभूयते, न स मारुतस्य स्वीयो दोष —इति भावः ।

त्वमेव तदुष्णतायामपराध्यसीति वक्तुमाह–**करोषीति** । **त्वमेव, घनचन्दनलतापल्लवसंसर्गशीतलम्**=घना निविडा , ये चन्दनलतानाम्, पल्लवा –नूतनकिसलयानि, तेषां संसर्गेण–सम्पर्केण, शीतलम्–शिशिरम्, **अपि, इमम्**=त्वयानुभूयमानम्, **कदलीदलमारुतम्**=कदलीदलानां चालनेनोत्पद्यमानं पवनम्, **निःश्वासैः**=स्वमुखनिर्गतैस्तैर्वायुभि , **उष्णीकरोषि**=अनुष्णमपि, उष्णं तप्तं करोषि । परोत्कृष्टगुणग्रहणात् तद्गुणालङ्कृतिः, तदनुप्राणित शीतलत्वोष्णत्वयोर्विरोधश्च, कालभेदेन च तदाभासत्वम । गाथा छन्द । लक्षणमुक्तं प्राक् ॥१॥

**यदीति**—सः–त्वद्दृष्टो युवा जीमूतवाहन' । अथ 'अस्ति यदि स इहागच्छेत्' इत्यनेन सूचितं नायकं प्रवेशयति '**ततः**' इत्यादिना ।

---

**चेटी**—राजकुमारी ! इसे दोष न दो ।

स्वयं तुम्हीं तो घने चन्दन वृक्ष के पत्तों के संसर्ग से ठण्डी केले के पत्ते की इस पवन को अपने लम्बे लम्बे साँसों से गरम कर रही हो ॥१॥

**नायिका**—सखि ! क्या इस दुःख को शान्त करने का कोई उपाय भी है ?

**चेटी**—राजकुमारी ! हाँ है, यदि वह यहाँ आ जाय ।

( नायक और विदूषक का प्रवेश )

**नायकः**—

व्यावृत्त्यैव सितासितेक्षणरुचा तानाश्रमे शाखिनः
कुर्वत्या विटपावसक्तविलसत्कृष्णाजिनौघानिव ।
यद् दृष्टोऽस्मि तया मुनेरपि पुरस्तेनैव मय्याहते
पुष्पेषो ! भवता मुधैव किमिति क्षिप्यन्त एते शराः ॥२॥

एवम् 'आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः' इति नियमानुरोधेन पूर्वं मलयवत्याः पूर्वरागविप्रलम्भं परिपोष्य नायकस्य जीमूतवाहनस्य तं परिपोषयितुमुपक्रमते—व्यावृत्त्येति । व्यावृत्त्य एव= पराङ्मुखीभूयैव, देवतायतने मां दृष्ट्वा लज्जया मुखं परावृत्त्यैव स्थितयेति भावः, **आश्रमे**=[ अधिकरणसप्तमी ] आश्रमस्थान्-इत्यर्थः, **तान्**=मत्साक्षाद् दृष्टान्, **शाखिनः**=[शाखाशब्दाद् ब्रीह्यादित्वादिनिमत्वर्थीय ]वृक्षान्, **सितासितेक्षणरुचा**=[सिता चासौ असिता च सितासिता,ईक्षणयोः रुक् इति ईक्षणरुक्, सितासिता चासौ ईक्षणरुक्-इति विग्रहः ] सितासितया श्वेतकृष्णया, ईक्षणयोः-स्वनेत्रयोः, रुचा-कान्त्या, **विटपावसक्तविलसत्कृष्णाजिनौघानिव**=विटपेषु-शाखासु, अवसक्ताः अवलम्बिताः, विलसन्तः-शोभमानाः, कृष्णाजिनानाम्-कृष्णसाराख्यमृगचर्मणाम्, ओघाः-समूहाः यत्र तादृशानिव, **कुर्वत्या**=सम्पादयन्त्या, **तया**=देवतायतनदृष्टया-मलयवत्या, **मुनेरपि**=तापसस्यापि, **पुरः**=समक्षे, **यद् दृष्टः**=तिरश्च्या दृष्ट्या विषयीकृतः, **अस्मि**, अहमिति शेषः, **तेनैव**=तत्कृतेन दृष्टिपातेनैव, **मयि**=जीमूतवाहने, **आहते**=विद्धे सति, **हे पुष्पेषो !**=[ पुष्पाण्येव इषवो बाणा यस्य सः, सबोधने रूपम् ] हे पुष्पायुध मदन !, **भवता**, **एते**=मां व्यथयन्तो मयानुभूयमानाः, **शराः**=बाणाः, **मुधा**=व्यर्थमेव, **किमिति**=केन हेत्वन्तरेण, **क्षिप्यन्ते**=प्रेर्यन्ते ? तद्दृष्टिबाणैरेवाहतस्य मम पुनरपि त्वया स्वबाणैर्हननं पिष्टपेषणायितमात्रम्, इति भावः ।

**नायक**—वह ( नायिका ) अपने नेत्रों की श्वेत कृष्ण कान्ति के द्वारा आश्रमस्थ उन वृक्षों को ऐसा बना रही है मानों उनकी शाखाओं पर कृष्णाजिन लटके हुए हैं । उसने जो मुझे मुनि की उपस्थिति में भी घूम कर देखा है, मैं तो उससे ही घायल हो गया हूँ । ऐ कामदेव ! तुम व्यर्थ ही ये बाण मुझ पर क्यों छोड़ रहे हो ? ॥२॥

१ 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः ।

**विदूषकः**—भो वअस्स ! कहिं खु गअं दे धीरत्तणं।
भो वयस्य ! कुत्र खलु गतं ते धीरत्वम्।

**नायकः**—वयस्य ! ननु धीर एवास्मि। कुतः,

नीता किं न निशाः शशाङ्कधवला नाघ्रातमिन्दीवरं
किं नोन्मीलितमालतीसुरभयः सोढाः प्रदोषानिलाः।

---

ऽतत्कृष्णकान्तियुताभ्यां नायिकाया नेत्राभ्यां निरीक्षिताः पादपास्तद्गुणात् श्वेतरूपं कृष्णरूपं च ] गृहीत्वा अंशतः श्वेता अंशतश्च कृष्णाः सन्तस्तथा लक्ष्यन्ते—यथैतेषु वृक्षेषु कृष्णसारमृगचर्माणि लम्बितानि भवेयुः, तान्यपि हि श्वेतकृष्णानि भवन्ति, अतोऽत्रोत्प्रेक्षालङ्कृतिः। तया च तद्गुणालङ्कारो व्यज्यते, स चोत्प्रेक्षाया उपपादकत्वात्तदङ्गम्। मुनेरपि पुरः इत्यनेन नायिकाया नायकविषयोऽनुरागातिशयो व्यज्यते। आहननमक्षरस्य धर्मः। स चात्र नायिकाया दृष्टावनुपपद्यमानः पीडां लक्षयति। विरहपीडातिशयश्च व्यङ्ग्यः। अत्र जीमूतवाहननिष्ठा मलयवतीविषयिणी रतिः प्राधान्येन व्यज्यते। सा च वियोगकालावच्छिन्नत्वाद् विप्रलम्भपदेन व्यपदिश्यते। वृत्तं शार्दूलविक्रीडितम्॥२॥

**नीता** इति–**मया**=जीमूतवाहनेन, **शशाङ्कधवलाः**=शशाङ्केन–पूर्णचन्द्रेण, धवलाः–शुभ्राः, **निशाः**–ज्योत्स्न्यः पूर्णिमारजन्य इत्यर्थः, **न नीताः**=नातिवाहिताः **किम्** ? अपि त्वतिवाहिता एव। **इन्दीवरम्**=नीलाम्बुजम्, **न आघ्रातम्**=न घ्राणविषयीकृतम् किम्, अपि त्वाघ्रातमेव। **उन्मीलितमालतीसुरभयः**=उन्मीलिताः विकसिताः, मालत्यः–मालतीपुष्पाणि, ताभिः, सुरभयः–सुगन्धयः, **प्रदोषानिलाः**=प्रदोषः–रजनीमुखं निशारम्भकाल इति यावत्, तस्य अनिलाः–वायवः, **न सोढाः**=न मर्षिताः किम्, अपितु मर्षिता एव। **कमलाकरे**=[ कमलानाम् आकरे ] कमलवने, **मधुलिहाम्**=भ्रमराणाम्, **झङ्कारः**=झमझमिति गुञ्जनम्, **वा, न श्रुतः**=नाकर्णितः, किम्। अपि त्वाकर्णित एव। तथापि, **भवान्**=विदूषको मम वयस्य, **निर्व्याजम्**=निश्छलम्, न परिहासेन, अपितु वस्तुत इत्यर्थः, **माम्**=जीमूतवाहनम्, **विधुरेषु**=दुःखेषु, **अधीर**=धैर्यरहित, **इति, केन**=केन निमित्तेन, **अभिधत्ते**=कथयति।

---

**विदूषक**—मित्र ! तुम्हारा धैर्य कहाँ चला गया ?

**नायक**—मित्र ! धीर ही तो हूँ ? क्योंकि,

मैंने क्या चाँदनी रातें नहीं काटीं ? क्या कमल की गन्ध नहीं सूँघी ? क्या खिली हुई मालती से सुगन्धित सायंकाल की (धीमी धीमी) पवन

झङ्कारः कमलाकरे मधुलिहां किं वा मया न श्रुतो
निर्व्याजं विधुरेष्वधीर इति मां केनाभिधत्ते भवान् ॥३॥

**अथवा, न सम्यगहं ब्रवीमि । वयस्यात्रेय !**

स्त्रीहृदयेन न सोढाः क्षिप्ताः कुसुमेषवोऽप्यनङ्गेन ।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम् ॥४॥

---

यदि परिहाससमुद्रयैव त्वयाहमधीर इत्युपालब्धस्तर्हि न मयात्र किमपि वक्तव्यम् । सुहृत्परिहासस्य सहर्षं सोढव्यत्वात् । यदि च वस्तुतस्तत्त्वकथनमुद्रयैव त्वं मामधीर इत्युपालभसे तर्हि निर्निमित्तोऽयमुपालम्भस्ते । नहि कोऽप्यधीर–एकां तामसीमपि रात्रिमतिवाहयितुं समर्थः । अहं त्वभिनवपेण- परा इव नैका न द्वे वा अपि त्वनेका ज्यौत्स्नीरत्यवाहयम् । नैतावदेव किन्तु परमोद्दीपनानि इन्दीवरघ्राणादीन्यप्यकरवम् । तथापि त्वमधीरत्वेन मामाक्षिपसि, तत्केन हेतुनेति भाव । धैर्ये प्रस्तुते तत्कार्यस्याप्रस्तुतस्य काक्वा प्रकाशनाद् अप्रस्तुतप्रशंसा । शार्दूलविक्रीडितं वृत्तम् ॥३॥

**अथवेति**—पक्षान्तरे । **नाहं सम्यक्**=सत्यम्, ब्रवीमि, यदहं नाधीर इति ।

स्ववचनस्यासत्यत्व प्रमाणयति–**स्त्रीहृदयेनेति । स्त्रीहृदयेन**=[ स्त्रिया हृदयमिव हृदय यस्य तेन, सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च ] स्त्रीहृदयतुल्यहृदयेन–अतिकातरेण [ स्त्रियाम् मलयवत्या हृदयम्–अनुरागो यस्य तेनेति वा ], **येन**=मया जीमूतवाहनेन, **अद्यैव** न तु पूर्वम्, **तव**= भवत , **पुरः**=अग्रे, त्वत्समक्ष इत्यर्थ , **अनङ्गेन**=शरीररहितेनापि कामेन, **क्षिप्ताः**=प्रेरिताः, **कुसुमेषवोऽपि**=पुष्पमया अपि बाणा, **न सोढाः**= न मर्षिता , **सः**, **अहम्**=अशरीरस्यापि मृदुतमकुसुमशरैरपि विचलित सन्, **धीरः**=अहं धीरोऽस्मि, **इति**, **कथम्**=केन प्रकारेण, **वदामि**= कथयामि—कामस्य मृदुलैरपि पुष्पमयै शरै क्षुब्धस्य ममात्मनो धीरत्वप्रति

---

नहीं सही ? और क्या कमलों के वन में भौंरों की गुजार नहीं सुनी ? तो फिर व्यर्थ ही आप मुझे दु ख में अधीर क्यों कहते हैं ? ॥३॥

अथवा, मैं ठीक नहीं कह रहा हूँ । सखे आत्रेय !

कामिनी में आसक्त हुए जिस पुरुष ने आज ही तुम्हारे सामने अशरीर कामदेव के फेंके हुए फूलों के बाण भी न सहे, वह मैं ( जीमूतवाहन ) कैसे कह सकता हूँ कि 'मैं धीर हूँ' ॥४॥

**विदूषकः**—[ आत्मगतम् ] एवं अहीरत्तणं पडिवज्जन्तेण आचक्खिदो णेण हिअअस्स महन्तो आवेओ । ता जाव कहिं एव एदं अवक्खिवामि । [प्रकाशम्] भो वअस्स ! कीस तुवं अज्ज लहु एव गुरुजणं सुस्सूसिअ इह आअदो ।

एवमधीरत्वं प्रतिपद्यमानेनाख्यातोऽनेन हृदयस्य महानावेगः । तद् यावत् कुत्रैवैनमपक्षिपामि । भो वयस्य ! कस्मात् त्वमद्य लघ्वेव गुरुजनं शुश्रूषित्वेहागतः ।

**नायकः**—वयस्य ! स्थाने खल्वेष प्रश्नः । कस्य वान्यस्यैतत्

पादन मिथ्याविकत्थनमानम् । किं चादृष्टमद्वृत्तस्य पुरुषान्तरस्य पुरः कदाचिदिदं विकत्थनं शोभेतापि, मदखिलवृत्तसाक्षिणस्तवाग्रे त्वेवं प्रतिपादनं सर्वथा न युज्यत इति भाव । धीरत्वप्रतिपादनानौचित्यस्य पूर्वार्धेन समर्थनात् काव्यलिङ्गम् । 'कुसुमेषवोऽनङ्गेन' इत्युभयोर्विशेष्यपदयो साभिप्रायत्वात् परिकराङ्कुरश्च । आर्यावृत्तम् ॥४॥

**एवमिति**—**एवम्**=पूर्वोक्तेन प्रकारेण, **अधीरत्वम्**=कातरत्वम्, आत्मन इति शेप, **प्रतिपद्यमानेन**=स्वीकुर्वता, **अनेन**=जीमूतवाहनेन, **हृदयस्य**=स्वमनस , **महान्**, **आवेग**=क्षोभ , **आख्यात** =सूचित । **तदित्यादि**–**तत्**=तस्माद्, **एनम्**=जीमूतवाहनम् ,**कुत्रैव**=कस्मिँश्चिद् विषयान्तरे, **अपक्षिपामि**=नयामि–विषयान्तरसक्तचित्तं करोमीत्यर्थ , येनास्य कामज्वरजनित क्षोभ किञ्चिदिवोपशाम्येत् । नायक विषयान्तरसक्तमानसं कर्तुं प्रश्नयति–**भो वयस्येति** । **लघ्वेव**=शीघ्रमेव, **गुरुजनम्**=वृद्धौ पितरौ, **शुश्रूषित्वा**=परिचर्य । पितृसेवापरायणस्य तवैवमतिशीघ्र पितरौ परित्यज्येहागमन न निर्निमित्त भवितुमर्हति, तत् कथय किं तन्निमित्तमिति भाव । नायक उत्तरयति–**वयस्येति** । **स्थाने**=युज्यत इत्यर्थ । अवसरोचित एव ते प्रश्न इति भाव । **कस्य वेति**–यद्यपि रहस्यमिद नान्यं प्रति कथयितुमुचितम्, तथापि त्व मम रहस्यवेदि मित्रमिति त्वा प्रति कथयाम्येवेति भावः । कथयि-

**विदूषक**—( मन में ) इस प्रकार अपनी अधीरता को स्वीकार करते हुए इस ने अपने हृदय की घोर व्यथा प्रकट कर दी है । अच्छा तो इसे किसी दूसरी ओर आकृष्ट करता हूँ । (प्रकट में) हे मित्र ! आज आप अपने माता पिता की सेवा करके शीघ्र ही यहाँ कैसे आ पहुँचे ?

**नायक**—मित्र ! तुम्हारा प्रश्न उचित है । तुम्हें छोड़ दूसरे मित्र,

**कथनीयम् । अद्य खलु स्वप्ने जानामि सैव प्रियतमा** [ अङ्गुल्या निर्दिशन् ] **अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा। तदिच्छामि स्वप्नानुभूतदयितासमागमरम्येऽस्मिन्नेव प्रदेशे दिवसशेष समतिवाहयितुम् । तदेहि गच्छावः ।**

[ परिक्रामत ]

**चेटी**—[ कर्णं दत्त्वा ससम्भ्रमम् ] **भट्टिदारिए ! पवसद्दो विअ सुणीअदि ।**

भर्तृदारिके ! पदशब्द इव श्रूयते ।

**नायिका**—[ ससम्भ्रममात्मानं पश्यन्ती ] **हञ्जे ! मा ईदिसं आआर**

---

तुमुपक्रमते-**अद्येत्यादि** । **जानामि**=स्मरामीत्यर्थं । **प्रणयकुपिता**=प्रणयेन कुपिता-प्रणयकोपवती। कोपोऽत्र मान । तदुक्त दर्पणे—

मान कोप स तु द्वेधा प्रणयेर्ष्यासमुद्भव ।
द्वयो प्रणयमान स्यात् प्रमोदे सुमहत्यपि ॥
प्रेम्ण कुटिलगामित्वात् कोपो य कारण विना ।

**उपालभमाना**=अधिक्षिपन्ती, **स्वप्नानुभूतदयितासमागमरम्ये**=स्वप्ने, अनुभूत -साक्षात्कृत , दयिताया –प्रेयस्या मलयवत्या , समागम -मेल , तेन रम्ये–रमणीये, **दिवसशेषम्**=अवशिष्ट दिनम्, पितृशुश्रूषात इति शेष । **समतिवाहयितुम्**=व्यतियापयितुम्–व्यतीत कर्तुमिति यावत्। **गच्छाव** इत्यस्य चन्दनलतागृहमिति शेष ।

**पदशब्द इव**=चरणनिक्षेपजन्यशब्द इव ।

---

पुरुष से यह बात कही जा सकती है? आज मैंने स्वप्न में देखा कि वही प्रियतमा ( उँगुली से सकत करके ) इस चन्दन कुञ्ज के अन्दर चन्द्रकान्तमणि शिला पर बैठी हुई प्रेम से रूठ कर मुझे कुछ उपालम्भ सा दे रही है और रो रही है। इसलिये मैं चाहता हूँ कि इसी सुहावने स्थान पर, जहाँ स्वप्न मे अपनी प्यारी से मिलाप हुआ है, सारा दिन व्यतीत करूँ । इसलिये आओ, चलें । ( घूमते हैं )

**चेटी**—(कान लगाकर, घबराहट से) राजकुमारी ! पाँवों की सी आहट सुनाई देती है ।

**नायिका**—( घबराकर अपने आप को देखती हुई ) चेटी ! मुं

पेक्खिअ को वि हिअअं मे तुलीअदु । ता उट्ठेहि । इमिणा रत्तासोअपादवेण ओवारिदाओ पेक्खह्म को पसो त्ति ।

हञ्जे ! मा ईदृशमाकारं प्रेक्ष्य कोऽपि हृदयं मे तुलयतु । तदुत्तिष्ठ । अनेन रक्ताशोकपादपेनापवारिते पश्यावः क एष इति ।

[ तथा कुरुतः ]

विदूषकः—भो वअस्स! एदं चन्दणलदाघरअं। ता पविसह्म।

भो वयस्य ! एतच्चन्दनलतागृहम्। तत् प्रविशावः।

[ नाट्येन प्रविशतः ]

नायकः—

चन्दनलतागृहमिदं सचन्द्रमणिशिलमपि प्रियं न मम ।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः ॥५॥

---

हञ्जे इति—ईदृशम्=कामविकाराकान्तम्, आकारम्=आकृतिम्, ममेति शेष, प्रेक्ष्य=विलोक्य, मे=मम, हृदयम्=हृद्गतं भावम्, कोऽपि, मा तुलयतु=नानुमिनुयात्। आशङ्कायाम्-लोट्। अपवारिते=अन्तर्हिते। एषः=यस्यायं पदशब्द: श्रूयते, स क इति, पश्यावः=ईक्षयाव इत्यर्थः। चन्दनलतागृहं दयिताशून्यं दृष्ट्वा नायको वक्ति—चन्दनलतेति। सचन्द्रमणिशिलमपि=[ चन्द्रमणिश्चन्द्रकान्तः, तस्य शिला तन्मयी शिलेत्यर्थ, तया सह वर्तमानम्। 'तेन सहेति तुल्ययोगे—' इति बहुव्रीहिः] चन्द्रकान्तोपलशिलासहितमपि, इदम्=दृश्यमानम्, चन्दनलतागृहम्,

---

इस दशा में देख कर कोई मेरे मन की अवस्था न भाँप ले। इसलिये उठ, इस रक्त अशोक की आड में होकर देखें कि कौन है ?

( रक्ताशोक की आड में होकर देखती हैं )

विदूषक—हे मित्र ! यह चन्दनलताकुञ्ज है, इसलिये ( इस में ) प्रवेश करें।

( दोनों प्रवेश का अभिनय करते हैं )

नायक—जिस प्रकार चाँदनी के बिना प्रदोष (निशामुख) अच्छा नहीं लगता, उसी तरह यह चन्दन-कुञ्ज, यद्यपि चन्द्रकान्तमणिशिला से सुशोभित है, तथापि उस चन्द्रवदनी के बिना मुझे बिलकुल अच्छा नहीं लग रहा ॥५॥

**चेटी**—[ नायकं दृष्ट्वा ] भट्टिदारिए ! दिट्ठिआ वड्ढसि। सो एव्व दे हिअअवल्लहो।

भर्तृदारिके ! दिष्ट्या वर्धसे। स एव ते हृदयवल्लभः।

**नायिका**—[ दृष्ट्वा सहर्षं ससाध्वसं च ] हञ्जे ! इमं पेक्खिअ ण सक्कुणोमि इह अच्चासण्णे ठादुं। कदाइ एसो मं पेक्खे। ता एहि। अण्णदो गच्छह्म।

हञ्जे ! इमं प्रेक्ष्य न शक्नोमीहात्यासन्ने स्थातुम्। कदाचिदेष मां पश्येत्। तदेहि। अन्यतो गच्छावः।

---

**चन्द्राननया**=[ चन्द्रवद् आननं यस्यास्तया ] इन्दुमुख्या प्रेयस्या, **रहितम्**=वियुक्तं सत्, **चन्द्रिकया**=ज्योत्स्नया रहितम्, **निशायाः**=रात्रेः, **मुखमिव**=प्रारम्भ इव-प्रदोषकाल इवेत्यर्थः, **मम**=जीमूतवाहनस्य, **प्रियम्**=प्रीत्युत्पादकम्, **न**=नास्तीत्यर्थः।

यथा चन्द्रिकया विना निशारम्भस्तमस्काण्डमलीमसतया नानन्दं कस्यचिदुत्पादयति, तथैवेदं चन्दनलतागृहं सचन्द्रोपलमपि चन्द्राननया तया विना न मम प्रीतिमुत्पादयति। चन्द्रोपलश्चन्द्र उदिते द्रवति, तेन च ताप उपशाम्यति। केवलस्तु चन्द्रोपलोऽकिञ्चित्करस्तापहरणे, तथा च चन्द्रानना तां विना द्रवशून्येयं चन्द्रमणिशिला न मम तापहरणे क्षमेति गूढोऽभिप्रायः।

उपमालङ्कारः। प्रीत्युत्पादकहेतौ विद्यमानेऽपि प्रीतेरनुत्पादाद् विशेषोक्तिरपि। सा च चन्द्राननया रहितमिति निमित्तोपादानात् सनिमित्ता। 'विशेषोक्तिरखण्डेषु कारणेषु फलावचः' इति तल्लक्षणं काव्यप्रकाशे। चन्द्राननया विना न प्रियमिति वचनाद् विनोक्तिरपि। विनोक्तिलक्षणं यथा—

'विनोक्तिर्यद् विनान्येन नासाध्वन्यदसाधु वा'।

विनाशब्दप्रयोगस्तु न तत्रावश्यकः। तदर्थमात्रप्रतीतिस्त्वावश्यकी। अत्रोपमाने निशामुखे-उपमेयगतचन्द्रमणिशिलाप्रतिनिधिभूतं न किमप्युपात्तमिति हीनपदत्वमुपमादोषोऽपि प्रतिभाति। आर्या छन्दः ॥५॥

नायिकोक्तौ—**इमं प्रेक्ष्येत्यादि**। **अत्यासन्ने**=नेदीयसि स्थाने। **सोत्क-**

---

**चेटी**—( नायक को देखकर ) राजकुमारी ! तुम भाग्यवती हो। यह वही तुम्हारा प्रियतम है।

**नायिका**—(देखकर, आनन्दपूर्वक और घबराकर) चेटी ! इसे देख कर

---

१ 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः। २ 'प्रदोषो रजनीमुखम्' इत्यमरः।

[ सोरुकम्पं पदद्वयं ददाति ]

**चेटी**—[ विहस्य ] अदिकादरे ! इद ट्ठिदं पि को तुमं पेक्खदि। ण विसुमरिदो अन्तरे रत्तासोअपादवो। ता इह एव चिट्ठह्म।

अतिकातरे ! इह स्थितामपि कस्त्वां पश्यति । ननु विस्मृतोऽन्तरे रक्ताशोकपादपः । तदिहैव तिष्ठावः ।

[ तथा कुरुत ]

**विदूषकः**—[निरूप्य] भो वअस्स ! एसा सा चन्दमणिसिला।

भो वयस्य ! एषा सा चन्द्रमणिशिला।

[ नायकः सवाष्पं निःश्वसिति ]

---

**सोरुकम्पमिति**—ऊर्वोः कम्पः ऊरुकम्पः, ऊरुकम्पेन सहेति सोरुकम्पम्। अनेन नायिकायाः कम्पापरपर्यायः वेपथुर्नाम सात्त्विकभाव उक्तः । तदुक्तं दर्पणे—

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥

**विहस्येति**—रक्ताशोकपादपान्तर्हिताया अपि नायिकाया अन्यकर्तृकदर्शनमभावेन चेष्टा हासस्य हेतुः । **अतिकातरे**=अतिभीतिस्वभावे । इह= रक्ताशोकपादपान्तर्हिते स्थाने । **कस्त्वां पश्यति**=त्वां न कोऽपि द्रष्टुमर्हतीत्यर्थः । **अन्तरे**=मध्ये । मध्ये स्थितोऽयं रक्ताशोकपादपस्त्वां व्यवदधाति इति विस्मृतं किं त्वयेति भावः । **तत्**=तस्माद्—अन्यकर्तृकास्मत्प्रेक्षणस्याशङ्काया अभावादेवेत्यर्थः ।

विदूषकोक्तौ **निरूप्येति**—निरूप्य=दृष्ट्वा ।

**सवाष्पमिति**—सवाष्पम्=साश्रु ।

---

मैं यहाँ (इससे) अधिक नजदीक खड़ी नहीं रह सकती । कदाचित् यह मुझे देख न ले । इसलिये चल, और स्थान पर चलें ।

( काँपती हुई जांघों सहित दो पग धरती है )

**चेटी**—( हँस कर ) अतिकातरे ! यहाँ खड़ी हुई तुझे कौन देखता है ? बीच में रक्त अशोक का वृक्ष है, यह तू बिलकुल भूल गई है । इसलिये यहीं ठहरें ।

( वैसे ही करती हैं )

**विदूषक**—( देखकर ) हे मित्र ! यह वही चन्द्रमणिशिला है ।

( नायक आँसू भर कर लम्बी साँस लेता है )

**चेटी**—भट्टिदारिए ! एसा सेत्ति आलावो सुणीअदि। ता अवहिदा सुणह्म ।

भर्तृदारिके ! एषा सेत्यालापः श्रूयते। तदवहिते शृणुव ।

[ उभे आकर्णयत ]

**विदूषक**.—[ हस्तेन चालयन् ] भो वअस्स ! ण भणामि एसा सा चन्दमणिसिल त्ति ।

भो वयस्य ! ननु भणामि एषा सा चन्द्रमणिशिलेति ।

**नायक**.—वयस्य ! सम्यगुपलक्षितम्। [ हस्तेन निर्दिशन् ]

शशिमणिशिला सेयं यस्या विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा ।

---

चेट्युक्तौ-एषेत्यादि। आलाप शब्द =अवहिते=सावधाने [ अव पूर्वाद् दधाते क्त , दधातेर्हि , प्रथमाया द्विवचनम् ]।

**शशिमणिशिलेति**—**इयम्**=पुरोदृश्यमाना, **सा**=सैव, मत्प्रिया धिष्ठिततया स्वप्ने मया साक्षात्कृता, **शशिमणिशिला**=चन्द्रकान्तशिला, अस्ति, **यस्याम्**=यत्र शिलायाम्, **विपाण्डुरम्**=विशेषेण पाण्डुर पीत वर्णम्, मद्वियोगादिति शेष , **आननम्**=मुखम् , **वामे**=सव्ये, **करकिसलये**=[ कर किसलयमिव पल्लवमिव तस्मिन् ] किसलयकोमले करे, **कृत्वा**=निधाय यथे , स्थिता, **घनश्वसितोद्गमा**=घन सान्द्रो बहुल श्वसितानाम्–नि श्वासानाम्, उद्गम –उद्भवो यस्या ,तादृशी **चिरयति**= [ चिरशब्दात् 'तत्करोति'– इति णिच , तत शतरि, सप्तम्येकवचने रूपम् ] सकेतस्थान प्राप्तु विलम्ब कुर्वति, **मयि**=[ विषयसप्तमी ] मद्विषये, **भ्रुवोः**=नेत्रोपरिभागस्थरोमराज्यो , **मनाक्**=ईषत्, **स्फुरिते** =स्पन्दने

---

**चेटी**—राजकुमारी ! 'यह वह है' ऐसी बातचीत सुनाई देती है। इसलिए ध्यान स सुनें।

( दोनों सुनती हैं )

**विदूषक**—( हाथ से झिंझोडकर ) हे मित्र ! मैं कहता हूँ कि यह वही चन्द्रमणिशिला है।

**नायक**—मित्र ! तूने ठीक पहचाना। ( हाथ से सकेत करता हुआ) यह वही चन्द्रमणिशिला है, जिस पर, मेरे आने में देर होने के कारण

---

१ 'वाम शरीरे सव्य स्याद्' इत्यमर। २ 'पल्लवोऽस्त्री किसलयम् इत्यमर।

चिरयति मयि व्यक्ताकूता मनाक्स्फुरितैर्भ्रुवो-
र्विरमितमनोमन्युर्दृष्टा मया रुदती प्रिया ॥६॥

तदस्यामेव चन्द्रकान्तमणिशिलायामुपविशावः ।

**नायिका**—[ विचिन्त्य ] का उण एसा भविस्सदि ।

का पुनरेषा भविष्यति ।

**चेटी**—भट्टिदारिए ! जह अम्मे ओवारिदा दाव एदं पेक्खह्म, मा णाम तुमम्पि एदेणं दिट्ठा ।

भर्तृदारिके ! यथाऽऽवामपवारिते तावत् एनं पश्यावः, मा नाम त्वमप्येतेन दृष्टा ।

---

**व्यक्ताकूता**=व्यक्तम्–प्रकटितम् आकूतम्–आन्तरोऽभिप्रायः–विलम्बोपालम्भरूपः, यया, तथाभूता, **विरमितमनोमन्युः**=विरमित –दूरीकृतः उपस्थिते मा दृष्ट्वेति शेषः, मनसः, मन्युः–क्रोधः, यया तादृशी, **रुदती**=अश्रूणि मुञ्चती, [ प्रियाऽदर्शनजन्यकोपस्य प्रियदर्शने सति हर्षोद्गमेन रोदने पर्यवसानम्–इति निसर्गः, ] **प्रिया**=मलयवती, **मया**=जीमूतवाहनेन, **दृष्टा**=साक्षात्कृता, स्वप्न इति शेषः । हरिणीवृत्तम् । तल्लक्षणं यथा—

'रसयुगहयैर्न्सौ म्रौ स्लौ गौ यदा हरिणी तदा' ॥६॥

**विचिन्त्य**=नायकोक्तं विचार्य । **का पुनरिति**–**एषा**=या एतेन मद्वल्लभेन दृष्टा, सा **का भविष्यति** ? न खलु मदितरा भवेद् इति तस्या गूढाभिसन्धिः ।

**भर्तृदारिके** इति–**यथा**=येन प्रकारेण, **आवाम्**, **अपवारिते**=रक्ताशोकपादपेन अन्तर्हिते सत्यौ, **एनम्**=त्वद्वल्लभजनम्, जीमूतवाहनम्,

---

दीर्घ निःश्वास छोड़ती हुई, अपने पीले मुख को बाएँ हस्तकमल पर रक्खे हुए मैंने अपनी प्रिया रोती हुई देखी थी। यद्यपि उसने अपने मन के रोष को रोका हुआ था, तथापि भौंहों की हलकी फड़कन से उसके हृदय का भाव स्पष्ट ज्ञात होता था ॥६॥

तो इसी चन्द्रकान्तमणिशिला पर बैठते हैं।

**नायिका**—( सोचकर ) भला, वह कौन होगी ?

**चेटी**—राजकुमारी ! जैसे हम छिपी हुई इसको देख रही हैं, कदाचित् इसने भी आपको इसी प्रकार देख लिया हो !

---

१ 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः ।

**नायिका**—जुज्जइ एदं। किं पुण पणअकुविदं पिअजणं हिअए करिअ मन्तेदि।

युज्यत एतत्। किं पुनः प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयते।

**चेटी**—मा ईदिसं आसङ्कं करेहि। पुणो वि दाव सुणह्म।

मा ईदृशीमाशङ्कां कुरु। पुनरपि तावच्छृणुवः।

**विदूषकः**—[ आत्मगतम् ] अहिरमदि एसो एदाए कहाए। भोदु, एदं एव से वड्ढावइस्सं। [ प्रकाशम् ] भो वअस्स! तह परुण्णा तुए किं भणिदा।

अभिरमत एष एतया कथया। भवतु, एतदेवास्य वर्धयिष्यामि। भो वयस्य! तथा प्ररुदिता त्वया किं भणिता।

---

**पश्यावः, एवम्**–तथैव,**एतेनं त्वमपि, मा नाम दृष्टा**=न खलु साक्षात्कृता, भवे, अथ भाव —यथा पादपान्तर्हिताभ्यामावाभ्यामय दृश्यते, तथैव त्वमपि कश्चिदन्तर्हितेन एतेन दृष्टा भवेरिति।

**युज्यत** इति—सभवत्येतदित्यर्थ। **किमिति**–पुन शब्दस्तवर्थे, किन्तु इत्यर्थ। **हृदये कृत्वा**=उद्दिश्येत्यर्थ। **मन्त्रयते**=आलपति। किन्त्वय जन प्रणयकुपिता काचन प्रियामुद्दिश्य आलपतीति शब्दार्थ। कदाचिदय मदतिरिक्ताया कस्याचनान्यस्यामनुरक्त इति नायिकाया गूढाशङ्का।

**मेति**—**ईदृशीम्**=मदन्यस्यामनुरक्तोऽयम्, इत्येवभूताम्। **पुनरपीति**–विशेषनिर्णयायेति शेष।

**अभिरमत** इति—**अभिरमते**=प्रीतिं प्राप्नोति। **वर्धयिष्यामि**=प्रश्नोत्तरपरम्परयेति शेष। **भो वयस्येति**–स्वप्ने दृष्टा रुदतीं स्वप्रिया प्रति त्वया निमुक्तमिति भाव।

---

**नायिका**—हो सकता है। किन्तु यह प्रेम में रूठी हुई किस प्रियतमा का हृदय करके कह रहा है?

**चेटी**—ऐसी शका मत कर। फिर से सुन लेती है।

**विदूषक**—( मन में ) यह इस प्रसङ्ग से प्रसन्न होता है। अच्छा, इसी प्रसङ्ग को आगे बढाता हूँ। ( प्रकट में ) हे मित्र! उस प्रकार रोती हुई को आप ने क्या कहा?

नायकः—वयस्य ! इदमुक्ता—

निष्यन्दत इवानेन मुखचन्द्रोदयेन ते ।
एतद्वाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम् ॥७॥

नायिका—[ सरोषम् ] सुदं एदं चउरिए ! अत्थि किंपि अदो वरं सोदव्वं । [ सास्रम् ] एहि गच्छह्म ।

श्रुतमेतच्चतुरिके ! अस्ति किमप्यतः परं श्रोतव्यम् । एहि गच्छावः ।

चेटी—[ हस्तेन गृहीत्वा ] भट्टिदारिए ! मा एवं । जेण तुमं दिट्ठा, सो अण्णं उद्दिसिअ एवं भणिस्सदि त्ति ण मे हिअअं पत्तिआअदि । ता कहावसाणं दाव पडिवालह्म ।

भर्तृदारिके ! मैवम् । येन त्वं दृष्टा, सोऽन्यामुद्दिश्यैवं भणिष्यतीति न मे हृदयं प्रत्येति । तत् कथावसानं तावत् प्रतिपालयावः ।

---

निष्यन्दत इति—वाष्पाम्बुना=[ वाष्पमेवाम्बु बाष्पाम्बु, तेन] अश्रुजलेन, सिक्तम्=उक्षितम्, एतत्, चन्द्रकान्तशिलातलम्=चन्द्रकान्तशिलाया, तलम्=पृष्ठम्, अनेन, ते=तव, मुखचन्द्रोदयेन=मुखमेव चन्द्रः तस्य उदय=उद्गमः, तेन, निष्यन्दत इव=प्रस्रवतीव । त्वन्नेत्रजलैरार्द्रीकृतमिदं चन्द्रमणिशिलातलं तथा भाति यथा मन्ये इदं त्वन्मुखचन्द्रोदयेन जलमुद्गिरतीति इति भावः । चन्द्रोदये चन्द्रोपलः स्रवतीति कविसमयः । चन्द्रकान्तशिलाया जलसम्बन्धदर्शनाद् निष्यन्दोत्प्रेक्षा । सा च मुखचन्द्रोदयेनेति रूपकानुप्राणिता । अनुष्टुप् छन्दः ॥७॥

सरोषमिति—अन्यनायिकासङ्गानुमानाद् रोषः ।

हस्ते गृहीत्वा=गच्छन्तीं हस्ते गृहीत्वा निवार्यैत्यर्थः । भर्तृदारिके

---

नायक—मित्र ! मैंने उसे यह कहा कि—

आँसुओं से सींची हुई यह चन्द्रकान्तशिला मानो तेरे इस मुखचन्द्र के उदय होने से द्रवित हो उठी है ॥७॥

नायिका—( क्रोध से ) चतुरिके ! सुना ? क्या इससे अधिक और भी कुछ सुनने की आवश्यकता है ? ( आँसू भर कर ) चलो, चलें ।

चेटी—( हाथ पकड़कर ) राजकुमारी ! ऐसा न करो । भला जिसने आपको देख लिया हो, वह किसी और की ओर संकेत करके ऐसा कहेगा, यह बात मेरा दिल नहीं मानता । इसलिये प्रसङ्ग की समाप्ति तक तो प्रतीक्षा करें ।

**नायकः**—वयस्य! तामेवास्यां शिलायामालिख्य तया चित्रगतयात्मानं विनोदयेयम्। तदित एव गिरितटान्मन शिला शकलान्यानय।

**विदूषकः**—जं भवं आणवेदि। [निष्क्रम्य प्रविश्य] भो वअस्स! तुए एक्को वण्णो आणत्तो, मए उण इह पव्वदादो पञ्च वण्णा आणीदा। ता आलिहदु भवं।

यद्भवानाज्ञापयति। भो वयस्य! त्वयैको वर्ण आज्ञप्तः, मया पुनरिह पर्वतात्पञ्च वर्णा आनीताः। तदालिखतु भवान्।

इति-**प्रत्येति**=विश्वसिति। **कथावसानम्**=कथाया अन्तम्, **प्रतिपाल यावः**=प्रतीक्षिष्यावहे, कथान्त यावदत्रैव स्थातव्यमित्यर्थः।

इदमत्र बोध्यम्—वियोगिना स्वप्नचित्रादौ प्रियादर्शनादिभिर्विनोदोऽन्यनाभिहित। तद् यथा—

वियोगावस्थासु प्रियजनसदृक्षानुभवन ततश्चित्र कर्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपनतवता स्पर्शनमपि प्रतीकारः कामव्यथितमनसा कोऽपि कथित

तत्र स्वप्नदर्शनं पूर्वं वर्णितम्। इदानीं नायकविदूषकोक्तिप्रत्युक्तिभ्या चित्रदर्शनं वर्णयितुमारभते-**वयस्येति**। **तामेव**=स्वप्नदृष्टा प्रियाम्, **चित्रगतया**=चित्ररूपेण स्थितया, **विनोदयेयम्**=तत्प्राप्त्युत्कण्ठा किञ्चिदिव प्रशमय्य आत्मान सतोषयेयम्—**तदित** इति। **इतः**=अस्मादेव अन्तिकस्थात्, **मन शिलायाः**=नागजिह्विकाया धातुविशेषस्य, **शकलानि**=खण्डानि।

**यद् भवानिति**-यथा भवान् आज्ञापयति, तथा करोमीत्यर्थः। **भो वयस्येति-वर्णक**=वर्णयति-रञ्जयति नीलपीतादिरूपमुत्पादयतीति वर्णकं

**नायक**—मित्र! (जो चाहता है) इस शिला पर उसी का चित्र खींच कर उस चित्रमयी प्रिया से जी बहलाऊँ। तो इसी पहाड़ पर से मैनसिल के टुकड़े उठा लाओ।

**विदूषक**—जो आप की आज्ञा। (बाहर निकलकर और प्रवेश कर) मित्र! आप ने तो एक ही रंग के लिये कहा था पर मैं यहाँ पर्वत से पाँच रंग ले आया हूँ। अब आप चित्र खींचिए।

१ 'मन शिला मनोगुप्ता मनोह्वा नागजिह्विका' इत्यमरः। २ 'भित्तिः शकलखण्डे वा' इत्यमरः।

**नायकः**—वयस्य ! साधु कृतम् ।

[ गृहीत्वा शिलायामालिखन् सरोमाञ्चम् ]

**सखे ! पश्य पश्य,**

अक्लिष्टबिम्बशोभाधरस्य नयनोत्सवस्य शशिन इव ।

दयितामुखस्य सुखयति रेखापि प्रथमदृष्टेयम् ॥८॥

[ आलिखति ]

---

रञ्जनधातुः ( रङ्ग इति भाषायाम् ) पक्व पच=मन शिलाख्यः, **आनेतुम्**= आनेतुम् आदिष्टः, पञ्च=पञ्चवर्णवन्त , पञ्चसंख्याकाः, वर्णाः=वर्णकाः ।

नायकश्चित्रमसमाप्यैव मध्य एव विदूषकं संबोध्य तत् प्रशंसति—**अक्लिष्टे**-ति । **अक्लिष्टबिम्बशोभाधरस्य**=[ अक्लिष्टं बिम्बम्, अक्लिष्टबिम्बम्, तस्य शोभेव शोभा यस्य सः—अक्लिष्टबिम्बशोभः—'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन समासोत्तरपदलोपौ, तादृशोऽधरो यस्य सः, तस्य ] *अक्लिष्टम्—हस्तस्पर्शादिनानुपहतम्, यद् बिम्बम्—बिम्बफलम्, तद्वत्* शोभा—कान्तिर्यस्य तादृशः, अधरः—अधरोष्ठो यस्य तादृशस्य, चन्द्रपक्षे—अक्लिष्टा—मेघावरणादिनानुपहता, या बिम्बस्य—मण्डलस्य, शोभा, तस्याः धरः—धारकः [ धरते पचाद्यच् ] तस्य, **नयनोत्सवस्य**=नयनयोरुत्सवस्य—नयनानन्दकरस्य, [ मुखे चन्द्रे चोभयत्र समानम् ] अत एव **शशिन इव**= चन्द्रमस इव, स्थितस्य, **दयितामुखस्य**=दयितायाः—प्रेयस्याः पूर्वं देवतायतने पश्चात् स्वप्ने च साक्षात्कृतायाः, मुखस्य—आननस्य, स्मारिका, **प्रथमदृष्टा**=प्रथममवलोकिता [ इतः पूर्वं कदापि केनाप्यनालिखितत्वाद् दर्शनस्य प्राथम्यम् ], चन्द्रपक्षे—शुक्लपक्षद्वितीयायां प्रथमं साक्षात्कृता, तत पूर्वममावस्याप्रतिपदोश्चन्द्रस्यादर्शनाद्—दर्शनस्य प्राथम्यम् । **इयम्**=मयाऽऽलिखिता,

---

**नायक**—मित्र ! अच्छा किया । ( रंग लेकर शिला पर चित्र खींचता हुआ रोमाञ्च-पूर्वक ) मित्र ! देख, देख ।

पके हुए बिम्बफल के समान सुन्दर अधर वाले और नयनों को आनन्द देने वाले प्रियतमा के मुख की रेखा की पहली झलक भी कैसी हाँ सुख-दायिनी है, जैसे सम्पूर्ण मण्डल से सुशोभित और आँखों को ठण्डक पहुँचाने वाले चन्द्र की पहली कला ॥८॥

( चित्र खींचता है )

---

१ 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्यमरः ।

**विदूषकः**—[ सकौतुकं निर्वर्ण्य ] भो वअस्स ! अप्पच्चक्खं वि एवं आलिहीअदित्ति अच्छरिअं ।

भो वयस्य ! अप्रत्यक्षमप्येवमालिख्यत इत्याश्चर्यम् ।

**नायकः**—वयस्य !

प्रिया संनिहितैवेयं संकल्पैः स्थापिता पुरः ।
दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत्कोऽत्र विस्मयः ॥९॥

---

**रेखा अपि**, चन्द्रपक्षे रेखा=रेखासदृशी कलापि, **सुखयति**=हृदयमानन्दयति । यथा द्वितीयाया चन्द्रमसः कलामात्रमपि दृष्टिगोचरीभूतं द्रष्टारमानन्दयति, तथैव दयितामुखचित्रस्यासमप्रस्यापीयं रेखा मे मन सुखयति ।

पूर्णोपमालङ्कारः । शशी उपमानम, दयितामुखमुपमेयम्, अक्लिष्टबिम्बशोभाधरत्वं नयनोत्सवत्वं च समानो धर्म , इवशब्द उपमावाचकम् । चित्ररेखाशशिकलयोर्बिम्बप्रतिबिम्बभावः । यत्प्रतिकृते रेखापि चित्तं सुखयति सत् स्वयं कियत् सुखयेदिति वचनभङ्ग्या अर्थापत्तिव्यञ्जनद्वारा नायिकामुखस्य सौन्दर्यातिशयो व्यज्यते । आर्यावृत्तम् ॥७॥

**आलिखति**=चित्रयतीत्यर्थ ।

**भो वयस्येति-अप्रत्यक्षमपि**=इदानीमसन्निधानेन चक्षुरगोचरोऽपि, **एवम्**=अतिसाम्यवत् इत्यर्थ , **आलिख्यते** इत्यहो ते चित्रकलानैपुण्यमिति भाव ।

नात्र किमप्याश्चर्यमिति प्रतिपादयति नायक —**प्रियेति** । **संकल्पैः**=निरन्तरध्यानै , **पुरः स्थापिता**=मदग्रे स्थिरीकृतेव, **इयम्**=मद्हृदयासनाधिष्ठिता, **मम प्रिया**=मलयवती, **संनिहितैव**=अन्तिकस्थैव, अस्ति न दूरे, हृदयस्थिताया निरन्तरं चिन्त्यमानाया· कुतो दूरत्वम्, इति भावः । यद्यपि नास्ति सा बहिरिन्द्रियजन्यप्रत्यक्षविषया तथापि मानसेन प्रत्यक्षेणाहं तां सर्वदैव साक्षात्करोमीति गूढाभिसन्धि ।

---

**विदूषक**—( विस्मय-पूर्वक देखकर ) हे मित्र ! उसके प्रत्यक्ष न होते हुए भी ऐसा चित्र बनाते हो, यह आश्चर्य है ।

**नायक**—मित्र !

सकल्प द्वारा सामने स्थापित की हुई प्रियतमा तो निकटवर्तिनी ही है । यदि उसी को देख देख कर मैं चित्र बना रहा हूँ तो इस में आश्चर्य की क्या बात है ? ॥९॥

**नायिका**—[ निःश्वस्य सास्रम् ] चदुरिए ! जादं खु कहावसाणं । ता एहि । अय्यमित्तावसुं दाव पेक्खह्म ।

चतुरिके ! जातं खलु कथावसानम् । तदेहि । आर्यमित्रावसुं तावत् पश्यावः ।

**चेटी**—[ सविषादमात्मगतम् ] हं जीविअणिरपेक्खो विअ से आलावो । [ प्रकाशम् ] भट्टिदारिए ! गदा एव्व तहिं मणोहरिआ । अदो कदाइ भट्टिदारओ मित्तावसू इह एव्व आअच्छे ।

हं जीवितनिरपेक्ष इवास्या आलापः । भर्तृदारिके ! गतैव तस्मिन् मनोहरिका । अतः कदाचिद्भर्तृदारको मित्रावसुरिहैवागच्छेत् ।

---

**यदि, एनाम्**=[ 'द्वितीयाटौस्स्वेन —'इत्यनेनान्वादेशे इदशब्दस्यैनादेश ] भावनोपनीता मत्प्रियाम्, **दृष्ट्वा दृष्ट्वा**=पुन पुन साक्षात्कृत्य, **लिखामि**=चित्रगता करोमि, **तत्**=तर्हि, **अत्र**=पुन पुनर्दृष्ट्वा चित्रलिखने, **को विस्मयः**=किमाश्चर्यम्, न कोऽपीत्यर्थ । निपुणाश्च चित्रकारा सकृदेव दृष्ट्वा वस्तु, स्वतूलिकानैपुण्येन चित्रमुद्भासयन्ति, अह पुनरात्मन प्रिया पुन पुनरवलोक्य चित्रितामकार्षमिति नात्र किमपि विस्मयस्थानमिति भाव । अनुष्टुप् छन्द ॥६॥

**निःश्वस्येति**—प्रियासन्निहितेत्यादिरूपया नायकोक्त्या 'सोऽन्यत्रानुसक्त' इति नायिकाया भ्रम एव तस्मिन् श्वासाश्रुपातयोर्हेतु । **चतुरिके इति**—कथावसानमप्यनुभूतम्, तेनापि मद्विचार एव समर्थितो भवति, यन्नायको मदन्यस्या कस्याचिदनुरक्त । **हमिति**—हम् इति विषादद्योतकमव्ययम् । **अस्या**=नायिकया, **आलाप**=स्वरव्यक्ति वचनभङ्गी वा, **जीवितनिरपेक्ष इव**=[निर्गता अपेक्षा यस्य स निरपेक्ष ,जीविते निरपेक्ष ] जीविते-जीवने प्राणधारणे, निरपेक्ष —नि स्पृह इव, अनुभूयत इति शेष । अय भाव —अनया जात कथावसानमिति श्लेषोक्त्या आत्मकथाया अप्यवसान सूचितम् । अर्थात् स्वप्राण

---

**नायिका**—( निःश्वास लेकर, आँसू भर कर ) चतुरिके ! कथा समाप्त हो चुकी । इसलिये चलो, आर्य मित्रावसु से मिल लें ।

**चेटी**—( दुःख से मन में ) हुँ ! इसकी बातचीत तो जीवन की ओर से निराशा सी प्रकट करती है । (प्रकट में) राजपुत्रि ! उसके पास तो मनोहरिका गई हुई है । इसलिये सम्भव है, आर्य मित्रावसु यहीं आ जावें ।

[ ततः प्रविशति मित्रावसुः ]

**मित्रावसुः—आज्ञापितोऽस्मि तातेन । यथा—वत्स मित्रावसो ! कुमारो जीमूतवाहनोऽस्माभिरिहासन्नवासात् सुपरीक्षितः, तद् योग्योऽयं वरः । तस्मै वत्सा मलयवती प्रतिपाद्यतामिति । अहं तु स्नेहपराधीनतयान्यदेव किमप्यवस्थान्तरमनुभवामि ! कुतः,**

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां सम्मतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान् विनीतो युवा ।

त्यागाध्यवसाय प्रकटित । इदानीं जीमूतवाहनस्यान्यानुरागेऽनया निश्चित्य नेयं प्राणान् धारयिष्यतीति भाव । तत्र=मित्रावसुसमीपे-तमानेतुमित्यर्थ । अनेन 'नासूचितस्य प्रवेश' इति नाट्यनियमानुरोधेन भविष्यत्प्रवेशस्य मित्रावसो सूचनं कृतम् ।

अथ पूर्वसूचितं मित्रावसुं प्रवेशयति—**ततः प्रविशतीति** । **आज्ञापित इति—आसन्नवासात्**=आसन्ने-समीपे, वासात्-निवासात् । **प्रतिपाद्यताम्**=पत्नीरूपेण दीयताम् । **स्नेहपराधीनतया**=स्नेह-भगिन्यां मलयवत्यां वात्सल्यम्, तत्पराधीनतया-तत्परतन्त्रतया, **अन्यदेव किमपि**=वक्तुमशक्यमित्यर्थः, **अवस्थान्तरम्**=अन्यामवस्थामित्यवस्थान्तरम् [ मयूरव्यंसकादित्वात् समास. ] भिन्नामवस्थामिति भाव', **अनुभवामि** । यद्यपि पित्रा मलयवती जीमूतवाहनाय प्रतिपादयितुं निश्चितमाज्ञप्तं च, तथापि त्वत्र विषये भगिनीवात्सल्यदोषात् 'स्नेह खलु पापशङ्की' इति न्यायेन भविष्यदनिष्टशङ्कया विचित्रामेव दशामनुभवामि-इति भावः ।

तदेवावस्थान्तरं सहेतु प्रतिपादयति—**यद् विद्याधरेति** । यद् यस्मात् कारणाद्, [ अयं जीमूतवाहन ], **विद्याधरराजवंशतिलक**:

( मित्रावसु का प्रवेश )

**मित्रावसु**—पिता ने मुझे आज्ञा दी है कि "बेटा मित्रावसु ! पा[स] रहने के कारण हम ने कुमार जीमूतवाहन को भली भाँति परख लिया कि वह सुयोग्य वर है। इसलिये उसके साथ मलयवती का विवाह कर दो" पर स्नेह के कारण मेरी तो कुछ और ही दशा हो रही है। क्योंकि,

यह ( जीमूतवाहन) विद्याधर-राजकुल में श्रेष्ठ है, बुद्धिमान् है, अ[च्छे] लोगों में सम्मानित है, अत्यन्त सुन्दर है, अति पराक्रमी है, विद्वान् है,

**यश्चासूनपि सत्यजेत् करुणया सत्त्वार्थमभ्युद्यत-**
**स्तेनास्मै ददत स्वसारमतुला तुष्टिर्विषादश्च मे ॥१०॥**

---

धराणाम्, राजवंश –राजकुलम् [ यत्र जाता विद्याधराणा राजानोऽभि-
न्यन्ते ], तस्य तिलक –तिलकवन्मूर्धन्य , **प्राज्ञः**=[ प्रकर्षेण जानातीति
:, प्रज्ञ एव प्राज्ञ , प्रज्ञादित्वात् स्वार्थेऽण्, अथवा प्रज्ञाऽस्यास्तीति प्रज्ञा-
ब्दाद् 'प्रज्ञाश्रद्धा–'इत्यादिना मत्वर्थीयोऽण् ] पण्डित , **सताम्**=साधुजना-
म्, **संमतः**=माननीय , **रूपेण**=सौन्दर्येण [ 'प्रकृत्यादिभ्य उपसंख्यानम्'
त्यनेन तृतीया ], **अप्रतिमः**=[ न प्रतिमा–सादृश्य यस्य स ] अनुपम ,
तिशयसौन्दर्य इत्यर्थ , **पराक्रमधन** =पराक्रम –शौर्यमेव, धनम्–द्रवि
म्, यस्य तादृश , **विद्वान्**=धीर –विपत्स्वपि धैर्याद् अविच्यवमान ,
नीतः =विनययुक्त , जितेन्द्रियश्च, **युवा**=तरुणश्च, अस्ति । **यश्च**=यस्माच्च
ो अयम्, **करुणया**=दयया, **सत्त्वार्थम्**=[ सत्त्वेभ्य इति सत्त्वार्थम् ]
णिना हिताय, **अभ्युद्यतः**=[ अभि, उद् इति उपसर्गौ, ताभ्या यतद्
क ] उद्युक्त सन्, **असूनपि**=प्राणानपि, **सत्यजेत्**=सम्यग्–अना-
मेन जह्यात् [ सभावनायां लिङ् ], प्राणिहिताय स्वासूनुज्झतोऽस्य न
ागापि दु ख सभाव्येतेति भाव । **तेन**=उक्तेन हेतुद्वयेन, **अस्मै**=
मूतवाहनाय, **स्वसारम्**=भगिनीं मलयवतीम्, **ददतः**=पत्नीरूपेण
ीच्छत , **मे**=मम, **अतुला**=निरतिशयेत्यर्थ , **तुष्टिः**=आत्मप्रीति –
त प्रसाद , **विषादः**=दु ख च, भवत इति शेष ।

'कन्या वरयते रूप माता वित्त पिता श्रुतम् ।
बान्धवा कुलमिच्छन्ति मिष्टान्नमितरे जना ॥'

इत्येतत्पद्योक्ता वरेऽन्वेषणीया सर्वे गुणा जीमूतवाहने सन्त्येव । तथाहि–
षेणाप्रतिमो युवा चेत्यनेन तत्र रूपसम्पत्तिरुक्ता । पराक्रमधन इत्युक्त्या
न्य वीरत्वोपन्यासेन वित्तमपि सूचितम् । 'वीरभोग्या वसुन्धरा' इति वचनाद् ।

---

ट है, युवा है ( सब कुछ है ) । परन्तु यह जो दया से प्रभावित होकर
सी भी प्राणी के लिये अपने प्राण तक न्यौछावर कर सकता है, इस
रण इसे अपनी बहन देते हुए मुझे प्रसन्नता और दु ख ( दोनों )
रहे हैं ॥१०॥

१ 'सन् साधौ धीरशस्तयो ' इति मेदिनी । २ 'विद्वान् ज्ञानिनि
इति धरणि । ३ 'विनीतस्तु निभृते निर्जितेन्द्रिये' इति हैम ।

श्रुतं च मया। यथा—असौ जीमूतवाहनोऽत्रैव गौर्याश्र
सम्बद्धे चन्दनलतागृहे वर्तते इति । तदेतच्चन्दनलतागृहम
यावत् प्रविशामि । [ प्रविशति ]

**विदूषकः**—[ससंभ्रममवलोक्य] भो वअस्स ! इमिणा पच्छा
देहि कदलीपत्तेण इमं चित्तगदं कम्म। एसो खु सिद्धजु
राओ मित्तावसू इह एव्व आअदो। कदाइ एसो पेक्खे।

भो वयस्य ! अनेन प्रच्छादय कदलीपत्रेणेदं चित्र
कर्म । एष खलु सिद्धयुवराजो मित्रावसुरिहैवागतः । कदाचि
देष पश्येत् ।

---

प्राज्ञ इत्यनेन श्रुतमुपक्षिप्तम् । विद्याधरराजवंशतिलक इत्यनेन वंशविशु
रुपन्यस्ता । अतो जीमूतवाहनस्याभीप्सितसर्वगुणसम्पन्नतया भगिनीपति
वरणे मित्रावसोर्निरतिशयसंतोष । परं परमकारुणिकोऽयं परहिताय व
यासौ पितरावप्युपेक्ष्यासूनपि स्वान् तृणवदुत्स्रष्टुं सर्वदैव सोत्साह । स क
चित् परोपकाराय तन्मात्रावलम्ब्य मद्भगिनीमप्युपेक्ष्य स्वप्राणान् दास्य
तीति तस्य भगिनीपतित्वेन वरणे मित्रावसोर्विषाद. । एतदेव मित्रावसोर्हर्ष
षादोभयसंमिश्र पूर्वोक्तं किमप्यवस्थान्तरम्। अत्र तुष्टिहेतूनामनेकेषा निश्चित
अतुलेति विशेषणेन तुष्टेरतुलत्वं प्रतिपादितम् । विषादस्य त्वेक एव हेतु
सोऽपि संभाव्यमान एव नतु निश्चितः, इति न तस्यातुलत्वम्। एतेन जीम
वाहनस्य नागशिशुरक्षोद्देशेन करिष्यमाण गरुडाय स्वशरीरसमर्पणमपि सू
तम् । अत्रैकस्मिन्नधिकरणे हर्षविषादयोर्विरुद्धगुणयोर्वर्णनाद् विरोध, क
भेदेन तदाभासत्वम् । तुष्टिविषादहेतूना तुष्टिविषादाभ्या क्रमेणान्वय
यथासंख्यमपि । 'यथासंख्यं क्रमेणैव क्रमिकाणा समन्वयः' इति तल्लक्षणा
प्राज्ञो विद्वानिति पुनरुक्तवदाभासश्च । शार्दूलविक्रीडितं वृत्तम् ॥१०॥

**गौर्याश्रमसम्बद्धे**=गौर्या आश्रम –आयतनम्, तेन सम्बद्धेन
पार्श्ववर्तिनीत्यर्थः ।

---

मैंने सुना भी है कि वह जीमूतवाहन यहाँ ही गौरी के मन्दिर से लगे
चन्दनकुञ्ज में है। यह चन्दनकुञ्ज है। मैं प्रवेश करता हूँ। (प्रवेश करता है

**विदूषक**—( घबराहट से देखकर ) हे मित्र ! इस केले के पत्ते से
चित्र को छिपा दे। यह सिद्धों का युवराज मित्रावसु यहीं आ पहुँचा
कदाचित् यह देख ले।

 

[ नायकः कदलीपत्रेण प्रच्छादयति ]

मित्रावसुः—[ उपसृत्य ] कुमार ! मित्रावसुः प्रणमति ।

नायकः—[ दृष्ट्वा ] मित्रावसो ! स्वागतम् । इह स्थीयताम् ।

चेटी—भट्टिदारिए ! आअदो खु एसो मित्तावसू ।

भर्तृदारिके ! आगतः खल्वेष मित्रावसुः ।

नायिका—हञ्जे ! पिअं मे । हञ्जे ! प्रियं मे ।

नायकः—मित्रावसो ! अपि कुशली सिद्धराजो विश्वावसुः ।

मित्रावसुः—कुशली तातः । तातसंदेशेनैवास्मि त्वत्सकाशमागतः ।

नायकः—किमाह तत्रभवान् ।

नायिका—सुणिस्सं दाव किं तादेण संदिट्ठं त्ति ।

श्रोष्यामि तावत् किं तातेन संदिष्टमिति ।

मित्रावसुः—इदमाह तातः—अस्ति मे दुहिता मलयवती जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य । सा मया

---

मित्रावसो इति–विश्वावसुः=मित्रावसोः पिता । तातसंदेशेनेति—य पितुर्विश्वावसो , सदेश –वाचिकम्, तेन । हेतौ तृतीया । त्वा तत्सदेशं येतुमित्यर्थ । किमिति—तत्रभवान्=पूज्य ['त्रिषु तत्रभवान् पूज्य-त्रभवानपि' इत्यमर ], माननीयेन विश्वावसुना किं संदिष्टमित्यर्थः । वितमिवेत्यादि—सकलस्यापि सिद्धराजवंशस्य प्राणवत्प्रियेत्यर्थ । जीवितसादृश्योपन्यासेन–मलयवत्या सिद्धराजवंश एककन्यात्वम्,

---

( नायक केले के पत्ते से ढाक देता है )

मित्रावसु—(पास आकर) कुमार ! मित्रावसु आपको प्रणाम करता है ।

नायक—( देखकर ) मित्रावसो ! आपका स्वागत करता हूँ । यहाँ बैठिए।

चेटी—राजकुमारी ! यह लो, मित्रावसु आ गया ।

नायिका—चेटी ! मैं बहुत प्रसन्न हुई ।

नायक—मित्रावसो ! सिद्धराज विश्वावसु कुशल तो हैं न ?

मित्रावसु—पिता जी स-कुशल हैं । उन्हीं का सदेश लेकर आप के यहाँ आया हूँ ।

नायक—माननीय महाराज ने क्या कहा है ?

नायिका—सुनूँ तो पिता जी ने क्या संदेश भेजा है ।

मित्रावसु—पिता जी ने यह कहा है—"मेरी एक मलयवती नाम

तुभ्य प्रतिपादिता, प्रतिगृह्यतामिति ।

**चेटी**—[ विहस्य ] भट्टिदारिए ! किं ण कुप्पसि दाणिं !

भर्तृदारिके ! किं न कुप्यसीदानीम् ।

**नायिका**—[ सस्पृह सलज्ज चाधोमुखी स्थित्वा ] हञ्जे ! मा तुस्स ! किं विसुमरिद दे एदस्स अण्णहिअअत्तण ।

हञ्जे ! मा तुष्य । किं विस्मृत त एतस्यान्यहृदयत्वम् ।

**नायक**—[ अपवार्य ] वयस्य ! सङ्कटे पतिता स्म ।

---

निरतिशयसौन्दर्याद्यनेकगुणरत्नत्वम्, स्वपितुस्तद्वशस्य चात्यन्तप्रियत्व द्योतितम्। **सेति**–एतादृशी कन्या **मया**=स्वयमात्मनैव, तुभ्यम्, **प्रतिपादिता**=दत्ता। एतेनास्या अवश्यस्वीकार्यत्व सूचितम् । **प्रतिगृह्यताम्**=स्वाक्रियताम्। अयाचितोपनता सर्वगुणसम्पन्ना गृहलक्ष्मीरिय नापेक्षणीयेति भाव ।

विश्वावसोर्वाचिकेन प्रसादमिवानुभवन्तीं नायिका विलोक्य विहसन्ती चेटी ता परिहासपूर्वकमाचष्टे—**किं नेति** । **इदानीं**=जीमूतवाहनाय स्वार्पण सूचकपितृसदेशश्रवणकाले । **किं न कुप्यसि**=क गतस्ते कोप ? । **हञ्जे** इति—**मा तुष्य**=नात्र तुष्टे किमपि कारण पश्यामीति भाव । मां पत्नीरूपेण स्वीकर्तुं पित्रा मित्रावसुमुखेन प्रार्थित एव स, न तु तेनाद्यापि स्वस्वीकृतिरदायि तत्स्वीकृतौ च मम सदेह एव । **किमिति**—**एतस्य**=जीमूतवाहनस्य, **अन्यहृदयत्वम्**=अन्यानुरागित्वम्, पूर्वानुभूतमिति शेष, **ते**=तव विस्मृतम्, किम् ? । **अपवार्येति**—परावृत्येत्यर्थ । मित्रावसुर्न शृणुयादिति परावर्तने हेतु । **वयस्येति**—**सङ्कटे**=कष्टे कर्तव्याकर्तव्ययो सदेह इति भाव । एकत सिद्धराजो विश्वावसुरात्मतनयामात्मनैवार्पयतीति न प्रसरति वाङ् नकारमुच्चारयितुम्। अन्यतो देवतायतनस्वप्नयो साक्षात्कृताया प्रेयस्या मम चेतो ता विहाय नान्या स्वीकर्तुमादिशतीति न शक्नोमि निश्चेतुमात्मन कर्तव्यमकर्तव्य वेति भाव ।

---

की कन्या है, जो इस सम्पूर्ण सिद्धराज वश का मानो जीवन है । उसे मैं आपको अर्पण करता हूँ, ग्रहण कीजिए" ।

**चेटी**—( हँस कर ) राजकुमारी ! अब क्यों क्रोध नहीं करती ?

**नायिका**—( स्पृहा और लज्जा से मुँह नीचा किये हुए ) चेटी ! प्रसन्न मत हो । क्या तू भूल गई है कि इसका हृदय किसी और में लगा है ?

**नायक**—(अलग एक ओर को) मित्र ! (मैं तो) सङ्कट में पड़ गया हूँ ।

विदूषकः—[ अपवार्य ] भो ! जाणामि भवदो ण तं वज्जिअ अण्णहिं चित्तं अहिरमदि त्ति । तह वि ज किञ्चि भणिअ विसज्जीअदु एसो ।

भो ! जानामि भवतो न तां वर्जयित्वान्यत्र चित्तमभिरमत इति । तथापि यत्किंचिद्भणित्वा विसृज्यतामेषः ।

नायिका—[ सरोषमात्मगतम् ] हदास ! को वा एदं ण जाणादि ।

हताश ! को वैतन्न जानाति ।

नायक.—मित्रावसो ! क इव नेच्छेद्भवद्भिः सह श्लाघ्यमिमं संबन्धम् । किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यतो निवर्तयितुम् । अतो नाहमेनां प्रतिग्रहीतुमुत्सहे ।

[ नायिका मूर्च्छां नाटयति ]

---

भो जानामीति—ताम्=देवतायतनस्वप्नसाक्षात्कृताम् । अभिरमते=अनुरज्यति । तथापीति—यत् किञ्चिद् भणित्वा=येन केनापि मिषेणेति भाव । एषः=मित्रावसु । विसृज्यताम्=त्यज्यताम्, गन्तुमनुमन्यतामिति भाव । विदूषकवचन श्रुत्वा कोपाक्रान्ता नायिका मनस्येवाह—हताशेति । हता—विनाशिता, आशा—जीमूतवाहनपाणिग्रहणरूपोऽभिलाप , ममेति शेष , येन, तत्सम्बोधने हताशेति रूपम् । हे हताश ! हे मदाशाविनाशिन् विदूषक !, एतत्=त्वया नायकाय दीयमान मदाशाविरुद्धमुपदेशम्, को वा न जानाति=त्वादृशस्य दुष्टस्यैतत् प्रायेण प्रागेव सभाव्यते स्मेति भाव । मित्रावसो इति—भवद्भि.=प्रतिष्ठितसत्कुलोत्पन्नैर्युष्माभि , सहार्थे योगे तृतीया। श्लाघ्यम्=स्तुत्यम्, इमं संबन्धम्=वैवाहिकसबन्धम् । क इवेत्यन—इवशब्दो वाक्यालङ्कारे । सर्वोऽपीच्छेदिति भाव । अन्यतः प्रवृत्तम्=एकत्र प्रथमत एव लग्नम्, चित्तम्, अन्यतो निवर्तयितुम्=अन्याभिमुखी-

---

विदूषक—( अलग एक ओर को ) भाई ! जानता हूँ कि उसके अतिरिक्त और कहीं तुम्हारा जी नहीं लगता, तो भी कुछ न कुछ कहकर इसे विदा करो।

नायिका—( क्रोध से मन में ) दुष्ट ! यह कौन नहीं जानता !

नायक—मित्रावसो ! आप के साथ इस उत्तम सम्बन्ध को कौन नहीं चाहेगा ! किन्तु एक ओर लगा हुआ चित्त दूसरी ओर नहीं मोडा जा सकता। इसलिये मैं उसे स्वीकार करने का साहस नहीं करता।

( नायिका मूर्च्छा का अभिनय करती है )

**चेटी**—समस्ससदु समस्ससदु भट्टिदारिश्रा।
समाश्वसितु समाश्वसितु भर्तृदारिका।

**विदूषकः**—भो ! पराहीणो ख्खु एसो। ता किं एदेण भणन्तेण। गुरुश्रणं से गदुश्र अब्भत्थेहि।

भोः ! पराधीनः खल्वेषः। तत् किमेतेन भणता। गुरुजनमस्य गत्वाभ्यर्थयस्व।

**मित्रावसुः**—[ आत्मगतम् ] साधूक्तम्। नायं गुरुवचनमतिक्रामति। एष गुरुजनोऽप्यस्मिन्नेव गौर्याश्रमे प्रतिवसति। तद्यावद्गत्वास्य पित्रोर्मलयवतीं प्रतिग्राहयामि।

---

**र्तुं न शक्यते**। एकस्या प्रेयस्या निरतिशयमनुरक्तस्य मे चेतसोऽन्यत्र प्रवृत्तिरसंभविनीति भाव। **एनाम्**=त्वद्भगिनीं मलयवतीम्, **प्रतिग्रहीतुम्**=उपयन्तुम्, पत्नीत्वेन स्वीकर्तुम्। विदूषको नायकस्यैवं स्पष्टं निषेधेन निष्पन्नप्रायं तस्य ( जीमूतवाहनस्य ) गार्हस्थ्यसुखप्रवेशरूपं स्वाभिलाषं जातान्तरायं मन्वान नायकोक्तमन्यथा योजयन् स्वयमेव मित्रावसुमाह—**भो** इति। **भोः**=मित्रावसो!, **एषः**=जीमूतवाहन, **पराधीनः**=स्वपित्रधीन इति यावत्। अयमभिप्राय –भो मित्रावसो! यदुक्तमनेन–अन्यत प्रवृत्तमित्यादि, तेनायमभिप्रैति यत् पितृसेवाया प्रवृत्त मे मनस्ततो निवर्तयितु न शक्यते इति। **तत् किमेतेनेति–तत्**=तस्मात्, पितृसेवापराधीनस्यास्य वचो न तथा बहु मन्तव्यम्, उपेक्षणीयम्–इति भाव.। **गुरुजनमिति–गुरुजनम्**=जीमूतकेतुमस्य पितरम्। यद्यस्य पिता जीमूतकेतुस्त्वद्भगिन्या एतेन पाणिग्रहण स्वीकुर्यात्तर्ह्ययमप्यवश्यं तामुपयच्छेदिति हृदयम्। **साधूक्तमिति**–विदूषकोक्ते साधुत्वं समर्थयते–**नायमिति**। **अयम्**=जीमूतवाहन, **गुरुवचनम्**=पित्राज्ञाम्, **नातिक्रामति**=न लङ्घते। **प्रतिग्राहयामि**=स्वीकारयामि पित्रोरिति संबन्धसामान्यषष्ठी। पित्रेति भाव॰।

---

**चेटी**—राजकुमारी! धीरज धरो, धीरज धरो।

**विदूषक**—माई! यह तो परवश है, इसलिये इसके ( ऐसा ) कहने से क्या? इसके पिता से जाकर प्रार्थना करो।

**मित्रावसु**—( मन में ) ठीक कहा। यह अपने माता-पिता का कहना नहीं टालता। इसके माता-पिता भी इसी गौरी के मन्दिर में रहते हैं। अच्छा तो जाकर इसके माता-पिता द्वारा ( इससे ) मलयवती को स्वीकार करवाऊँ।

[ नायिका समाश्वसिति ]

**मित्रावसुः**—[ प्रकाशम् ] एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाणः कुमार एव बहुतरं जानाति ।

**नायिका**—[ सरोषम् ] कहं पच्चक्खाणलहुओ मित्तावसू पुणो वि मन्तेदि ।

कथं प्रत्याख्यानलघुर्मित्रावसुः पुनरपि मन्त्रयते ।

[ निष्क्रान्तो मित्रावसुः ]

**नायिका**—[ सास्रमात्मानं पश्यन्ती ] किं मम एदिणा दोब्भग्गकलङ्कमलिणेण अच्चन्तदुक्खभाइणा अज्ज वि सरीरहदएण। जाव इह एव रत्तासोअपादवे इमाए अदिमुत्तलदाए उब्बन्धिअ अत्ताणं वावादइस्सं । ता एवं दाव । [ प्रकाशं सविलक्षस्मितम् ] हञ्जे ! पेक्ख दाव मित्तावसू दूरं गदो ण वेत्ति । जेण अहं इदो गमिस्सं ।

---

**नायिका, समाश्वसिति**=धैर्यं बध्नाति । कदाचिदभ्यर्थितोऽस्य पिता ममैतेन पाणिग्रहणं स्वीकुर्यादित्याशैव धैर्यबन्धे कारणम् । **एवमिति**–एवम्=पूर्वोक्तप्रकारेण, **निवेदितेति**–निवेदित –विज्ञापित , आत्मा–स्वात्मगताभिप्रायस्वत्कर्तृकमलयवतीस्वीकरणरूप , यैस्तथाभूतान् । अथवा निवेदित –तुभ्यमर्पित , आत्मा–आत्मवत् प्रिया मलयवती यैस्तान्स्तान् । **अस्मान्**=स्वयमुपस्थितान् सिद्धवशोत्पन्नानपि, **प्रत्याचक्षाणः**=निराकुर्वन्, **कुमार एव**=भवान् जीमूतवाहन एवेत्यर्थः । **बहुतरं जानाति**=बहुज्ञोऽस्ति । गौल्लुण्ठोक्तिरियम् । अस्मत्प्रत्याख्यानेन न भवता बहुज्ञजनोचितमाचरितम्, इति भाव । **सरोषमिति**—नायकेन मित्रावसो प्रस्तावस्य प्रत्याख्यानमेव नायिकाया रोषस्य हेतु । **प्रत्याख्यानलघुः**=प्रत्याख्यानेन–निषेधेन, लघु –तिरस्कृत इति भाव । **मन्त्रयते**=संभाषते, नायकेन सहेति शेष ।

---

( नायिका होश में आती है )

**मित्रावसु**—( प्रकट में ) इस प्रकार हमारी प्रार्थना को ठुकराते हुए कुमार स्वयं बहुज्ञ हैं ।

**नायिका**—( क्रोध से ) क्यों मित्रावसु तिरस्कृत होकर भी बातचीत कर रहा है ?

( मित्रावसु का प्रस्थान ) ·

किं ममैतेन दौर्भाग्यकलङ्कमलिनेनात्यन्तदुःखभागिनाद्यापि शरीरहतकेन। यावदिहैव रक्ताशोकपादपेऽनयातिमुक्तलतयोद्बध्यात्मानं व्यापादयिष्यामि। तदेवं तावत्। हञ्जे! पश्य तावन्मित्रावसुर्दूरं गतो न वेति। येनाहमपीतो गमिष्यामि।

**चेटी**—जं भट्टिदारिआ आणवेदि। [ कतिचित् पदानि गत्वा ] अण्णादिसं से हिअअं पेक्खामि। ता ण दाव गमिस्सं। इह एव ओवारिदा पेक्खामि किं एसा पडिवज्जदि त्ति।

यद्भर्तृदारिकाज्ञापयति। अन्यादृशमस्या हृदयं पश्यामि। तन्न तावद्गमिष्यामि। इहैवापवारिता पश्यामि किमेषा प्रतिपद्यत इति।

---

किमिति—**दौर्भाग्यकलङ्कमलिनेन**=दुर्भगाया भाव इति दौर्भाग्यम्-प्रियजनानुरागापानता ['दुर्भगा पत्युरप्रिया' इत्यमर ], तदेव कलङ्क —लाञ्छनम्, तेन, मलिनम्-मलीमस दुर्दर्शनम् तेन, **अत्यन्तदुःखभागिना**=अत्यन्तम्-निरतिशयम् दु खम्-प्रियजनानुरागाप्राप्तिजन्य क्लेश, तद्भजति-प्राप्नोति, इति तथाभूतेन, **एतेन** भाररूपेणेति भाव, **शरीरहतकेन**=कुत्सितशरीरेण ['कुत्सितानि कुत्सनै' इति कर्मधारय ], **मम**=मलयवत्या, **किम्**=किं प्रयोजन सिध्यति, न किमपीत्यर्थ। यत् खलु शरीर प्रियमावर्जयितुमेव नालम्, धिक् तच्छरीरम्, त्याज्यमेव तदिति-गूढाभिप्राय। **यावदिति—उद्बध्य**=ऊर्ध्वं कण्ठे, बद्ध्वेत्यर्थ। **अनया** लम्बमानया, **अतिमुक्तलतया**=वासन्त्या लतया [ 'अतिमुक्त पुण्ड्रक स्यात् वासन्ती माधवी लता' इत्यमर ], **व्यापादयिष्यामि**=प्राणैर्वियोजयिष्यामीत्यर्थ। **अन्यादृशमिति—अन्यादृशम्**=अन्यविधम्, **अपवारिता**=अन्तर्हिता, **प्रतिपद्यते**=करातीत्यर्थ।

---

**नायिका**—( आँसू भरकर अपनी ओर देखती हुई ) अब मेरे दुर्भाग्य-रूपी कलङ्क से कलुषित, अत्यन्त दु खी, इस निकृष्ट शरीर से क्या लाभ ? इसलिये यहीं इस रक्त अशोक के वृक्ष पर इस अति-मुक्तलता से फाँसी लेकर आत्महत्या कर लेती हूँ। अच्छा तो मैं ऐसा करती हूँ। ( प्रकट में, विस्मय-सहित मुस्कराहट के साथ ) चेटी ! जरा देखना, मित्रावसु दूर निकल गया है या नहीं, ताकि मैं भी यहाँ से चलूँ।

**चेटी**—जो राजकुमारी की आज्ञा। ( कुछ कदम चल कर ) इस का चित्त कुछ और ही तरह का देख रही हूँ, इसलिये मैं जाऊँगी तो नहीं, यहीं छिप कर देखता हूँ कि यह क्या करती है ?

**नायिका**—[ उत्थाय दिशो विलोक्य पाशं गृहीत्वा सास्रम् ] **भअवदि गोरि! इह तुए ण किदो पसादो। ता अण्णस्सिं वि दाव जम्मे जह ण ईरिसी दुक्खभाइणी होमि, तह करेहि।** [ कण्ठे पाशमर्पयति ]

भगवति गौरि! इह त्वया न कृतः प्रसादः। तदन्यस्मिन्नपि तावज्जन्मनि यथा नेदृशी दुःखभागिनी भवामि, तथा कुरु।

**चेटी**—[ दृष्ट्वा ससम्भ्रमम् ] **परित्ताअह परित्ताअह। एसा भट्टिदारिआ उब्बन्धिअ अत्ताणं वावादेदि।**

परित्रायध्वं परित्रायध्वम्। एषा भर्तृदारिकोद्बध्यात्मानं व्यापादयति।

**नायकः**—[ ससम्भ्रममुपेत्य ] **क्वासौ क्वासौ।**

**चेटी**—**इअं असोअपादवे।** इयमशोकपादपे।

**नायकः**—[ दृष्ट्वा सहर्षम् ] **कथं सैवेयमस्मन्मनोरथभूमिः।**

[ नायिका पाणौ गृहीत्वा लतापाशमाक्षिपन् ]

---

उत्थायेत्यादि—**पाशम्**=बन्धनम्। **भगवतीति**—**इह**=अस्मिन् जन्मनि। **परित्रायध्वमिति**—**उद्बध्य**=पाशेन कण्ठे बद्ध्वेत्यर्थः। **व्यापादयति**=प्राणैर्वियोजयति। **कथमिति**—**सैव**=स्वप्नादिषु साक्षात् कृता, **अस्मन्मनोरथभूमिः**=अस्माकं मनोरथस्य—अभिलाषस्य, भूमिः—आश्रयः—विषय इति यावत्। **नायिकामिति**—**लतापाशम्**=अतिमृदुलता-रूपं बन्धनम्। **आक्षिपन्**=तद्हस्ताद् आच्छिन्दन्।

---

**नायिका**—( उठकर, चारों ओर देखती हुई पाश पकड़ कर रोते हुए) भगवति गौरि! तू ने इस जन्म में तो कृपा नहीं की। किन्तु दूसरे जन्म में तो मैं इस प्रकार दुःख की भागिनी न बनूँ, ऐसी कृपा करना। (गले में फाँसी डालती है)

**चेटी**—( देखकर, घबराहट से ) बचाओ, बचाओ। राजकुमारी फाँसी लगा कर आत्महत्या कर रही है।

**नायक**—( झट से पास जाकर ) कहाँ है वह? कहाँ है वह?

**चेटी**—यह अशोकवृक्ष पर।

**नायक**—( देखकर, प्रसन्नता से ) ओहो! यह तो वही है, जिसे मेरा हृदय चाहता है। ( नायिका का हाथ पकड़ कर पाश छीनता हुआ )

न खलु न खलु मुग्धे ! साहसं कार्यमेवं
व्यपनय करमेतं पल्लवाभं लतायाः ।
कुसुममपि विचेतुं यो न मन्ये समर्थं
कलयति स कथं ते पाशमुद्बन्धनाय ॥११॥

**नायिका**—[ ससाध्वसम् ] हद्धि ! को णु खु एसो । [ नायकं निरूप्य सरोषं हस्तमाक्षेप्तुमिच्छति ] **मुञ्च मुञ्च मे अग्गहत्थं । को तुमं णिवारेदुं । मरणे वि किं तुमं एव्व अब्भत्थणीओ ।**

हा धिक् । को नु खल्वेषः । मुञ्च मुञ्च मेऽग्रहस्तम् । कस्त्वं निवारयितुम् । मरणेऽपि किं त्वमेवाभ्यर्थनीयः ।

---

**न खल्विति**—हे **मुग्धे**=बालस्वभावे सुन्दरि !, **एवम्**=पाशेन कण्ठं बद्ध्वा, **साहसम्**=सहसा आत्मव्यापादनरूपं कर्म, **न खलु न खलु, कार्यम्**=नैव कर्तव्यम्, त्वयेति शेषः । नखलुशब्दयोर्द्विरुक्तिरत्यन्तानौचित्यसूचनार्था । आत्महत्याया सुजननिन्दितत्वादिति भावः । **पल्लवाभम्**=पल्लवसदृशम्–किसलयकोमलम्, **एतम्, करम्**=अग्रहस्तम्, **लतायाः**=लतासकाशात् [ अपादाने पञ्चमी ], **अपनय**=दूरीकुरु । लतापाशं मुञ्चेत्यर्थः । **मन्ये**=अहं जाने । यत्, **यः, ते**=तव, करः, **कुसुमम् अपि**=अत्यन्तमृदुलं पुष्पमपि, **विचेतुम्**=अवचेतुम्–वृन्तात् त्रोटयितुम्, भुवि-पतितं वा सङ्ग्रहीतुम्, **न समर्थः**=न शक्तः, **सः, ते** करः **उद्बन्धनाय**=कण्ठ-मुद्बन्धुम् ['तुमर्थाच्च भाववचनात्' इत्यनेन चतुर्थी ], **पाशम्**=लतारूपं बन्धनम्, **कथम्**=केन प्रकारेण, **कलयति**=धारयति, न धारयितुं समर्थः ।

यत्र लताकुसुममपि कठोरायते तत्र लतापाशः कठोरायेतेत्यत्र किमु वक्तव्यमिति कैमुतिकन्यायेनार्थान्तरप्रतीतेः काव्यार्थापत्तिरलङ्कारः । मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकैः' इति तल्लक्षणम् ॥११॥

नायिकोक्तौ **मरणेऽपीति**—**अभ्यर्थनीयः**=प्रार्थनीयः । जीवनाय त्वद-

---

ऐ भोली ! ऐसा साहस न कर और इस किसलय के समान कोमल हाथ को लता से हटा ले । मेरे विचार में यह तुम्हारा हाथ, जो फूल चुनने में भी असमर्थ है, फाँसी लगाने के लिये पाश को कैसे पकड़े हुए है ? ॥११॥

**नायिका**—( सहम कर ) हाय ! यह कौन है ? ( नायक को देख कर क्रोध से हाथ छुड़ाना चाहती है ) छोड़ो, छोड़ो, मेरा हाथ ! तुम रोकने वाले कौन हो ? क्या मरने में भी तुम्हारी ही आज्ञा की आवश्यकता है ?

**नायकः**—नाहं मुञ्चामि ।

कण्ठे हारलतायोग्ये येन पाशस्तवार्पितः ।
गृहीतः सापराधोऽयं स कथं मुच्यते करः ॥१२॥

**विदूषकः**—भोदि ! किं पुण से मरणववसाअस्स कारणं ।
भवति ! किं पुनरस्या मरणव्यवसायस्य कारणम् ।

**चेटी**—[ साकूतम् ] णं एसो एव्व दे पिअवअस्सो ।
नन्वेष एव ते प्रियवयस्यः ।

---

पेक्षाभूदिति मित्रावसुमुखेन त्वत्प्रार्थना कृता, परं न त्वयाभ्युपगता । इदानीं मृत्युमभिकाङ्क्षन्त्यापि मया किं त्वमेव प्रार्थनीय ? अन्यनिरपेक्षे मरणे न त्वत्प्रार्थनमावश्यकमिति गूढाभिसन्धिर्नायिकाया ।

हस्तामोचनहेतुमुपन्यस्यति नायक —**कण्ठ** इति । **येन**=येन करेण, **हारलतायोग्ये**=हारलताया –मौक्तिकमालाया , योग्ये–मुक्ताहारधारणोचिते इत्यर्थ , **तव**=भवत्या , **कण्ठे**, **पाशः**=बन्धनम्, **अर्पितः**=दत्त , **सः** **सापराधः**=कृतापराध इत्यर्थ [ अपराधेन सह वर्तत इति तुल्ययोगे बहुव्रीहि , सहस्य सादेश ], **अयम्**, **करः**=हस्त , **गृहीतः**=मया धृत सन्, **कथम्**=केन हेतुनेत्यर्थ , **मुच्यते**=त्यज्यते । यथा कश्चिद् राजपुरुषोऽपराधिन निगृह्य न मुञ्चति तथैवाहमपि उद्बध्य ते प्राणान् वियोजयितुं यतमानं भापराधमिमं करं न त्यक्ष्यामीति भाव । प्रस्तुतात् वृत्तान्तादप्रस्तुतराजपुरुषापराधिवृत्तान्तप्रतीते समासोक्ति । समासोक्तिलक्षणं यथा– 'समासोक्ति परिस्फूर्ति प्रस्तुतेऽप्रस्तुतस्य चेत्' । वृत्तमनुष्टुप् ॥१२॥

**भवतीति**—**भवति**=चेट्या सम्बोधनम् । **मरणव्यवसायस्य**=मरणे–प्राणत्यागे, व्यवसाय –निश्चय , तस्य । चेट्युक्तौ **साकूतमिति**–साकूतम्–आकूतम्–अभिप्रायस्तेन सहेति, साभिप्रायमित्यर्थ । **नन्विति**–**एष** इत्यङ्गुल्या निर्देश । **एषः**=पुर स्थित , **ते**, **प्रियवयस्य एव**=प्रियमित्र जीमूतवाहन एवेत्यर्थः ।

---

**नायक**—मैं नहीं छोड़ूँगा ।

हार पहनने योग्य गले में जिसने फाँसी की रस्सी डाल दी हो, वह अपराधी हाथ पकड़ा हुआ कैसे छोड़ा जाय ? ॥१२॥

**विदूषक**—(चेटी से) श्रीमती जी ! इसके मरने के उद्योग का क्या कारण है ?

**चेटी**—(ताना मारते हुए) यही तुम्हारा प्यारा मित्र ।

**नायकः**—[ सानुशयम् ] कथमहमेवास्या मरणकारणम् । न खल्ववगच्छामि ।

**विदूषकः**—भोदि ! कहं विअ । भवति ! कथमिव ।

**चेटी**—जा सा पिअवअस्सेण दे का वि हिअअवल्लहा आलिहिदा, ताए पक्खवादिणा एदेण पडिवादअन्तस्स वि मित्तावसुणो णाहं पडिच्छिदे त्ति जादणिव्वेदाए इमाए एवं ववसिदं ।

या सा प्रियवयस्येन ते कापि हृदयवल्लभा आलिखिता, तस्यां पक्षपातिना एतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतीष्टेति जातनिर्वेदयानयैवं व्यवसितम् ।

**नायकः**—[ सहर्षमात्मगतम् ] कथमियमेवासौ विश्वावसोर्दुहिता मलयवती । अथवा, रत्नाकरादृते कुतश्चन्द्रलेखाप्रसूतिः । कष्टं, मनाग्वञ्चितोऽस्मि ।

---

**सानुशयमिति**-अनुशयः-अनुताप, तेन सहेति सानुतापमित्यर्थः । **न खल्विति**-न जानामि, कुतोऽहमस्या अस्मिन् मरणव्यवसाये निमित्तमभूवम् । **भवतीति**—**कथमिव**=कथमयं हेतुरित्यर्थः । **या सेति-कापि**=काचिदपि, अस्माभिरज्ञातपरिचया, **हृदयवल्लभा**=स्वहृदयप्रेयसी, **आलिखिता**=चित्रिता । **पक्षपातिना**=आसक्तेन, **प्रतिपादयतः**=ददत, मित्रावसो ['षष्ठी चानादरे'इत्यनादरे] स्वयं प्रतिपादयन्तं मित्रावसुमप्यनादृत्येत्यर्थः । न **प्रतीष्टा**=न स्वीकृता । **जातनिर्वेदया**=जात —उत्पन्न, निर्वेद —वैराग्यम्, यस्यास्तथाभूतया, प्रियतिरस्कृतं जीवनं व्यर्थ-

---

**नायक**—( शोक से ) क्या मैं ही इसके मरने का कारण हूँ । मैं नहीं समझता, कैसे ?

**विदूषक**—श्रीमती जी ! सो कैसे ?

**चेटी**—'वह जो तुम्हारे प्यारे मित्र ने अपनी किसी प्रियतमा का चित्र बनाया है, उसके प्रेम के कारण इसने मुझे अस्वीकार कर दिया, यद्यपि मित्रावसु स्वयं ( मुझे ) अर्पण कर रहा था' इस कारण इसे वैराग्य हो गया है और इसने ऐसा ( मरने का ) निश्चय किया है ।

**नायक**—( प्रसन्नता-पूर्वक मन में ) अच्छा, यही वह विश्वावसु की कन्या मलयवती है । अथवा ठीक है, चन्द्रकला समुद्र के अतिरिक्त और कहाँ से उत्पन्न हो सकती है ? खेद है कि मैं कुछ धोके में रहा ।

**विदूषकः**—भोदि ! जइ एवं, अणवरद्धो दाणिं पिअवअस्सो । अहव जइ ण पत्तिआअदि, सअं एव गदुअ सिलादलं पेक्खदु होदी ।

भवति ! यद्येवम्, अनपराद्ध इदानीं प्रियवयस्यः । अथवा यदि न प्रत्येति, स्वयमेव गत्वा शिलातलं पश्यतु भवती ।

**नायिका**—[ सहर्षं सलज्जं च नायकं पश्यन्ती हस्तमाक्षेप्तुमिच्छति ]
मुञ्च मुञ्च मे अग्गहत्थं । मुञ्च मुञ्च मेऽग्रहस्तम् ।

---

मिति स्वजीवने जातौदासीन्येयेति भाव , **अनया, एवम्**=कण्ठे पाशं दत्वा स्वप्राणवियोजनम्, **व्यवसितम्**=निश्चितम् । **सहर्षमिति—असौ**=मित्रावसुना मह्य प्रतिपाद्यमाना । **अथवेति–रत्नाकराद्**=रत्नानामाकरात्–समुद्रात्, **ऋते**=विना, समुद्रं परित्यज्येत्यर्थ , **चन्द्रलेखाप्रसूतिः**=चन्द्रलेखाया –चन्द्रकलाया , प्रसूति –उत्पत्ति । यथा चन्द्रलेखारूपस्य रत्नस्योत्पत्ति कौस्तुभादिसर्वरत्नानामाकरात् समुद्रादेव जाता, नान्यस्माद्, तथेदमपि कन्या रत्नं सर्वगुणाकराद् विश्वावसोरेव जातमिति नात्र संदेह । अत्र रत्नाकरविश्वावस्वोश्चन्द्रकलामलयवत्योश्च परस्पर बिम्बप्रतिबिम्बभावाद् दृष्टान्त । दृष्टान्तलक्षण यथा—'चेद् बिम्बप्रतिबिम्बत्व दृष्टान्तस्तदलङ्कृति ' । **मनाक्**=किञ्चिद्, **वञ्चितः**=विप्रलब्ध ,अज्ञानेनेति शेष । देवतायतनादिषु नैकश सा दृष्टा, मे हृदयप्रेयसीयमेव विश्वावसोर्दुहितास्तीति न मया विज्ञातम् । अतएव मित्रावसुमहं प्रत्याख्यातवान् । यदि व्यज्ञासम् , नैव प्रत्याख्यास्यमिति भाव ।

**भवतीति यदि**=चेद् , **एवम्**=या सेत्यादिना त्वदुक्त एव त्वद्भर्तृदारिकाया मरणव्यवसाये हेतु ,तर्हि, इदानीम् , **प्रियवयस्यः**=मम जीमूतवाहन , **अनपराद्धः**=अपराधरहित । [कर्तरिक्तान्तस्य नञा समास ] अनेन शिलातले त्वद्भर्तृदारिकाया एव चित्रमालिखितम्, तत्रैव चायमासक्त , सदासक्तेनैवानेन ता विश्वावसुकन्यामविज्ञाय मित्रावसु प्रत्याख्यात इति भाव । **यदीति–यदि न प्रत्येति**=यदि मदुक्त न विश्वसिषि, तर्हि, **पश्यतु**=शिलातले लिखित चित्रमिति भाव ।

---

**विदूषक**—श्रीमती ! यदि यही बात है तो अब मेरा प्यारा मित्र निर्दोष है । यदि विश्वास न हो तो आप स्वय चलकर शिलातल को देख लें ।

**नायिका**—( हर्ष और लज्जा से नायक को देखती हुई हाथ छुड़ाना चाहती है ) छोड़ो, छोड़ो, मेरा हाथ ।

**नायकः**—[ सस्मितम् ] न तावन्मुञ्चामि, यावन्मया हृदयवल्लभां शिलायामालिखितां न पश्यसि।

[ सर्वे परिक्रामन्ति ]

**विदूषकः**—[ कदलीपत्रमपनीय ] एसा से हिअअवल्लहा।
एषास्य हृदयवल्लभा।

**नायिका**—[ निरूप्यापवार्य, सस्मितम् ] चउरिए ! अहं विअ आलिहिदा।
चतुरिके ! अहमिवालिखिता।

**चेटी**—[ चित्राकृतिं नायिकां च निर्वर्ण्य ] भट्टिदारिए ! किं भणासि अहं विअ आलिहिदत्ति। एरिसं से सारिक्खं, जेण ण आणीअदि किं दाव इह मणिसिलादले भट्टिदारिआए पडिबिम्बं संकन्दं, आदु तुवं आलिहिदत्ति।

भर्तृदारिके ! किं भणसि अहमिवालिखितेति। ईदृशमस्य सादृश्यं, येन न ज्ञायते किं तावदिह मणिशिलातले भर्तृदारिकायाः प्रतिबिम्बं संक्रान्तम्, उत त्वमालिखितेति।

---

**चतुरिके** इति—**अहमिवालिखिता**=रूपेण मत्सदृश्या एवेदं चित्रमनेनालिखितमिति भावः। अथवा—इवशब्दः सम्भावनायाम्, तथा संभाव्यते यथानेनाहमालिखितेत्यभिप्रायः।

**चित्राकृतिमिति—निर्वर्ण्य**=दृष्ट्वा, चित्राकृतिनायिकाकृत्योर्दर्शनं तयोः साम्यपरीक्षार्थं। चेटी तयोरत्यन्तं साम्यं विलोक्याह—**किं भणसी**ति–न त्वत्सदृश्यालिखिता, अपि तु त्वमेवालिखितेति भावः। अथवा, किमत्र सभाननया,

---

**नायक**—( मुस्कराकर ) तब तक नहीं छोड़ूँगा जब तक तुम मेरे द्वारा शिलातल पर बनाए हुए प्रियतमा के चित्र को देख न लोगी।

( सब घूमते हैं )

**विदूषक**—( केले के पत्ते को हटाकर ) यह इसकी प्रियतमा है?

**नायिका**—( देखकर, एक ओर हटकर, मुस्कराती हुई ) चतुरिके ! मुझ जैसी का ही चित्र खींचा गया है।

**चेटी**—( चित्र तथा नायिका को देखकर ) राजकुमारी ! क्या कहती हो—मुझ जैसी का चित्र खींचा गया है? इसमें तो ऐसी समानता है कि पता नहीं लगता कि इस मणिशिला में तुम्हारी परछाईं दीख रही है या ( स्वयं ) तुम ही चित्रित की गई हो।

**नायिका**—[ विहस्य ] दुज्जणीकिदह्मि इमिणा इदं चित्तं दंसअन्तेण। दुर्जनीकृतास्म्यमुनेदं चित्रं दर्शयता।

**विदूषकः**—भो! णिव्वुत्तो दाणिं गांधव्वो विवाहो। मुञ्च दाणिं से अग्गहत्थं। एसा का वि तुरिअतुरिअं आअच्छदि।

भोः! निर्वृत्त इदानीं गान्धर्वो विवाहः। मुञ्चेदानीमस्या अग्रहस्तम्। एषा कापि त्वरितत्वरितमागच्छति।

[ नायको मुञ्चति ]

---

वस्तुत दवेवेदं चित्रं नान्यस्या इति भावः। तदेवोपपादयति—**ईदृश**मित्यादि। तव चित्रस्य च, **ईदृशम्**=इत्थंभूतम्, **सादृश्यम्**=अत्यन्तं साम्यम्, अस्ति। **येन** सादृश्येन हेतुना, न **ज्ञायते**=न निर्धार्यते, किमिदं निर्मले चन्द्रमणिशिलातले, **संक्रान्तम्**=प्रतिफलितम्, [ दर्पणे मुखप्रतिबिम्बमिव ] तव प्रतिबिम्बमस्ति, उत तव चित्रम् इति निश्चेतुं न शक्यत इति भावः।

**दुर्जनीति**—अनेन मत्प्रियेण इदं स्वलिखितं मच्चित्रं दर्शयित्वा, **दुर्जनीकृता**=दौर्जन्यं प्रापितास्मि। चित्रदर्शनात् प्रागहमबोधिषं यदयमेव (जीमूतवाहनः) सापराधो यदयं मत्पित्रा प्रतिपाद्यमानामस्मन्यनुरक्ता मां प्रतिग्रहीतुं प्रत्याख्यातवानिति। परं वस्तुतो नायमपराध्यति। अयं तु मयि नितरामनुरक्तो मद्विरहव्यथामसहमानो मां मणिशिलातल आलिख्य चित्रगतां मां पश्यन् कथंचिदात्मानं विनोदयति। चित्रदर्शनात्त्वहं जानामि यदहमेव सापराधा, यदस्मिन्निरपराधे मयि निरतिशयानुरागिणि व्यर्थं कोपमकार्षम्। निर्निमित्तक्रोधप्रकटनेनाहमेवेदानीं दुर्जना जातेति भावः।

विप्रलम्भानन्तरमेव संभोगस्य साधीयान्परिपोष इति साहित्यविदः। तदुक्तम्—न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते।
कषायिते हि वस्त्रादौ भूयान् रागो विवर्धते॥

अतो द्वितीयाङ्कादारभ्येतःपर्यन्तमभिलाषस्पृहादिदशकामदशावर्णनेन विप्रलम्भं परिपोषं प्रापय्य संभोगं वर्णयितुमुपक्रमते—**भो** इति। **निर्वृत्तः**=

---

**नायिका**—( हँस कर ) इसने मुझे चित्र दिखला कर अपराधिनी बना दिया है।

**विदूषक**—भो, अब तुम्हारा गान्धर्व विवाह हो गया। अब इनका हाथ छोड़ दो। यह कोई जल्दी-जल्दी ( इधर ) आ रही है।

( नायक हाथ छोड़ देता है )

जह—अज्ज एव मलअवदीए विवाहो । ता लहु एदं गेह्निअ आअच्छत्ति । ता एहि गच्छह्म ।

आज्ञप्तास्मि युवराजमित्रावसुना । यथा—अद्यैव मलयवत्या विवाहः । तल्लघ्वेनां गृहीत्वाऽऽगच्छेति । तदेहि गच्छावः ।

विदूषकः—गदा तुवं दासीए धीए ! एदं गह्निअ । पिअवअस्सेण उण इह एव अच्छिदव्वं ।

गता त्वं दास्याः पुत्रि ! एतां गृहीत्वा । प्रियवयस्येन पुनरत्रैवासितव्यम् ।

चेटी—हदास ! मा तुवर । तुह्माणं पि ह्णवणअं आअदं एव ।

हताश ! मा त्वरस्व । युष्माकमपि स्नपनकमागतमेव ।

[ नायिका सानुरागं सलज्जं नायकं पश्यन्ती सपरिवारा निष्क्रान्ता ]

[ नेपथ्ये वैतालिकः पठति ]

---

गतेति—परिहासोक्तिरियम् । गतेति गच्छतेरादिकर्मणि क्त, गन्तुमारब्धेत्यर्थः । 'दास्याः पुत्रि !' इत्यत्र 'षष्ठ्या आक्रोशे' इत्यनेनाक्रोशार्थे षष्ठ्या अलुक् । त्वमितो नायिकामात्मना सह नयसि । अस्मन्मित्रं पुनरिहैकाकि तां विना विमनायमानं किं करिष्यति । विवाहस्तु द्वयोरेव जायते । तत् कथमेकाकिनी मलयवत्येव नीयते, नायकमपि इति भावः । हताशेति—विदूषकेनाक्रुष्टया चेट्याऽपि हताशेति विदूषकस्य साक्रोशं सम्बोधनम् । युष्माकम्=तव मित्रस्य जीमूतवाहनस्येत्यर्थः । स्नपनकम्=[ स्नप्यतेऽनेनेति स्नपनकम् ] स्नानसाधनद्रव्यम्—उद्वर्तनादि [ स्नातेर्णिजन्ताल्ल्युटि, स्वार्थे कप्रत्यये रूपम्, 'ग्लास्नावनुवमां च' इत्यनेन मित्त्वम्, मितां ह्रस्वः ], आगतमेव=प्राप्तप्रायमेव, किमर्थमातुरीभवसीति भावः । स्नपनकं स्नानवेलेत्यपरे ।

अथ चूलिकयोद्वाहस्नानवेलां सूचयितुमुपक्रमते—नेपथ्ये इति । चूलिकालक्षणं दर्पणे यथा—'अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका' इति ।

---

विदूषक—अरी दासी की छोकरी ! तू तो इसे लेकर चल दी । और मेरा प्यारा मित्र यहाँ ही रहेगा ?

चेटी—दुष्ट ! अधीर मत हो । तुम्हारे भी स्नान की सामग्री आ गई है ।

(लज्जा और प्रेम से नायक को देखती हुई परिवार-सहित नायिका का प्रस्थान)

(नेपथ्य में वैतालिक पढ़ता है)

[ प्रविश्य ]

**चेटी**—[ सहर्षं सहसोपसृत्य ] **भट्टिदारिए ! पडिच्छिदा तुमं जीमूदवाहणस्स गुरूहिं ।**

भर्तृदारिके ! प्रतीष्टा त्वं जीमूतवाहनस्य गुरुभिः ।

**विदूषकः**—[ नृत्यन् ] **संपुण्णो मणोरहो पिअवअस्सस्स। अहव अत्तहोदीए। अहव ण पदाणं । [ भोजनमभिनयन् ] मम एव बह्मणस्स ।**

सम्पूर्णो मनोरथः प्रियवयस्यस्य। अथवात्रभवत्याः। अथवा नैतयोः । ममैव ब्राह्मणस्य ।

**चेटी**—[ नायिकामुद्दिश्य ] **आणत्तह्मि जुवराअमित्तावसुणा।**

---

सम्पन्न । **गान्धर्वः**=अष्टाना विवाहानामेकतम । कन्यावरयोरन्योन्यानुराग जन्यो विवाहो गान्धर्व इत्युच्यते । तदुक्त मनुना—

इच्छयाऽन्योन्यसयोग कन्यायाश्च वरस्य च ।
गान्धर्व स तु विज्ञेयो मैथुन्य कामसभव ॥

**प्रविश्येति**—**त्वरितत्वरिता**=अतिशीघ्रमित्यर्थ । एतेन द्वितीयस्याश्चेट्या प्रवेश सूचित । **भर्तृदारिके** इति—**प्रतीष्टा**=स्वीकृता, स्नुषात्वेनेति शेष । **गुरुभिः**=मातापितृभ्यामित्यर्थ । **सम्पूर्ण** इति—मलयवतीलाभेनेति भाव । **अथवेति**—**अत्रभवत्याः**=मलयवत्या , पतिरूपतया जीमूतवाहनस्य लाभेनेति भाव । **अथवेति**—**एतयोः**=जीमूतवाहनमलयवत्यो । **ममैवेति**—मनोरथ सम्पूर्ण इति पूर्वेणान्वय । नानाविधभोजन लाभसभावनयेति शेष ।

---

( प्रवेश करके )

**चेटी**—( प्रसन्नता से झटपट पास जाकर ) राजकुमारी ! जीमूतवाहन के माता पिता ने तुम्हें ( स्नुषारूप से ) स्वीकार कर लिया है ।

**विदूषक**—( नाचता हुआ ) प्यारे मित्र का मनोरथ पूरा हो गया। नहीं नहीं, इन ( राजकन्या ) का। अथवा दोनों का ही नहीं। ( खाने का अभिनय [illegible] हो गया) ।

[illegible] मुझे आज्ञा दी है कि [illegible] उसे ले आ' । इसलिए आओ चलें ।

जह—अज्ज एव मलअवदीए विवाहो । ता लहु एदं गेह्णिअ आअच्छत्ति । ता एहि गच्छह्म ।

आज्ञप्तास्मि युवराजमित्रावसुना । यथा—अद्यैव मलयवत्या विवाहः। तल्लघ्वेनां गृहीत्वाऽऽगच्छेति । तदेहि गच्छावः।

विदूषकः—गदा तुवं दासीए धीए ! एदं गह्णिअ । पिअवअस्सेण उण इह एव अच्चिदव्वं ।

गता त्वं दास्याः पुत्रि ! एतां गृहीत्वा । प्रियवयस्येन पुनरत्रैवासितव्यम् ।

चेटी—हदास ! मा तुवर। तुह्माणं पि ह्वणअं आअदं एव।

हताश ! मा त्वरस्व। युष्माकमपि स्नपनकमागतमेव।

[ नायिका सानुरागं सलज्जं नायकं पश्यन्ती सपरिवारा निष्क्रान्ता ]

[ नेपथ्ये वैतालिकः पठति ]

---

गतेति—परिहासोक्तिरियम् । गतेति गच्छतेरादिकर्मणि क्त, गन्तुमारब्धेत्यर्थः । 'दास्याः पुत्रि !' इत्यत्र 'षष्ठ्या आक्रोशे' इत्यनेनाक्रोशार्थे षष्ठ्या अलुक् । त्वमितो नायिकामात्मना सह नयसि । अस्मन्मित्रं पुनरिहैकाकि तां विना विमनायमानं किं करिष्यति । विवाहस्तु द्वयोरेव जायते । तत् कथमेकाकिनी मलयवत्येव नीयते, नायकमपि इति भावः । हताशेति—विदूषकेनाक्रुष्टया चेट्याऽपि हताशेति विदूषकस्य साक्रोशं सम्बोधनम् । युष्माकम्=तव मित्रस्य जीमूतवाहनस्येत्यर्थः । स्नपनकम्=[ स्नप्यतेऽनेनेति स्नपनकम् ] स्नानसाधनद्रव्यम्—उद्वर्तनादि [ स्नातेर्णिजन्ताल्ल्युटि, स्वार्थे कप्रत्यये रूपम्, 'ग्लास्नावनुवमां च' इत्यनेन मित्त्वम्, मितां ह्रस्वः ], आगतमेव=प्राप्तप्रायमेव, किमर्थमाकुलीभवसीति भावः । स्नपनकं स्नानवेलेत्यपरे ।

अथ चूलिकयोद्वाहस्नानवेलां सूचयितुमुपक्रमते—नेपथ्ये इति । चूलिकालक्षणं दर्पणे यथा—'अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका' इति ।

---

विदूषक—अरी दासी की छोकरी। तू तो इसे लेकर चल दी। और मेरा प्यारा मित्र यहाँ ही रहेगा ?

चेटी—दुष्ट ! अधीर मत हो। तुम्हारे भी स्नान की सामग्री आ गई है।

(लज्जा और प्रेम से नायक को देखती हुई परिवार-सहित नायिका का प्रस्थान)

(नेपथ्य में वैतालिक पढ़ता है)

**वृष्ट्या पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधान**
**सद्य सिन्दूरधूलीकृतदिवससमारम्भसन्ध्यातपश्री ।**

---

**वैतालिक**=स्तुतिपाठक । [ विविधेन तालेन व्यवहरतीति विग्रहे तेन व्यवहरति' इति व्यवहारार्थे ठक् ]

**वृष्टयेति**—**इह**=अस्मिन्, **मलये**=मलयाचले, **पिष्टातकस्य**=पटवासस्य [ 'पिष्टात पटवासक' इत्यमर ], **वृष्ट्या**=वर्षणेन, **मेरुतुल्याम्**=मेरुद्युतिसदृशीम्, पीतामित्यर्थ, सुमेरो स्वर्णमयत्वाद्, **द्युतिम्**=शोभाम्, **दधान**=धारयन्–सम्पादयन् [ विवाहादिमहोत्सवेषु हरिद्रादिपिष्टै पिष्टातको निर्मीयते । स च तदानां विनोदपरैर्लोकैरन्योन्य विकार्यते—इति लोकाचार । अत्रापि मलये पीतपिष्टातकचूर्णं सिद्धा अवाकिरन् । तेन तस्य मलयस्य सुमेरोरिव शोभाऽजनि—इति भाव ], **सद्य**=तत्क्षणमेव, पिष्टातकवृष्ट्यनन्तरमेवेत्यर्थ, **सिन्दूरधूलीकृतदिवससमारम्भसन्ध्यातपश्रीः**=सिन्दूरस्य, धूल्या–चूर्णेन सिन्दूरधूलिवर्षणेनेत्यर्थ, कृता–विहिता, दिवससमारम्भस्य–प्रात कालस्य, सन्ध्याया –सायकालस्य च, य आतप –घर्म, तस्य श्री –शोभा येन तादृश [ पातपिष्टातकवर्षणानन्तर रक्तसिन्दूरवर्षणेनात्र मलय उभयसन्ध्ययो शोभा समदृश्यतेति भाव ], अथवा–सिन्दूरधूल्या, कृतो दिवसारम्भेऽपि–प्रात कालेऽपि, सन्ध्यातपस्य–सध्याकालिकस्यारक्तस्य घर्मस्य, श्री, येन तादृश इति व्याख्यातव्यम् [ प्रात कालेऽपि तत्र मलये सिन्दूरवर्षणेन सध्याकालशोभा समजायतेति भाव ]। क्वचित्तु 'धूलीकृत' इत्यस्य स्थाने 'दूरीकृत' इति पाठ । सिन्दूरेण–रक्तचूर्णेन [ 'सिन्दूर रक्तचूर्णके' इति मेदिनी ], दूरीकृता–तिरस्कृता दिवसारम्भस्य–प्रात कालस्य, सन्ध्यातपस्य च श्री येन तादृश इति तदर्थ, [ तत्र मलयपर्वते पिष्टातकसिन्दूरवर्षणजनिता श्री प्रभातसायकालयो श्रियमतिशेते इत्यर्थ ], **सिद्धलोक**=सिद्धाना समुदाय, **चलचरणरणन्नूपुरह्लादहृद्यै**=चला –चञ्चला, चरणा, तेषु रणन्त –

---

पीले गुलाल ( पिष्टातक ) की वृष्टि से मलयपर्वत की शोभा को सुमेरु पर्वत के समान बनाता हुआ, सिन्दूर चूर्ण के द्वारा प्रात काल में सायकालिक धूप की शोभा को उपस्थित करने वाला सिद्ध लोक चञ्चल चरणों के बजते हुए नूपुरों की झनकार के कारण मनोहर नारियों के गीतों से आपके मनोरथ की सिद्धि के लिये विवाह मङ्गल-स्नान की सूचना दे रहा है ॥१३॥

उद्गीतैरङ्गनानां चलचरणरणन्नूपुरह्रादहृद्यै-
रुद्वाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः ॥१३॥

**विदूषकः**—[ आकर्ण्य ] भो वअस्स ! आअदं ह्वणअं ।
भो वयस्य ! आगतं स्नपनकम् ।

**नायकः**—[ सहर्षम् ] सखे ! यद्येवं, किमिदानीमिह स्थीयते । तदागच्छ । तातं नमस्कृत्य स्नानभूमिमेव गच्छावः ।

अन्योन्यदर्शनकृतः समानरूपानुरागकुलवयसाम् ।
केषांचिदेव मन्ये समागमो भवति पुण्यवताम् ॥१४॥

[ निष्क्रान्तौ ]

इति द्वितीयोऽङ्कः ।

---

ध्वनन्त , नूपुरा –मञ्जीराः [ 'मञ्जीरोऽस्त्री स नूपुरः' इति रभसः ], तेषाम्, ह्राद –शब्द , तेन हृद्यै –हृदयहारिभिः, **अङ्गनानाम्**=सिद्धयुवतीनाम्, **उद्गीतैः**=तारस्वरेणोच्चारितैर्गानैः [ करणे ], **भवतः**=जीमूतवाहनस्य, **सिद्धये**=विवाहमङ्गलसम्पत्तये, **उद्वाहस्नानवेलाम्**=उद्वाहस्य–विवाह-सम्बन्धिन , स्नानस्य–अभिषेकस्य, वेलाम्–समयम् , **कथयति**=सूचयति ।

अन्यस्य श्रियोऽन्येन धारणामभवात् सादृश्ये पर्यवसानेन निदर्शनालङ्कार । एकस्मिन्नधिकरणे प्रात सायंकालिकयोर्विरुद्धयोः श्रियोर्युगपत् प्रतिपादनाद् विरोधश्च । सादृश्यात्तु विरो धपरिहार । लौकिकाचारवर्णनात् स्वभावोक्तिरपि । अनुप्रासश्च । स्रग्धरा छन्दः । तल्लक्षण यथा–'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्' ॥१३॥

**आकर्ण्येति**—वैतालिकवाक्यमिति शेष ।

**अन्योन्येति — समानरूपानुरागकुलवयसाम्** = समानम्–

---

**विदूषक**—( सुनकर ) हे मित्र ! स्नान की सामग्री आ गई है ।

**नायक**—( प्रसन्नता-पूर्वक ) यदि ऐसी बात है तो अब यहाँ ठहरने से क्या लाभ ? आओ, पिता जी को प्रणाम करके स्नान करने के स्थान पर चलें ।

मैं समझता हूँ कि, समान रूप, प्रेम, कुल और आयु वाले विरले ही पुण्यवान् स्त्री पुरुषों का समागम एक दूसरे को देखने के अनन्तर होता है ॥१४॥

( दोनों का प्रस्थान )

तुल्यम्, अन्योन्यानुरूपमित्यर्थः, रूपम्-सौन्दर्यम्, अनुराग -परस्परप्रीति, कुलम्-वंश, वय -अवस्था च येषा तादृशानाम्, **केषांचिदेव**=विरलानामित्यर्थः, **पुण्यवताम्**=अस्मिन् पूर्वस्मिंश्च जन्मनि सुकृतं सञ्चितवताम्, यूनाम्, **अन्योन्यदर्शनकृतः**=अन्योन्ययोः, दर्शनेन-साक्षात्कारेण-तारामैत्रकेण, कृत -विहित, समागम -सयोगो भवति। इति मन्ये अप्रस्तुतसामान्यवर्णनादप्रस्तुतप्रशसा । तया चैतादृशसमागमवत्योर्जीमूतकेतुमलयवत्योः सौभाग्यातिशयो व्यज्यते । आर्यावृत्तम् ॥१४॥

इति श्रीमदच्युतानन्दतनुजन्मश्रीपरमेश्वरानन्दशर्मकृताया प्राज्ञविनोदिन्या नागानन्दव्याख्याया द्वितीयोऽङ्क समाप्त ॥२॥

# तृतीयोऽङ्कः ।

[ ततः प्रविशति मत्त उज्ज्वलवेषश्चषकहस्तो विटश्चेटश्च ]

विटः—

णिच्चं जो पियइ सुरं जणस्स पिअसङ्गमं च जो कुणइ ।

मह दे दो च्चिअ देवा बलदेवो कामदेवो अ ॥१॥

---

द्वितीयाङ्कान्ते जीमूतवाहनमलयवत्योर्विवाहोपक्षेपेण सम्भोगमुपक्रम्य कैशिक्या वृत्त्या तत्परिपोषयितुकामस्तदङ्गतया हास्यरसं किञ्चिद् वर्णयितुं सुरापानोन्मत्तं पानपात्रपाणिं विटं चेटं च प्रवेशयति—तत इति । ततः= विदूषकनायकयोर्निष्क्रमणानन्तरम् । मत्तः=सुरापानेन जातमदः, उज्ज्वलवेषः=उज्ज्वलः=रोचमानः, वेषः=परिधानं यस्य तादृशः । चषकहस्तः= चषकः=पानपात्रम्, हस्ते, यस्य सः । कैशिक्या वृत्तेर्लक्षणं नाट्यशास्त्रे यथा—

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता ।

कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति ॥

तत्र सम्भोगलक्षणं यथा दर्पणे—

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।

यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥

हास्यलक्षणं यथा—

हासमूलः समाख्यातो हास्यनामा रसो बुधैः ।

चेष्टाङ्गवेषवैकृत्याद् वाच्यो हास्यस्य चोद्भवः ॥

विटचेटौ नायकस्य शृङ्गारे सहायभूतौ पुरुषौ । तदुक्तं दर्पणे—

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।

भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥

विटलक्षणं यथा तत्रैव—

सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः ।

वेशोपचारकुशलो मधुरोऽथ बहुमतो गोष्ठ्याम् ॥

नित्यं सुरापायिनः कामासक्तस्य स्वस्य तादृशे एवेष्टदेवते निर्दिशति—नित्यमिति । यः, नित्यम्=सर्वदा, सुराम्=मदिराम्, पिबति=आस्वादयति, किं च, यः, जनस्य=विरहविधुरितस्य लोकस्य, प्रियसङ्गमम्= प्रियेण=दयितेन दयितया चेत्यर्थः, [ प्रियः प्रिया च, प्रियौ, 'पुमान् स्त्रिया'

**सफलं खु मम सेहरअस्स जीविअं,**
**वच्छत्थलम्मि दइआ दिएणुप्पलवासिआ मुहे मइरा।**
**सीसम्मि अ सेहरओ णिच्च चिअ सण्ठिआ जस्स ॥२॥**

**[ परिस्खलन् ] अरे ! को मं चालेइ । [ सहासम् ] अवस्सं णोमालिआ मं परिहसदि।**

**नित्यं यः पिबति सुरां जनस्य प्रियसङ्गमं च यः करोति ।**
**मम तौ द्वावेव देवौ बलदेवः कामदेवश्च ॥१॥**
**सफलं खलु मम शेखरकस्य जीवितम्,**
**वक्षःस्थले दयिता दत्तोत्पलवासिता मुखे मदिरा।**
**शीर्षे च शेखरको नित्यमेव संस्थिता यस्य ॥२॥**

---

इति पुंस एकशेष । ताभ्यां समागम इति विग्रह ] सगमम्-संयोगम्, **करोति**=संपादयति, **तौ**=प्रसिद्धौ, **बलदेव.**=श्रीकृष्णाग्रज , **कामदेव.**= मन्मथश्च, **द्वावेव**, नताभ्यां कश्चिदन्य , **मम**=विटस्य, **देवौ**=आराधनीयौ, स्त इति शेष । कमेणोक्तयो सुरापान-प्रियसङ्गमकर्तृत्वयो क्रमेण बलदेव कामदेवाभ्यामन्वयात् यथासंख्यालंकार । गाथा छन्द ॥१॥

**शेखरक** इति विटस्य नामधेयम् ।

विट स्वजन्मसाफल्य समर्थयत—**वक्ष स्थल** इति । **यस्य, वक्ष-स्थले**=उरसि, **दयिता**=प्रिया, **मुखे**=आनने, **नीलोत्पलवासिता**=नीलो-त्पलै -नीलकमलै , वासिता-सौरभ अर्पिता, **मदिरा**=मद्यम्, किंच **शीर्षे**= शिरसि, **शेखरकः**=पुष्परचित आपीड ['शिखास्वापीडशेखरौ' इत्यमर ], **नित्यमेव**=सर्वदैवेत्यर्थ , **संस्थिता** =सन्निहिता सन्ति, तस्य मम शेखरकस्य जीवित सफलमिति पूर्ववाक्येनान्वय. । गाथा छन्द ॥२॥

---

(तत्पश्चात् उजले कपड़े पहने, प्याला हाथ में लिये मदमत्त
विट और चेट का प्रवेश)

**विट**—मेरे तो दो ही देवता हैं—एक बलदेव जी, जो नित्य मद्य पीते हैं और दूसरे कामदेव, जो लोगों का अपने प्रेमियों से मिलाप कराते हैं ॥१॥

मुझ शेखरक का जीवन वास्तव में सफल है,

जिसके पास ये तीनों सर्वदा रहते हैं—छाती पर प्रियतमा, मुख में कमलों से सुगन्धित मदिरा और सिर पर फूलों का मुकुट ॥२॥

अरे! को मां चालयति। अवश्यं नवमालिका मां परिहसति।

चेटः—भट्टका! ण दाव आअदा णोमालिआ।

भट्टक! न तावदागता नवमालिका।

विटः—[ सरोषम् ] पढमपहरे जेव्व मलअवदीविवाहमङ्गलं णिव्वुत्तं। ता कीस इदाणिं पभादे वि ण आअच्छदि। [ सहर्षम् ] अहव इमस्सि मलअवदीए विवाहमङ्गलूसवे सव्वो एव्व णिअप्पणइणीजणसणाहो सिद्धविज्जाहरलोओ कुसुमाअरुज्जाणे आवाणसोक्खं अणुहोदि। ता तहिं एव्व णोमालिआ मं उदिक्खमाणा चिट्ठइ। ता तहिं एव्व गमिस्सं। कीदिसो णोमालिआए विणा सेहरओ। [ स्खलन् परिक्रामति ]

प्रथमप्रहर एव मलयवतीविवाहमङ्गलं निर्वृत्तम्। तत् कस्मादिदानीं प्रभातेऽपि नागच्छति। अथवा अमुष्मिन् मलयवत्या विवाहमङ्गलोत्सवे सर्व एव निजप्रणयिनीजनसनाथः सिद्धविद्याधरलोकः कुसुमाकरोद्याने आपानसौख्यमनुभवति।

---

**परिस्खलन्निति**—सुरामदकारणादिति शेषः। **प्रथमप्रहर** इति—**निर्वृत्तम्**=संजातम्। **प्रियप्रणयिनीजनसनाथः**=प्रिया:—इष्टमित्रादयः, प्रणयिनीजना:-प्रेयस्यः, तैः, सनाथ:—सहितः। **सिद्धविद्याधरलोकः**=सिद्धाश्च विद्याधराश्च, त एव लोकः सिद्धविद्याधरलोकः—सिद्धानां विद्याधराणां च समूह इत्यर्थः, अथवा तेषां लोक इति विग्रहः, अनन्तानां सिद्धानां विद्याधराणां च तत्रोत्सवे विद्यमानत्वात् अन्ये समस्तः सिद्धलोको विद्याधरलोकश्च तत्रोपस्थित इति भावः। **कुसुमाकरोद्याने**=कुसुमानाम्, आकरः—खनिः, स एव उद्यानं तस्मिन्, कुसुमाकरनाम्न्या पुष्पवाटिकायामित्यर्थः। **आपानसौख्यम्**=आपानम्—सुरापानगोष्ठी ['आपानं पानगोष्ठिका' इत्यमरः] तस्य सौख्यम्—

---

(लड़खड़ाता हुआ) अरे! मुझे कौन हिला रहा है? (हँस कर) अवश्य नवमालिका मेरे साथ ठट्ठा कर रही है।

चेट—स्वामिन्! नवमालिका तो अभी आई ही नहीं।

विट—(क्रोध से) मलयवती का विवाहोत्सव तो गत सायंकाल को ही सम्पन्न हो गया था तो क्यों वह अब तक प्रातःकाल होजाने पर भी नहीं आई? (प्रसन्नतापूर्वक) अथवा उसी मलयवती के विवाह के शुभ उत्सव में सभी

तत् तस्मिन्नेव नवमालिका मामुदीक्षमाणा तिष्ठति । तत् तस्मिन्नेव गमिष्यामि । कीदृशो नवमालिकया विना शेखरकः ।

चेट.—एदं उय्याणं । पविसदु भट्टओ ।

एतदुद्यानम् । प्रविशतु भट्टकः ।

[ उभौ प्रविशत ]

[ तत प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषक ]

विदूषक —सुदं मए पिअवअस्सो कुसुमाअरुज्जाणं गमिस्सदित्ति । ता जाव तहिं एव गमिस्सं । [ परिक्रम्य ] एद उज्जाणं, जाव पविसामि । [ प्रविश्य भ्रमरसंपात नाटयन् ] कीस उण एदे दुट्ठमहुअरा मं एव अभिद्दवन्ति । [ आत्मानमाघ्राय ] भोदु, जाणिदं मए । ज मलअवदीए बन्धुजणेण जामादुअस्स पिअ-

आनन्दम्, अपेक्षमाणा=प्रतीक्षमाणा, उदीक्षमाणेति पाठेऽपि स एवार्थ । नवमालिकेति—नवमालिकया=नवमालिकानाम्न्या मत्प्रियया, पक्षे नवया-नवनिर्मितया, मालिकया-पुष्पमालया, विना, शेखरक =शेखरकनामाह विट, पक्षे-शेखर -आपीडाख्य शिरोभूषणम् । कीदृश =अशोभन इत्यर्थ । अत्र प्रकरणेन नवमालिकाशेखरक-शब्दयोरभिधायास्तन्नामक-) व्यक्तिविशेषे नियन्त्रणेन, पुष्पमालापीडयो, ताभ्या सह नवमालिकाशेखरकयोरुपमानोपमयभावस्य च व्यञ्जनया प्रतीति । यथा पुष्पमालया विना आपीडो न शोभन, तथा नवमालिकया प्रेयस्या विना शेखरको विटोऽप्यशोभन इति भाव । तथा च शब्दशक्त्युद्भवोऽभिधामूलकोऽलङ्कारध्वनि । विनोक्तिरलङ्कार । स्कन्धन्यस्तवस्त्रयुगल =स्कन्धे-अंसे, न्यस्तम्-स्थापितम्, वस्त्रयो -वाससो, युगलम्-युग्मम, येन यस्य वा तादृश ।

सिद्ध विद्याधर लोग अपनी अपनी प्रियतमाओं के साथ कामदेव के उद्यान में मद्यपान का आनन्द ले रहे होंगे । तो नवमालिका भी वहीं मेरी प्रतीक्षा कर रही होगी । इसलिये वहीं जाता हूँ । नवमालिका के विना शेखरक किस काम का ? ( लडखडाता हुआ घूमता है )

चेट—यह उद्यान आ गया । स्वामी प्रवेश करें ।

(दोनों का प्रवेश)

(कन्धे पर वस्त्रों का जोडा लिये हुए विदूषक का प्रवेश)

वअस्सोत्ति सबहुमाणं वण्णएहिं विलित्तोह्मि। सन्ताणकुसुमसेहरं च पिणद्धं। एसो अचादरो मे अणत्थीभूदो। किं दाणिं एत्थ करिस्सं। अह्व एदेण एव मलअवदीए सआसादो लद्धेण रत्तंसुअजुअलेण इत्थिआ विअ लंबं लंबं परिहिअ उत्तरीअकिदावगुण्ठणो गमिस्सं। पेक्खामि दाव दासीएपुत्ता दुट्ठमहुअरा किं करिस्सन्ति त्ति। [ तथा करोति ]

श्रुतं मया प्रियवयस्यः कुसुमाकरोद्यानं गमिष्यतीति। तद्यावत्तत्रैव गमिष्यामि। एतदुद्यानम्, यावत्प्रविशामि। कस्मात् पुनरेते दुष्टमधुकरा मामेवाभिद्रवन्ति। भवतु, ज्ञातं मया। यन्मलयवत्या बन्धुजनेन जामातुः प्रियवयस्य इति सबहुमानं वर्णकैर्विलिप्तोऽस्मि। सन्तानकुसुमशेखरं च पिनद्धम्। एषोऽत्यादरो मेऽनर्थीभूतः। किमिदानीमत्र करिष्यामि। अथवा

श्रुतमित्यादि—**प्रियवयस्यः**=जीमूतवाहन। **भ्रमरसंपातम्**=भ्रमराणा स्वस्योपरि संपातम्–संपतनम्। **कस्मा**दिति—**मामेवाभिद्रवन्ति**=मामेवानुसरन्तीत्यर्थ। **ज्ञात**मिति—कस्माद् हेतोरिमे मधुकरा मामभिद्रवन्ति, इति मया ज्ञातमिति भाव। भ्रमरसंपातहेतुं निर्दिशति–**य**दिति—**जामातुः प्रियवयस्य इति**=मा जीमूतवाहनस्य प्रियसुहृद मत्वेत्यर्थ। **वर्णकैः**=सुरभिभी रचनद्रव्यै कुङ्कुमादिभि। **सन्तानकुसुमशेखरम्**=सन्तानस्य–देववृक्षविशेषस्य [ 'सन्तान कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' इत्यमर ], कुसुमानि, तेषाम्–तन्निर्मितमित्यर्थ, शेखरम्–शिरोभूषणम्, **पिनद्धम्**=बद्धम्, मम शिरसीति शेष। [ पिनद्धमिति–अपिपूर्वाद् नह् धातो क्तप्रत्यये रूपम्, अपिशब्दाकारस्य च–'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो' इत्यादिश्लोकवार्त्तिकेन लोप ] **एष** इति—**एषोऽत्यादरः**=सुगन्धिरचनद्रव्यैर्मम लेपनम्, शिरसि च पुष्पशेखरस्य बन्धनम्। **अनर्थीभूतः**=भ्रमरसंपातहेतुत्वाद् दुःखद इत्यर्थ। **किमिदानी**मिति—एतेभ्यो

**विदूषक**—मैंने सुना है, मेरा प्यारा मित्र कुसुमाकर नामक उद्यान में जायगा। अच्छा तो तब तक वहीं चलूँ। ( घूम कर ) यह उद्यान आ गया, प्रवेश करता हूँ। ( प्रवेश करके, भ्रमर का आक्रमण दिखाता हुआ ) ये दुष्ट भौंर मेरे ऊपर ही क्यों धावा बोल रहे हैं ? ( अपने आप को सूँघ

एतेनैव मलयवत्याः सकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीव लम्बं लम्बं परिधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि । पश्यामि तावद्दास्याःपुत्रा दुष्टमधुकराः किं करिष्यन्तीति ।

विटः—[ निरूप्य सदर्पम् ] अरे चेडअ ! [ अङ्गुल्या निर्दिश्य महासम् ] एसा खु णोमालिआ अहं चिरस्स आअदो त्ति कुविदा अवगुण्ठणं करिअ अण्णदो गच्छदि । ता कण्ठे गह्णिअ पसादेमि णं ।

अरे चेट ! एषा खलु नवमालिका अहं चिरस्यागत इति कुपितावगुण्ठनं कृत्वान्यतो गच्छति । तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम् ।

---

दुष्टमधुकरेभ्यो मोक्षस्य क उपाय कर्तव्य इति भाव । **अथवेति—रक्तांशुकयुगलेन**=रक्ते-रक्तवर्णे, अंशुके-वस्त्रे, तयोर्युगलेन युगेन । लम्बं लम्बं ( यथा स्यात् तथा ) **परिधाय**=पादपर्यन्तमात्मानमाच्छाद्येत्यर्थ । क्वचित्तु स्त्रीवेश विधायेति पाठ । **उत्तरीयकृतावगुण्ठनः**=उत्तरीयेण-उत्तरीयवस्त्रेण, कृतम्, अवगुण्ठनम्-मुखाच्छादनम् येन तादृश । **पश्यामीति—दास्याः पुत्रा** इति तिरस्कारोक्ति ।

**एषेति—चिरस्य**=विलम्ब्येत्यर्थ । **अन्यत**=अन्यस्या दिशि, कोपवशाच्च मामभ्यागच्छतीति भाव । **तदिति—कण्ठे गृहीत्वा**=आलिङ्ग्य । **प्रसादयामि**=अनुनयामीत्यर्थ ।

---

कर ) हाँ, समझ गया कि मलयवती के सम्बन्धियों ने, जमाई का प्यारा मित्र है, इसलिये आदरपूर्वक मेरे ऊपर रङ्ग मल दिया है और सन्तानक नामक देववृक्ष के फूलों का सेहरा ( मेरे सिर पर ) बाँध दिया है । यह अधिक मान मेरे लिये दु खदायी हो रहा है । तो यहाँ अब क्या करूँ ? अथवा मलयवती से मिले हुए इसी लाल जोड़े को स्त्री की भाँति लम्बा लम्बा लटकता हुआ पहन कर घूँघट से घूँघट निकाल कर चलता हूँ । देखूँ, तब यह दुष्ट मौरे क्या कुछ करते हैं ? ( वैसे ही करता है )

विट—( देखकर प्रसन्नता से ) अरे चेट ! ( अँगुली से संकेत कर के हँसता हुआ ) यह नवमालिका मेरे देर से आने के कारण रोष से घूँघट निकाल कर दूसरी ओर जा रही है, इसलिये इसे गले लगा कर प्रसन्न करता हूँ ।

[ सहसोपसृत्य कण्ठे गृहीत्वा मुखेन ताम्बूलं दातुमिच्छति ]

विदूषकः—[ मद्यगन्धं सूचयन् नासिकां गृहीत्वा पराङ्मुखः ]

अहं एक्काणं महुअराणं मुहादो कहं वि परिब्भट्ठो अण्णस्स दुट्ठमहुअरस्स मुहे पडिदो ह्मि ।

अहमेकेषां मधुकराणां मुखात् कथमपि परिभ्रष्टोऽन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि ।

विटः—कहं कोवेण परम्मुहीभूदा । [ विदूषकस्य चरणावात्मनः शिरसि कुर्वन् ] पसीद णोमालिए ! पसीद ।

कथं कोपेन पराङ्मुखीभूता । प्रसीद नवमालिके ! प्रसीद ।

[ ततः प्रविशति चेटी ]

चेटी—आणत्तह्मि भट्टिदारिआए मादाए—'हञ्जे णोमालिए ! कुसुमाअरुज्जाणं गच्छिअ उज्जाणपालिअं पल्लविअं भणाहि—अज्ज सविसेसं तमालवीहिअं सज्जीकरेहि । मलअवदीसहिदेण जामादुएण एत्थ आअन्तव्वं त्ति' । आणत्ता अ मए पल्लविआ । जाव रअणीविरहुक्कण्ठिअं पिअवल्लहं सेहरअं अण्णेसामि । [ दृष्ट्वा ] एसो सेहरओ । [ सरोषम् ] कहं अण्णं कं पि इत्थिअं पसादेदि ।

---

अहमिति—एकेषाम्=अन्येषाम् [ 'एके मुख्यान्यकेवलाः' इत्यमरः ] कथमपि परिभ्रष्टः=केनापि प्रकारेण ( स्त्रीवेषधारणेन ) मुक्तः । अन्यस्य=अन्यविधस्य, दुष्टमधुकरस्य=दुष्टस्य, मधुकरस्य-[मधु-सुरा, करे-हस्ते यस्य तादृशः ] सततसुरासेविनः, मधुकर इति विटस्यापि पर्यायान्तरमिति श्रीशिवरामः । सुरादुर्गन्धेन पराङ्मुखं स्त्रीवेषं विदूषकं कोपेन पराङ्मुखीं मत्वाह—कथमिति ।

---

( झटपट उचक कर गले लगा कर मुख से पान देना चाहता है )

विदूषक—( मद्य की दुर्गन्ध के मारे नाक दबा कर मुँह मोड लेता है ) मैं एक प्रकार के मधुकरों के मुँह से किसी भाँति छुटकारा पाकर के दूसरे दुष्ट मधुकर ( शराबी ) के चंगुल में फँस गया हूँ ।

विट—क्या कोप से मुँह मोड लिया ? ( विदूषक के पाँवों में अपना सिर रख कर ) मान जा, नवमालिके ! मान जा ।

( चेटी का प्रवेश )

आज्ञप्तास्मि भर्तृदारिकाया मात्रा—'हञ्जे नवमालिके! कुसुमाकरोद्यानं गत्वोद्यानपालिकां पल्लविकां भण—अद्य सविशेषं तमालवीथिकां सज्जीकुरु। मलयवतीसहितेन जामात्रात्रागन्तव्यमिति'। आज्ञप्ता च मया पल्लविका। यावद् रजनीविरहोत्कण्ठितं प्रियवल्लभं शेखरकमन्विच्छामि। एष शेखरकः। कथमन्यां कामपि स्त्रियं प्रसादयति।

**विटः**—

हरिहरपिदामहाणं पि गव्विदो जो ण जाणए णमिदुं।
सो सेहरओ चलणेसु तुज्झ णोमालिए! पडइ ॥३॥

---

आज्ञप्तेति—**भर्तृदारिकायाः**=मलयवत्याः। **उद्यानपालिकाम्**=उद्यानरक्षिकाम्। **पल्लविकेति**—उद्यानपालिकाया नाम। **अद्येति—सविशेषम्**=विशेषेणेत्यर्थः। **तमालवीथिकाम्**=वीथिर्मार्गः, यस्या वीथ्या उभयोः पार्श्वयोस्तमालतरुपङ्क्तिर्भवेद्—सा तमालवीथिरित्युच्यते। उभाभ्यां पार्श्वाभ्यां तमालैरावृतं मार्गमित्यर्थः। तमालतरुविरचितं गृहविशेषमित्यपरे ['वीथी पङ्क्तौ गृहाङ्गे च रूपकान्तरवर्त्मनोः' इति मेदिनी], **सज्जीकुरु**=अवकराद्यपसारणेन परिष्कुरु-इत्यर्थः। [सज्जशब्दाच्च्वौ 'सज्जीकुरु' इति रूपम्], **जामात्रा**=जीमूतवाहनेन। **अत्र**=उद्याने, तमालवीथ्यां वा। **रजनीति**—रजन्याम्-रात्रौ, विरहः-वियोगः, मम नवमालिकाया इति शेषः, तेन, उत्कण्ठितम्-जातोत्कण्ठम्। **अन्विच्छामि**=मार्गयामि। **कथमिति—अन्याम्**=मदतिरिक्ताम्, **प्रसादयति**=अनुनयति।

**हरिहरेति—गर्वितः**=[गर्वः संजातोऽस्य, तारकादिभ्य इतच्] अहङ्कारवान्, **यः**=शेखरकः, **हरिहरपितामहानामपि**=[द्वन्द्वः] विष्णु-शिव-ब्रह्मणामपि, [सम्बन्धसामान्ये षष्ठी], **नन्तुम्**=नमस्कारं

---

**चेटी**—राजकुमारी की माता ने मुझे आज्ञा दी है कि—'अरी नवमालिके! कामदेव के उद्यान में जाकर पल्लविका मालिन को कह दे कि आज तमालवीथी को विशेष रूप से सजा। मलयवती के साथ जमाई वहाँ आएंगे'। मैंने पल्लविका को आज्ञा दे दी है। मैं अब अपने रात के बिछोह से उत्कण्ठित प्रियतम शेखरक को ढूँढती हूँ। (देखकर) यह रहा शेखरक। (क्रोध से) हुँ! किसी और स्त्री को मना रहा है?

हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम् ।
स शेखरकश्चरणयोस्तव नवमालिके ! पतति ॥३॥

**विदूषकः**—दासीएपुत्त मत्तपालअ ! कुदो एत्थ णोमालिआ ।

दास्याःपुत्र मत्तपालक ! कुतोऽत्र नवमालिका ।

**चेटी**—[ निरूप्य सस्मितम् ] कहं अहं ति करिअ मदपरवसेण सेहरएण अज्जो अत्तेओ पसादीअदि । जाव अलिअकोपं करिअ दुवे वि एदे परिहसिस्सं ।

कथमहमिति कृत्वा मदपरवशेन शेखरकेण आर्य आत्रेयः प्रसाद्यते । यावदलीककोपं कृत्वा द्वावप्येतौ परिहसिष्यामि ।

**चेटः**—[ शेखरकं हस्तेन चालयन् ]

भट्टक ! मुञ्च मुञ्च । एदं ण होइ णोमालिआ । एसा णु णोमालिआ लोअलच्चेहिं णअणेहिं पेक्खन्ती आअदा ।

---

कर्तुम्, **न जानाति**=नाभ्युद्यते, नमस्कारं न करोतीति भाव । **सः**= गर्विष्टतया-प्रसिद्ध , **शेखरक**=शेखराख्योऽहं विट , **हे नवमालिके**= तव=भवत्या , **चरणयोः**=पादयो , **पतति**=त्वच्चरणावभिवन्दत इत्यर्थ. । मया हरिहरादिभ्योऽप्यधिकं सम्मान्यमानया त्वया मयि कोप सत्याज्य इति भाव' । पूर्वार्धे हरिहरादीनामनमस्कारे गर्विनत्वं हेतुरुपात्त इति पदार्थ-हेतुकं काव्यलिङ्गम् । **मत्तपालक**=मत्ताना पालक , संबोधने रूपम्, मत्तरक्षक, मत्तेषु प्रधानेत्यर्थ । क्वचित्तु 'मत्तवालक' इति पाठ ।

**कथमिति—अहमिति कृत्वा**=अह नवमालिकाऽस्मि, इति कृत्वा-बुद्ध्वा, मद्भ्रान्त्येत्यर्थ , **मदपरवशेन**=सुरापानजन्यमदपराधीनतया-मदकारणाद् अप्रविवेकेनेति भाव । **आत्रेयः**=विदूषक । **अलीककोपम्**= अलीकम्-मृषा, कोपम्-क्रोधम् । **एतौ**=विटविदूषकौ ।

---

**विट**—जो गर्व के कारण ब्रह्मा, विष्णु, महेश को भी प्रणाम करना नहीं जानता, वही शेखरक हे नवमालिके ! तेरे पाँवों पड़ रहा है ॥३॥

**विदूषक**—अरे नीच पियक्कड़ ! यहाँ नवमालिका कहाँ ?

**चेटी**—(देखकर मुस्कराती हुई) क्या नशे में चूर शेखरक आर्य आत्रेय को 'नवमालिका है' यह समझ कर मना रहा है ? तो झूठ-मूठ क्रोध करके इन दोनों की हँसी उड़ाती हूँ ।

भट्टक ! मुञ्च मुञ्च । एतन्न भवति नवमालिका । एषा खलु नवमालिका रोषरक्ताभ्यां नयनाभ्यां पश्यन्त्यागता ।

चेटी—[ उपसृत्य ] सेहरअ ! का क्खु हु एसा पसादीअदि ।
शेखरक ! का नु खल्वेषा प्रसाद्यते ।

विदूषकः—[ अवगुण्ठनमपनीय ] अहं मन्दभाआए पुत्तो ।
अहं मन्दभाग्यायाः पुत्रः ।

विटः—[विदूषकं निरूप्य] अरे कपिलमक्कडअ ! तुमं पि मं सेहरअं परिहससि। अरे चेडअ! गह्ण इमं। जाव णोमालिअं पसादेमि।

अरे कपिलमर्कटक ! त्वमपि मां शेखरकं परिहससि। अरे चेट ! गृहाणेमम् । यावन्नवमालिकां प्रसादयामि ।

चेट.—जं भट्टओ आणवेदि । यद्भट्टक आज्ञापयति ।

विटः—[ विदूषकं विमुच्य चेट्याः पादयोः पतन् ]
पसीद णोमालिए ! पसीद । प्रसीद नवमालिके ! प्रसीद ।

---

भट्टकेति—रोषरक्ताभ्याम्=रोषेण–कोपेन, रक्ताभ्याम्–ताम्रवर्णाभ्याम् । शेखरकेति—प्रसाद्यते=अनुनीयते ।

अरे इति—कपिलमर्कटक !=धूम्रवर्णवानर ! । अधिक्षेपो ह्ययम् । त्वमपि=साधारणो जन इति भाव , मां शेखरकम्=शेखरधारिणं विद्याधिपतिं राज्ञः प्रीतिपात्रम् । कथं तवेदृशः दुःसाहसमिति भाव । अरे चेटेत्यादि—यावदहं नवमालिकामनुनयामि, तावत् त्वं मे सपरिहासापराधिनमेतं गृहीत्वा तिष्ठेति भाव । चेट्याः=नवमालिकायाः इत्यर्थ ।

---

चेट—(शेखरक को हाथ से हिलाता हुआ) स्वामिन् ! छोड़ो, छोड़ो। यह नवमालिका नहीं है। नवमालिका तो यह क्रोध से आँखें लाल किये हुए आ रही है।

चेटी—(पास आकर) शेखरक ! यह किसे मना रहे हो ?

विदूषक—(घूँघट हटा कर) मन्दभागिनी के पुत्र मुझ को ।

विट—(विदूषक को देखकर) अरे पीले बन्दर ! तू भी मुझ शेखरक से ठट्ठा करता है ? अरे चेट ! पकड़ इसे, जब तक मैं नवमालिका को मना लूँ ।

चेट—जो स्वामी की आज्ञा ।

विट—(विदूषक को छोड़ चेटी के पाँवों पड़ता हुआ) मान जा, नवमालिके ! मान जा ।

विदूषकः—एसो मे अपक्कमिदुं अवसरो। [पलायितुमीहते]
एष मे अपक्रमितुमवसरः।

चेटः—[विदूषकं यज्ञोपवीते गृह्णाति। यज्ञोपवीतं त्रुट्यति]
कहिं कहिं कपिलमक्कडअ! पलाअसि।
क क कपिलमर्कटक! पलायसे।

[तदुत्तरीयेण गले बद्ध्वाकर्षति]

विदूषकः—होदि णोमालिए! पसीद। मोआवेहि मं।
भवति नवमालिके! प्रसीद। मोचय माम्।

चेटी—[विहस्य] जदि भूमिए सीसं णिवेसिअ पादेसु मे पडसि। यदि भूम्यां शीर्षं निवेश्य पादयोर्मे पतसि।

विदूषकः—[सरोषम्]
कहं राअमित्तं भविअ दासीए धीदे! पादेसु दे पडिस्सं।
कथं राजमित्रं भूत्वा दास्याःपुत्रि! पादयोस्ते पतिष्यामि।

चेटी—[अङ्गुल्या तर्जयन्ती सस्मितम्] दाणिं तुमं पाडइस्सं। सेहरअ! उट्ठेहि उट्ठेहि। एसणेण खु अहं। [कण्ठे गृह्णाति] एसो जामादुअस्स पिअवअस्सो तुए खलीकिदो। एदं सुणिअ कदाइ भट्टारओ मित्तावसू कुप्पे। ता आदरेण सम्माणेहि णं।
इदानीं त्वां पातयिष्यामि। शेखरक! उत्तिष्ठोत्तिष्ठ। प्रसन्ना

---

एष इति—अपक्रमितुम्=पलायितुम्। यदीति—अस्य वाक्यस्य, तदा त्वा मोचयिष्यामीति शेषः। अङ्गुल्येति—तर्जन्याङ्गुल्येत्यर्थः। तर्जयन्ती=भर्त्सयन्ती। इदानीमिति—पातयिष्यामीत्यस्य स्वचरणयोरिति शेषः।

---

विदूषक—यह मेरे भाग जाने का अवसर है। (दौड़ना चाहता है)

चेट—(विदूषक को यज्ञोपवीत से पकड़ लेता है। यज्ञोपवीत टूट जाता है) पीले बन्दर! कहाँ भाग रहा है? कहाँ?

(उसी के दुपट्टे से गला बाँध कर खींचता है)

विदूषक—श्रीमती नवमालिके! कृपा कर, मुझे छुड़ा दे।

चेटी—(हँस कर) अगर पृथिवी पर सिर टेक मेरे पाँवों पड़े तो।

विदूषक—(क्रोध से) अरी दासी की छोकरी! राजा का मित्र होकर क्या तेरे पाँवों पड़ूँ?

खल्वहम् । एष जामातुः प्रियवयस्यस्त्वया खलीकृतः । एतच्छ्रुत्वा कदाचिद्भट्टारको मित्रावसुः कुप्येत् । तदादरेण संमानयैनम् ।

**विटः**—जं णोमालिआ आणवेदि । [ विदूषकं कण्ठे गृहीत्वा ] अय्य ! तुमं पिअसंबन्धिअत्ति करिअ अवहासिदो । [ घूर्णयन् ] किं सच्चं एव सेहरओ मत्तो, किदो परिहासो । [ उत्तरीयं वर्तुलीकृत्यासनं ददाति ] इह उवविसदु संबन्धिओ ।

यन्नवमालिकाज्ञापयति । आर्य ! त्वं प्रियसम्बन्धिक इति कृत्वा अपहासितः । किं सत्यमेव शेखरको मत्तः, कृतः परिहासः । इहोपविशतु सम्बन्धिकः ।

---

चेट्युक्तौ एष इति—**जामातुः**=जीमूतवाहनस्येति भाव । **प्रियवयस्यः**=प्रियमित्रम्, विदूषक इति भाव । **खलीकृतः**=तिरस्कृत । **भट्टारकः**=राजा [ 'राजा भट्टारको देव' इत्यमर ] । **एनम्**=विदूषकम् । **सम्मानय**=सम्यक् मानय प्रसादयेत्यर्थ । **आर्य त्वमिति**—हे **आर्य** ! विदूषक !, त्वम्, **प्रियसम्बन्धिकः**=प्रियस्य जामातुर्जीमूतवाहनस्य, सम्बन्धिक ['सबन्धिन्' इतिशब्दात् स्वार्थे क ] मित्रमिति यावत् । अथवा जामातृपक्षायतया प्रिय सबन्धिक , इति कृत्वा—इति विचार्य, **अपहासितः**=त्वया सह हास्यं कृतम् , जामातृपक्षीये सह परिहास क्रियत एवेति न त्वया मनसि खेद करणीय । **घूर्णयन्**=अक्षिणी विस्फार्य भ्रामयन्नित्यर्थ । **किमिति**—प्रश्नकाकुरियम् नाह मत्त , इति भाव । **कृत इति**—मया तु केवलमवसरोचित परिहास कृत इति भाव । **उत्तरीयम्**=उत्तरीयवस्त्रम्, **वर्तुलीकृत्य**=[अवर्तुल वर्तुल कृत्वेति विग्रह ] विस्तृतं वस्त्र संवेष्ट्य वृत्ताकार विधायेत्यर्थ ।

---

**चेटी**—(उँगुली से धमका कर मुस्कराती हुई) अभी तुझे गिराती हूँ । शेखरक ! उठ, उठ । मैं तेरे से प्रसन्न हो गई । (गले लगा कर) जमाई के इस प्यारे मित्र को तू ने ढीठ किया है । सम्भव है, यह सुनकर भटारक मित्रावसु क्रुद्ध हो । इसलिये आदरपूर्वक इसका सम्मान कर ।

**विट**—जैसी नवमालिका की आज्ञा । (विदूषक को गले लगा कर) आर्य ! तू समधी का प्यारा है, इसलिये तेरे से उपहास किया था । (झूमता हुआ) क्या सचमुच शेखरक मदमस्त है ? केवल ठट्ठा किया था । (दुपट्टा गोल करके आसन देता है) समधी यहाँ बैठ जायें ।

**विदूषकः**—दिट्ठिआ अवगदो विअ से मदवेओ । [ उपविशति ]
दिष्ट्यापगत इवास्य मदवेगः ।

**विटः**—णोमालिए ! उवविस तुमं एदस्स पस्सदो, जेण दुवे वि तुह्मे समं सम्माणेमि ।
नवमालिके ! उपविश त्वमस्य पार्श्वतः, येन द्वावपि युवां समं सम्मानयामि ।

[ चेटी विहस्योपविशति ]

**विटः**—चेडअ ! सुपूरिदं खु एदं चसअं करेहि अच्छसुराए ।
चेटक ! सुपूरितं खल्वेतचषकं कुर्वच्छसुरया ।

[ चेटः चषकमुन्नयन् पूरणं नाट्येन करोति ]

**विटः**—[ स्वशिर·शेखरात् पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां पतित्वा नवमालिकाया उपनयन् ]
णोमालिए ! पिविअ चोक्खिअ देहि एदं ।
नवमालिके ! पीत्वा चोक्षित्वा देह्येतत् ।

---

**दिष्ट्या**=सौभाग्येनेत्यर्थः । **अपगत** इति—अस्य मदवेग —सुरापानजन्यमदप्रभाव इत्यर्थः, अपगत इव—प्रायो नष्ट·, इति प्रतीयत इति शेष· । अन्यथा कथमयमासनदानेन मां संभावयेदिति भावः । **नवमालिके** इति—**पार्श्वतः**=एकस्मिन् पार्श्वे [आद्यादित्वात् सार्वविभक्तिकस्तसि ], **द्वावपि**=विदूषकं नवमालिकां चेत्यर्थ· । **समम्**=युगपत् । **चेटकेति**—**चषकम्**=पानपात्रम् 'चषकोऽस्त्री पानपात्रम्'इत्यमर·]। **अच्छसुरया**=अच्छया—निर्मलया,सुरया—मदिरयेत्यर्थ । **चेट** इति—**उन्नयन्**=ऊर्ध्वं कुर्वन्नित्यर्थ· । **स्वशिर** इति—**उपनयन्**=समीपे नयन् । **नवमालिके** इति—**पीत्वा**=आस्वाद्य, **उच्छि**त्वा=स्वमुखगतया मदिरया सिक्तेनेत्यर्थ । अथवा—उच्छित्वा पवित्रीकृत्येत्यर्थ· ।

---

**विदूषक**—शुकर है, इस का नशा उतर-सा गया है । ( बैठ जाता है )

**विट**—नवमालिके ! तू इसके पास बैठ जा, जिस से मैं तुम दोनों का एक साथ ही सम्मान करूँ । ( चेटी हँस कर बैठ जाती है )

**विट**—चेटक ! इस प्याले को स्वच्छ मदिरा से खूब भर दे ।

( चेट प्याले को उठा कर भरने का अभिनय करता है )

**विट**—( अपने सिर के मुकुट से फूल उतार कर प्याले में डाल, घुटने टेक कर नवमालिका को देता हुआ ) नवमालिके ! इसे चख कर पवित्र करके दे ।

चेटी—[ सस्मितम् ] जं सेहरओ आणवेदि । [ तथा करोति ]
यच्छेखरक आज्ञापयति ।

विटः—[ विदूषकस्य चषकमुपनयन् ] एदं णोमालिआमुहसंसग्गवड्ढिअरसं सेहरआदो अण्णेण केण वि अणास्सादिअपुव्वं । ता पिव एदं । किं दे अदो वरं सम्माणं करेमि ।

एतन्नवमालिकामुखसंसर्गवर्धितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम् । तत् पिबैतत् । किं तेऽतः परं सम्मानं करोमि ।

विदूषकः—[सविलक्षस्मितं कृत्वा] सेहरअ ! बम्हणो खु अहं ।
शेखरक ! ब्राह्मणः खल्वहम् ।

विटः—जइ तुमं बम्हणो, कहिं दे बम्हसुत्तं ।
यदि त्वं ब्राह्मणः, क्व ते ब्रह्मसूत्रम् ।

विदूषकः—तं खु इमिणा चेडेण आअड्ढिअमाणं छिण्णं ।
तत् खल्वमुना चेटेनाकृष्यमाणं छिन्नम् ।

चेटी—[ विहस्य ] जइ एव्वं, वेदक्खराणि पि कदिइ उदाहर ।
यद्येवम्, वेदाक्षराण्यपि कतिचिदुदाहर ।

---

नवमालिकामुखेत्यादि—नवमालिकाया, मुखस्य, संसर्गेण—सम्पर्केण, वर्धित—अतिशय नीत, रस—आस्वादो यस्य तादृशम् । अनास्वादितपूर्वम्=पूर्वम्, अनास्वादितम्—अरसितम् [ सुप् सुपा समासो भूतपूर्ववत् ]। अतः परम्=नवमालिकोच्छिष्टसुरासमर्पणादन्यदित्यर्थः । विदूषकोऽपि—सविलक्षस्मितम्=साश्चर्यं स्मितपूर्वं च । शेखरकेति—'ब्राह्मणेन सुरा न पातव्या' 'ब्राह्मणो नित्य मद्य वर्जयेत्' इति निषेधात् इति भाव । ब्रह्मसूत्रम्=यज्ञोपवीतम् । छिन्नम्=त्रुटितम् । यद्येवम् इति—यद्येवम्=यदि ते ब्रह्मसूत्रं

---

चेटी—(मुस्करा कर) जैसी शेखरक की आज्ञा । (वैसे करती है)

विट—(विदूषक को प्याला देता हुआ) यह नवमालिका के मुख के सम्पर्क से अधिक रसीला प्याला शेखरक के अतिरिक्त आज तक पहले किसी ने नहीं पिया । इसलिये इसे पी ले । इससे बढ़कर तेरा सम्मान क्या करूँ ?

विदूषक—(घबराहट से मुस्करा कर) शेखरक ! मैं तो ब्राह्मण हूँ ।

विट—यदि तू ब्राह्मण है तो कहाँ है तेरा यज्ञोपवीत ?

विदूषक—वह इस चेट के खींचने से टूट गया ।

चेटी—(हँस कर) यदि ऐसे है तो कुछ वेदवाणी ही सुना दे ।

**विदूषकः**—भोदि ! सीहुगन्धेण मे वेदक्खराणि णट्ठाणि । अहव, किं मम भोदीए समं विवादेण । एसो बम्हणो पादेसु दे पडइ ।

भवति ! सीधुगन्धेन मम वेदाक्षराणि नष्टानि । अथवा, किं मम भवत्या समं विवादेन । एष ब्राह्मणः पादयोस्ते पतति ।

[ पादयोः पतितुमिच्छति ]

**चेटी**—[ विहस्य हस्ताभ्यां निवार्य ] अय्य ! मा मा एव्वं करेहि । सेहरअ ! सच्चं बम्हणो खु एसो । [ विदूषकस्य पादयोः पतति ] अय्य ! तुए ण कुविदव्वं । संबन्धिआणुरूवो परिहासो किदो । सेहरअ ! तुमं पि इमं पसादेहि ।

आर्य ! मा मैवं कुरु । शेखरक ! सत्यं ब्राह्मणः खल्वेषः । आर्य ! त्वया न कोपितव्यम् । सम्बन्धिकानुरूपः परिहासः कृतः । शेखरक ! त्वमपीमं प्रसादय ।

---

नुदितम् । **वेदाक्षराण्यपि**=अपिशब्द एवार्थे, वेदमन्त्रानेवेति भाव । उदाहर=उच्चारय ।

**भवतीति-सीधुगन्धेन**=सीधो -सुराया , गन्ध -दुर्गन्ध इत्यर्थ , तेन । **नष्टानि**=लुप्तानीत्यर्थ । सुरादुर्गन्ध सोढुमशक्नुवन्त इव अलक्षिता मे वेदमन्त्रा जाता , तच्च शक्नोम्यहमुच्चारयितुम् इति भाव । **अथवेति**—भवत्या सहेत्यमुक्तिप्रत्युक्तिपरम्परया न किमपि प्रयोजन सिध्यतीति भाव । **एष इति**—ब्राह्मणोऽप्यहं ते चरणयो पतामि, परं सुरापान आग्रह मा कार्षीरिति भाव । चेट्युक्तौ **विहस्येति**—चेट्या विदूषक प्रति पूर्वं प्रतिज्ञातमभूद् यदहं त्वा स्वचरणयो पातयिष्यामि, इदानीं तस्य स्वचरणयो पतन विलोक्य तस्या दर्प सजात , स एव तस्या हासस्य हेतु । **हस्ताभ्यां निवार्य**= पादयो पतन्त विदूषक हस्ताभ्या पादपतनाद् वारयित्वेत्यर्थ । पादयो. पततीत्यस्य चेटीति शेष । **आर्येति—न कोपितव्यम्**=कोपो न कर्तव्य

---

**विदूषक**—देवि ! मद्य की दुर्गन्ध से मेरी वेदवाणी लोप हो गई है । अथवा, आप से विवाद करने से मुझे क्या लाभ ? यह लो, मैं ब्राह्मण आपके पाँव पड़ता हूँ । ( पाँवों पर गिरना चाहता है )

**चेटी**—(हँसकर हाथों से परे हटाती हुई) आर्य ! ऐसा मत करो । शेखरक ! यह सचमुच ब्राह्मण ही है । ( विदूषक के पाँवों पड़ती है ) आर्य ! आप क्रुद्ध न हों । समधी के योग्य ही मैंने ठट्ठा किया है । शेखरक ! तू भी इसे मना ले ।

विटः—अहं पि इमं पसादेमि । [ विदूषकस्य पादयोर्निपत्य ] मरिसेदु मरिसेदु अय्यो, जं मए मदपरवसेण अवरद्धं । जेण अहं णोमालिआए सह आपाणअं गमिस्सं ।

अहमपीमं प्रसादयामि । मर्षयतु मर्षयत्वार्यः, यन्मया मदपरवशेनापराद्धम् । येनाहं नवमालिकया सहापानकं गमिष्यामि ।

विदूषक.—मरिसिदं मए । गच्छ । जाव अहं पि वअस्सं पेक्खामि । मर्षितं मया । गच्छ । यावदहमपि वयस्य पश्यामि ।

विटः—अय्य ! तह । आर्य ! तथा ।

[ निष्क्रान्तो नवमालिकया विटश्चेटश्च ]

विदूषकः—अदिक्कन्दो खु बम्हणस्स अआलमिच्चू । ता अहं पि मत्तवालअजणसंसग्गदूसिदो इह दिग्घिआअ ह्लाइस्सं । [ तथा करोति । पुरोऽवलोक्य ] एसो खु पिअवअस्सो रूविणिं विअ वरलच्छि मलअवदिं ओलम्बिअ इदो एव्व आअच्छदि । ता इह एव्व चिट्ठिस्सं । [ स्थित ]

---

इत्यर्थ । सम्बन्धिकानुरूप.=सम्बन्धियोग्य ।

इमम्=विदूषकम् । मर्षयतु=क्षमताम्, भवानिति शेष । अपराद्धम्=अपराध कृत । येनेति—यदा त्व ममापराध क्षस्यसे तदाहं नवमालिकया सह, आपानकम्=[ आ समन्तात् पान यत्र तत् ] सुरापानभूमिम्, गमिष्यामीति भाव । मर्षितम्=क्षान्तम् । आर्येति—तथेत्यस्त्वास्तु-इति शेष । भवान् स्वप्रियवयस्य पश्यतु । अहं पुनर्नवमालिकया पानभूमिं गन्छामीति भाव ।

---

विट—मैं भी इसे मना लेता हूँ। ( विदूषक के पाँवों पर गिर कर ) आर्य ! क्योंकि मैंने मद्य की मस्ती में अपराध किया है, इसलिये मुझे क्षमा करो, क्षमा करो। ताकि मैं नवमालिका के साथ आपानक (मद्य पीने के स्थान ) का जाऊँ।

विदूषक—मैं ने क्षमा कर दिया। जा, जब तक मैं भी अपने मित्र को मिलता हूँ।

विट—आर्य ! बहुत अच्छा।

( नवमालिका के साथ विट और चेट चले जाते हैं )

विदूषक—ब्राह्मण की अकाल-मृत्यु तो टल गई। शराबी युवकों के संसर्ग म दूषित हुआ मैं अब इस जलाशय में नहा लेता हूँ। (वैसे

अतिक्रान्तः खलु ब्राह्मणस्याकालमृत्युः । तदहमपि मत्त-बालकजनसंसर्गदूषित इह दीर्घिकायां स्नास्यामि । एष खलु प्रियवयस्यो रूपिणीमिव वरलक्ष्मीं मलयवतीमवलम्ब्येत एवागच्छति । तदिहैव स्थास्यामि ।

[ ततः प्रविशति नायको मलयवत्या विभवतश्च परिवारः ]

**नायकः**—दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।

---

'**अतिक्रान्त** इति—**ब्राह्मणस्य**=मे विदूषकस्येत्यर्थः, **अकालमृत्युः**=[ अकाल मृत्यु ] समयात् प्रागेव मरणम्, **अतिक्रान्तः**=अपगत । सुरापान सुरापै संगत च ब्राह्मणस्य कृते महापातकमुक्तं शास्त्रकृद्भि । यद्यहं ब्राह्मण· सन् सुरामपास्यम्, सुरापैर्विटचेटादिभिश्च चिरमवत्स्य तर्हि महापातकं मेऽजनिष्यत तच्चापकीर्तिजनकत्वाद् जीवतोऽपि मे मृत्युतुल्यमभविष्यत् । तदुक्तमभियुक्तै —'संभावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति । सुरापानात् सुरापसङ्गतेश्च मुक्तोऽहं यत् सत्यमपमृत्योरेव मुक्त इति भाव । **तदिति**—**मत्तबालके**त्यादि—मत्त –सुरापानेन संजातमद·, बालक जन –बालकवत् कृत्याकृत्यविवेकरहितो जन , तस्य, संसर्गेण–सम्पर्केण, दूषित –सजातप्रत्यवाय , **इह**=अस्याम्, **दीर्घिकायाम्**=सरसि । **एष** इति–एष =पुरोदृश्यमान , **प्रियवयस्यः**=जीमूतवाहन , **रूपिणीम्**=आकृतिधारिणीम्, इवशब्दो भिन्नक्रम, **वरलक्ष्मीमिव**=वरस्य–स्वस्य जीमूतवाहनस्य, लक्ष्माम्–शोभामिव, अथवा वरा चासौ लक्ष्मीस्तमिव–श्रेष्ठशोभामिव, स्थिताम्, **अवलम्ब्य**=हस्ते गृहीत्वा, **इत एव**=अस्यामेव दिशि । रूपिणीमिवेत्युत्प्रेक्षा । क्वचित्तु रुक्मिणीमिव हरिरिति पाठ । हरि =हरेरवतार श्रीकृष्ण । तत्रोपमालङ्कार· । अथ पूर्वसूचितौ जीमूतवाहन सपरिवारा मलयवतीं च प्रवेशयति—**तत** इति । **विभवतः**=ऐश्वर्यानुरूप इत्यर्थ ।

अथ कविर्नायकनिष्ठं सभोगं वर्णयितुकामस्तन्मुखेन नवपरिणीता नायिका वर्णयति—**दृष्टेति** । **अद्य**=अस्मिन् दिने, **नवोढा**=[नवा चासौ–ऊढा चेति

---

करता है, सामने देखकर) यह मेरा प्यारा मित्र साक्षात् लक्ष्मी रूपिणी मलयवती को लिये इधर ही आ रहा है। इसलिये, यहीं ठहरता हूँ। (ठहरता है)

(नायक, मलयवती और पदानुसार परिजनों का प्रवेश)

**नायक**—सामने देखने पर आँखे नीचे कर लेती है, बोलने पर बोलती

निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥४॥

[ मलयवतीमवलोक्य ] **प्रिये मलयवति !**

हुंकारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद्वा वानलदीप्तिभिस्तनुरियं चन्द्रातपैस्तापिता ।

---

कर्मधारय , ऊढेति वहते क्त ] नवपरिणीता, **प्रिया**=दयिता, मलयवती, **वामतयैव**=प्रतिकूलतयैव, रताविति शेष , **मे**=मम जीमूतवाहनस्य, **सुतराम्**=नितराम् [ सु-इत्यव्ययात् तरप् , तत आम् ], **प्रीत्यै**=परितोषाय, **जाता**=अभूदित्यर्थ । अथ वामता प्रतिपादयति-**दृष्टा**=सम्मुखमवलोकिता, सती, **दृष्टिम्**=चक्षु', **अधः**=नीचै , **ददाति**=करोतीत्यर्थ , अथ पश्यति, दृष्टिं न मिश्रयतीति भाव । **आभाषिता**=सल्पितापि, सती, **आलापम्**=सभाषणम् , **न कुरुते**=न विधत्ते, प्रत्युत्तरं न ददाति, मौनमाश्रयतीति भाव । **शय्यायाम्**=तल्पे, **परिवृत्य**=पृष्ठं दत्त्वा पराङ्मुखीभूय, **तिष्ठति**=वर्तते, **बलात्**=प्रसह्य, **आलिङ्गिता**=आश्लिष्टा सती, **वेपते**=कम्पते, दूरं तु प्रत्यालिङ्गनम् , **सखीषु**=स्वसहचरीषु, **वासभवनात्**=शयनागारात् , **निर्यान्तीषु**=बहिर्गच्छन्तीषु सतीषु स्वयमपि, **निर्गन्तुमेव**=बहिर्निर्यातुमेव, **ईहते**=चेष्टते । अधोदर्शनादिषु सर्वत्र लज्जैव हेतु । अत्र नायकनिष्ठा नायिकाविषयिणी रति प्राधान्येन व्यज्यते । तत्र मुग्धा नायिका मलयवत्यालम्बनम् , शय्यावस्थानालिङ्गनादिनाचित रह स्थानमुद्दीपनम्, दर्शनसभाषणादयोऽनुभावा ,उत्कण्ठादयो व्यभिचारिण । नवोढाप्रकृतिवर्णनात् स्वभावोक्ति । वामतयापि प्रीतिरिति विरोध । अनेकासां दानादिक्रियाणां प्रियेत्येकेन कर्तृकारकेणान्वयाद् दीपकञ्च । शार्दूलविक्रीडितं वृत्तम् ॥४॥

अथ नायकश्चाटूक्तिभिर्नायिकामनुकूलयति-**प्रिये मलयवतीति** । **हुंकारमिति**—हे **प्रिये**=हे दयिते मलयवति, त्वद्विरहे, **मया**=जीमूत-

---

नहीं, पलग पर मुँह मोड कर बैठती है, जोराजोरी छाती से लगाने से काँपती है और शयनागार से सखियों के बाहर जाने पर साथ ही जाना चाहती है। आज यह नई बहू इस प्रकार विरोध करती हुई भी मुझे अत्यन्त आनन्ददायिनी लग रही है ॥४॥

(मलयवती की ओर देखकर) प्यारी मलयवति !

जो मैंने केवल हुंकारमात्र से उत्तर देते हुए मौन धारण किये रक्खा, जो मैंने यह अपना शरीर चन्द्रमा की ज्वाला की ज्वाला की चाँदनी धूप से तापा,

ध्यातं यच्च बहून्यनन्यमनसा नक्तंदिनानि प्रिये
तस्यैतत्तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥५॥

---

वादनेन, **हुङ्कारम्**=हुङ्कारमात्रम् [हुमिति स्वीकृतिसूचकमव्ययम्। तदुक्तम्—'हुमित्येतन्द्रूपवतामङ्गाकारानुकरणम्' इति विश्वः], **प्रतिवचः**=प्रत्युत्तरम्, **ददता**=प्रयच्छता सता, यद्, **मौनम्**=अभाषणम् वाचो नियमनम्, **आसेवितम्**=आश्रितम्। **दावानलदीप्तिभिः**=[दावश्चासावनलः, तस्य दीप्तिरिव दीप्तिर्येषां तादृशैः] दावानलः—वनाग्निः, तद्वद् ज्वलद्भिः, **चन्द्रातपैः**=चन्द्रकिरणैः, यद्, **इयम्**, **तनुः**=शरीरम्, **तापिता**=क्लेशिता [चन्द्रातपा उद्दीपकत्वाद् विरहिणो ज्वलयन्तीवेति निरार्ग], किं च **बहूनि**=अपरिगणितानि, **नक्तन्दिनानि**=नक्तम्—रात्री, दिनानि—अहानि च यावत् [अत्यन्तसंयोगे द्वितीया], **अनन्यमनसा**=[अन्यगतं मनोऽन्यमनः, शाकपार्थिवादित्वान्मध्यमपदलोपः, अथवा, अन्यस्मिन् मनोऽन्यमनः, न अन्यमनोऽनन्यमनः, तेन] त्वन्मात्रसलग्नेन चेतसा, **यद्**, **ध्यातम्**=तव चिन्तनं कृतम्, **तस्य**=चिरमनुष्ठितस्य, **तपसः**=मौनाश्रितपनध्यानरूपस्य, **फलम्**=परिणामः, **एतद्**, अस्ति, **यद्**, **अधुना**=अस्मिन् काले, **इदम्**=अपूर्वशोभं मदन्तिकमुपस्थितम्, **ते**=तव मलयवत्याः, **मुखम्**=आननम्, **पश्यामि**=साक्षात्करोमि।

यथा परब्रह्म साक्षात्कर्तुमिच्छवो योगिनो मौन—पञ्चाग्नितपन—निरन्तरैकतानध्यानरूपं तपः आचरन्ति, तपःपरिपाके च ब्रह्मसाक्षात्काररूपं फलमधिगच्छन्ति, तथैव हे प्रेयसि! मयापि त्वन्मुखसाक्षात्काराय तपस्तप्तम्। तथाहि—त्वद्विरहे मौनमाश्रितम्, न केनचिद् भाषितम्, साग्रहमाभाषितेनापि हुङ्कारमात्रमुच्चरितम्, इदं शरीरमग्निकल्पैश्चन्द्रकिरणैरभितापितम्, अहर्दिवं निरन्तरैकतानमनसा त्वद्रूपमपि चिन्तितम्, तस्यैव—मौनादितपसः फलमिदं यदद्य त्वन्मुखसाक्षात्कारः क्रियत इति भावः। तपःफलरूपताप्रतिपादनेन नायिकाया नायकस्यानुरागातिशयो व्यज्यते। विशेषणसाम्यात् तपस्विवृत्तान्तप्रतीतेः समासोक्तिः। नायिकादर्शनस्य तपःफलत्वेन संभावनात्प्रतीयमानोत्प्रेक्षा। विरहजनितमौनादिषु तपस्त्वरूपणाद् रूपकम्, तच्चोत्प्रेक्षायामङ्गतां गतम्। वृत्तं शार्दूलविक्रीडितम् ॥५॥

---

और जो मैंने चिरकाल तक रात दिन अनन्य मन से (तेरा) ध्यान किया, हे प्रिये! यह उसी तपस्या का फल है कि अब मैं तेरा यह मुख निहार रहा हूँ ॥५॥

**नायिका**—[ अपवार्य ] हञ्जे ! ण केवलं दंसणीओ, पिअं पि भणिदुं जाणादि ।

हञ्जे ! न केवलं दर्शनीयः प्रियमपि भणितुं जानाति ।

**चेटी**—[ विहस्य ] अइ पडिपक्खवादिणि ! सच्चं एव एदं । किं एत्थ पिअवअणं ।

अयि प्रतिपक्षवादिनि ! सत्यमेवैतत् । किमत्र प्रियवचनम् ।

**नायकः**—चतुरिके ! आदेशय कुसुमाकरोद्यानस्य मार्गम् ।

**चेटी**—एदु एदु भट्टिदारओ । एत्वेतु भर्तृदारकः ।

**नायकः**—[ परिक्रामन् नायिकां निर्दिश्य ] स्वैरं स्वैरम् आगच्छतु भवती ।

---

नायकोक्तामात्मन स्तुतिमाकर्ण्य प्रसन्ना नायिका स्वचेटीमाह—हञ्जे इति । जानामात्यस्य मे प्रियो जीमूतवाहन इति शेष । चाटूक्तिनिपुण इति भाव ।

नायिकोक्तनाक्षेपमुद्रया समर्थयमाना चेटी विहस्याह—**अयीति** । **प्रतिपक्षवादिनि**=प्रतिकूलवचनशाले, भूतार्थवादस्यापि स्तुतिपरत्वप्रतिपादन मेवात्र प्रतिपक्षवादित्वम् । **एतत्**=नायकोक्तम्, **सत्यमेव**=भूतार्थवाद एव, वस्तुतस्तव सुखसाक्षात्कारो नातपस्विनो भवितुमर्हति । **किमिति**—**अत्र, प्रियवचनम्**=स्तुति , **किम्** , न किमपात्यर्थ । अय भाव — सर्वसुन्दरातिशायित्वन्मुखसाक्षात्कारस्य नैकतप फलरूपता प्रतिपादयता नायकेन न ते काचन स्तुति कृता, प्रत्युत भूतार्थ एवोपन्यस्त । नात्र प्रसक्ते किमपि कारण वेद्मि । क्वचित्तु प्राकृते 'अदिपक्खवादिणि' इति पाठ । तस्य 'अतिपक्षपातिनि' इति संस्कृतम् । त्व नायके निरतिशयानुरागवत्यसि, अतएव तत्कृत भूतार्थवादमपि स्तुति मनुषे—इति तद्गूढाभिप्राय । **चतुरिके** इति—**आदेशय**=बोधय । **एतु**=आगच्छतु [आङ्पूर्वस्येणधातोर्लोटि रूपम्] । **स्वैर**मिति—**स्वैरं स्वैरम्**=मन्द मन्दम् ['मन्दस्वच्छन्दयो स्वैरम्'इत्यमर ] ।

---

**नायिका**—(एक ओर होकर) यह केवल सुन्दर ही नहीं किन्तु मीठा बोलना भी जानता है ।

**चेटी**—हे प्रतिकूल बोलने वाली ! यह तो सब कुछ सत्य ही है । इसमें प्रियवचन की भला कौन सी बात है ?

**नायक**—चतुरिके ! कुसुमाकर उद्यान का रास्ता बता ।

**चेटी**—राजकुमार ! आइए, पधारिए ।

**नायक**—(घूमकर नायिका को निर्देश करके) आप जरा धीरे धीरे आइए ।

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपर-
स्ताम्यत्यूरुयुग नितम्बभरत काञ्च्यानया किं पुन ।
शक्ति पादयुगस्य नोरुयुगल वोढु कुतो नूपुरे
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय कि मण्डनम् ॥६॥

**खेदायेति—स्तनभार एव**=स्तनयो –कुचयो , भार –गुरुत्वमेव [एव शब्दोऽत्र केवलार्थे, केवल कुचयोर्भार –इत्यर्थ ], **ते**=तव सुकुमार्या मलय वत्या , **मध्यस्य**=वलग्नस्य–शरीरमध्यभागस्य, **खेदाय**=श्रान्तये, भवतीति शेष , **अपरः**=तदुपरि धृत इतरो भार , **हार** =मौक्तिकस्रक , खेदाय भवेदित्यत्र, **किमु**=किं वक्तव्यमित्यर्थ , ततोऽप्यधिक खेद जनयेदिति भाव । [एतेन कुचया स्थौल्य मध्यस्य च कार्श्य व्यज्यते], **ऊरुयुगम्**=ऊर्वो सक्थ्नो जानूपरिभागयो , युगम्–युगलम् [कर्तृ], **नितम्बभरत** =नितम्बस्य–कटिपश्चाद्भागस्य, भरत -भारादेव, **ताम्यति**=ग्लायति, नितम्बोपरि लम्बमानया, **अनया**=प्रत्यक्ष दृश्यमानया स्वर्णघटितया, **काञ्च्या**=मेखलया, ताम्येदित्यत्र, **किं पुनः**=किं वक्तव्यमित्यर्थ , ततोऽप्यधिक ताम्येदिति भाव [एतेन नितम्बभागस्य परिपूर्णत्व व्यज्यते], **ऊरुयुगलम्**=सक्थिद्वयमेव, **वोढुम्**=धारयितुम्, **पादयुगस्य**=चरणद्वयस्य, **शक्ति** = सामर्थ्यम्, **न**=नास्तीत्यर्थ , तदुपरि धृते, **नूपुरे**=मञ्जीरे ['मञ्जीरोऽस्त्री स नूपुर –'इति रमस ], वोढुम्, शक्ति , **कुतः**=कुत स्यादित्यर्थ । [एतेन चरणद्वयस्य मार्दवातिशयो व्यज्यते], हे प्रिये !, त्वम्, **स्वाङ्गै** =स्वशरीरावयवैरेव, **विभूषिता**=विशिष्यालङ्कृता, **असि**=भवसि, **मण्डनम्**=हाराद्यलङ्करणम्, **क्लेशाय**=शरीरखेदमात्रप्रयोजनाय, **किम्**=किमर्थम्, **वहसि**=धारयसि । निसर्गसुन्दरे स्वावयवैरेव शोभातिशय दधानायास्तव मौक्तिकहारादिधारणस्याधिकखेदातिरिक्त न किमपि प्रयोजनमिति भाव । अत्र स्तनाद्यवयवाना यथोचितस्थौल्यकार्श्यादिव्यञ्जनमुखेन नितम्बादध प्रदेशस्य गोपुच्छवत्स्थौल्यतारतम्यबोधनेन च नायिकाया सौन्दर्यातिशयो व्यज्यते । काव्यार्थापत्तिरलङ्कार । शार्दूलविक्रीडित वृत्तम् ॥६॥

यह स्तनों का बोझ ही तेरी कमर को लचका देने के लिये पर्याप्त है, फिर यह हार क्यों पहन रक्खा है? तेरी जाँघें तो नितम्ब के भार से ही दबी जा रही हैं, फिर यह करधनी क्यों ? तेरे पाँव तो जाँघों का भी उठाने को समर्थ नहीं हैं, फिर (उन पर) यह पायजेब क्यों लाद रक्खे हैं ? तू तो स्वयं अपने अङ्गों से ही सुशोभित है, फिर यह गहने क्यों व्यर्थ कष्ट भोगने के लिये पहन रक्खे हैं ? ॥६॥

**चेटी**—एदं कुसुमाअरुय्याणं। पविसदु भट्टिदारओ।
एतत् कुसुमाकरोद्यानम्। प्रविशतु भर्तृदारकः।

[ सर्वे प्रविशन्ति ]

**नायक**—[प्रविश्य] अहो! कुसुमाकरोद्यानस्य श्रीः। इह हि,

निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपे कुट्टिमान्ता-
नाराद्धारागृहाणां ध्वनिमनु कुरुते ताण्डवं नीलकण्ठः।
यन्त्रोन्मुक्तश्च वेगाच्चलति विटपिनां पूरयन्नालवाला-
नापातोत्पीडहेलाहृतकुसुमरजःपिञ्जरोऽयं जलौघः ॥७॥

---

**अहो**=आश्चर्यकरात्यर्थः। कुसुमाकरोद्यानस्य श्रियं वर्णयति–**इह हीति**। **निष्यन्द** इति—पूर्वोक्तम् 'इह हि' इति पदद्वयं पद्यान्वयि। **इह हि**=अस्मिन् कुसुमाकरोद्याने हि, **चन्दनानाम्**=चन्दनवृक्षाणाम्, **निष्यन्दः**=रसनिर्झरः, **लतामण्डपे**=लताभिर्निर्मिते मण्डपे–लतामण्डपस्थानित्यर्थः, **कुट्टिमान्तान्**=कुट्टिम–बद्धा भूमिः ['कुट्टिमोऽस्त्री निबद्धा भूः–' इति रामाश्रमी], तस्य अन्तान्–प्रान्तप्रदेशान्, **शिशिरयति**=शिशिरं करोति–शीतलं करोतीत्यर्थः। क्वचित्तु 'लतामण्डपं कुट्टिमानाम्' इति पाठः। कुट्टिमानाम्=उद्यानं उपवेशनार्थं निर्मितानां बद्धभूमीनाम्, सम्बन्धि, लतामण्डपम्=आतपादिवारणार्थं कृतं लतागृहमिति तदर्थः। **नीलकण्ठः**=मयूरः, **आरात्**=समीप एव ['आराद् दूरसमीपयोः' इत्यमरः] समीपवर्तिनामित्यर्थः, **धारागृहाणाम्**=जलयन्त्रगृहाणाम्, **ध्वनिम्**=शब्दम्, **अनु**=अनुलक्ष्य ['अनुर्लक्षणे' इत्यनेनानुरत्र कर्मप्रवचनीयः, तद्योगे ध्वनिशब्देऽत्र 'कर्मप्रवचनीययुक्ते द्वितीया'], **ताण्डवम्**=नृत्यम्, **कुरुते** ['ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तनम्' इत्यमरः], मयूराणां धारायन्त्रशब्दे मेघगर्जित

---

**चेटी**—यह कामदेव का उद्यान आ गया। स्वामिन्! अन्दर चलिए।

(सब का प्रवेश)

**नायक**—(प्रवेश करके) अहा! कामदेव का उद्यान कैसा सुहावना है! यहाँ,

चन्दन-तरुओं का रस ही लता-मण्डप के फर्श को ठण्डा कर रहा है, धारागृहों की झरझर के साथ साथ मोर नाच रहा है और यन्त्र द्वारा फेंका हुआ और गिरते समय फूलों से टकरा कर उनके पराग से पीला हुआ जल वृक्षों की थाँवलों को भरता हुआ बड़े वेग से बढ़ा जा रहा है ॥७॥

अपि च,

> अमी गीतारम्भैर्मुखरितलतामण्डपभुव
> परागै पुष्पाणा प्रकटपटवासव्यतिकरा ।
> पिबन्तः पर्याप्त सह सहचरीभिर्मधुरस
> समन्तादापानोत्सवमनुभवन्तीह मधुपा ॥८॥

---

भ्रमो जात , तेन च ते नृत्यन्ति, वर्षासु मेघगर्जनमनु नर्तन मयूराणा निसर्ग इति भाव । किं च यन्त्रोन्मुक्तः=यन्त्राद्–धारायन्त्राद्, उन्मुक्त –व्यक्त –निर्गत [अथवा यन्त्रेणेति कर्तरि तृतीयान्तेन समास , यन्त्रनिर्मुक्त इति तदर्थ ], **आपातोत्पीडहेलाहृतकुसुमरज पिञ्जर** =आपात –आ समन्ताज्जलस्य पतनम्, तेन, उत्पीड –उत्पीडनम्–आघात , तेन, हेलया अयत्नैव, हृतम्–अपनीतम् , कुसुमानाम्–पुष्पाणाम् , रज –पराग , तेन, पिञ्जर –पीतवर्ण , **विटपिनाम्**=वृक्षाणाम्, **आलवालान्**=वृक्षमूलविहितान् वृत्ताकारान् जलाधारान्, **पूरयन्**=पूर्णान् कुर्वन् सन्, **अयम्**=मनोहर इत्यर्थ , **जलौघ**.=जलानाम्, ओघ –प्रवाह , **वेगाद्**=वेगेनेत्यर्थ , **चलति**=स्यन्दते–प्रवहतीति भाव । व्याख्योक्तरीत्या भ्रान्तिमानलङ्कारो व्यज्यते । स च नीलकण्ठताण्डवोपपादकत्वाद् गुणीभूत । अमास्वरशुक्लेन जलेन कुसुमरजोगुणग्रहणात् तद्गुणालङ्कारश्च । स्रग्धरा छन्द ॥७॥

**अमी** इति—**इह**=अस्मिन्नुद्याने । **गीतारम्भै**.=[ गीतानाम् आरम्भा , तै ]कलगुञ्जितै [गीतोच्चारणैश्च], **मुखरितलतामण्डपभुवः**=मुखरिता –वाचालिता –सशब्दा कृता इति भाव , लतामण्डपानाम् लतागृहाणाम्, तत्सम्बन्धिन्य इत्यर्थ , भुव –भूप्रदेशा यैस्तादृशा , **पुष्पाणाम्**=कुसुमानाम्, **परागै** =धूलिभि ,स्वशरीरसंलग्नैरिति शेष ,**प्रकटपटवासव्यतिकरः**=प्रकट –सुव्यक्त , पटवासस्य–पिष्टातकस्य हरिद्राकुङ्कुमादिचूर्णस्य, व्यतिकर –सम्बन्धो येषा तादृशा , **सहचरीभि**.=स्वसहचारिणीभि मधुकरीभि [स्वस्त्रीभिश्च ], **सह**, **पर्याप्तम्**=अत्यधिकम् यथेच्छमिति यावत् ।

---

और भी—

यह भौंरे भी, जिन्होंने लता मण्डप के स्थान को अपनी गुञ्जार से ध्वनित कर दिया है और जिन में से पुष्पों के पराग की सुगन्धि आ रही है, यहाँ चारों ओर अपनी सङ्गिनी भ्रमरियों के साथ मधुपान करते हुए मद्यपान का-सा आनन्द ले रहे हैं ॥८॥

**विदूषकः**—[ उपसृत्य ] जेदु भवं । सोत्थि भोदीए ।

जयतु भवान् । स्वस्ति भवत्यै ।

**नायकः**—वयस्य ! चिरादागतोऽसि ।

**विदूषकः**—भो वअस्स ! लहु एव्व आअदो । किन्दु इअन्तं कालं विवाहमङ्गलूसवमिलिदसिद्धविज्जाहरापाणदंसणकोदूहलेण परिब्भमन्तो ण लक्खिदो । ता पिअवअस्सो वि दाव एदं पेक्खदु ।

भो वयस्य ! लघ्वेवागतः । किन्तु इयन्तं कालं विवाहमङ्ग-

---

**मधुरसम्**=पुष्परसम् [सुरारसं च] ['मधु मद्ये पुष्परसे क्षौद्रे च' इत्यमरः] **पिबन्तः**=आस्वादयन्तः, **अमी**=पुरोदृश्यमानाः, **मधुपाः**=भ्रमराः, [सुरापायिनश्च], **समन्तात्**=सर्वत्र, **आपानोत्सवम्**=आपानम्–सुरापानम्, तदेव उत्सवः–आनन्दः, तमिव, **अनुभवन्ति** । इहोद्याने यत्र तत्र लतामण्डपेषु भ्रमरा भ्रमरीभिः सह पुष्परसं पिबन्ति, तेषां गुञ्जितैर्लतामण्डपान्यपि सशब्दानि सन्ति, भ्रमराणां पक्षाः पीतैः पुष्पपरागैः रूषिता विद्यन्ते । तत्र कविरुत्प्रेक्षते–इयं मधुपमण्डली उत्सवकालिकपानगोष्ठीरसमिवानुभवति । तथाहि–पानगोष्ठ्यामपि पानोन्मत्ता जना गीतानि गायन्ति, परस्पर पीतपटवासप्रतिक्षेपेण रूषितवाससो भवन्ति, स्वस्त्रीभिः सह पानमाचरन्ति । श्लेषभित्तिकाभेदाध्यवसायमूला प्रतीयमानोत्प्रेक्षात्रालङ्कारः । 'योगाद्रूढिर्बलीयसी' इति न्यायेन मधुपशब्दो भ्रमरवाचक एवेत्यत्रेति मते विशेषणमात्रे श्लेषात् समासोक्तिरप्यनुप्राणितेयम् । शिखरिणी छन्दः । तल्लक्षणं यथा—

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥८॥

**वयस्येति**—**चिरात्**=विलम्ब्य । **भो** इति—**लघ्वेव**=शीघ्रमेव । **विवाहेत्यादि**=विवाहमङ्गलोत्सवे त्वद्विवाहरूपे मङ्गलोत्सवे, मिलितानाम्-

---

**विदूषक**—(पास जाकर) आप की जय हो। स्वामिनी का कल्याण हो।

**नायक**—सखे ! बड़ी देर बाद दिखाई दिए।

**विदूषक**—भाई ! मैं तो शीघ्र ही आ गया था। परन्तु इतनी देर आप के विवाह के महत् उत्सव में सिद्ध और विद्याधरों को मिलकर मद्य पीते देखने की चाह से घूमता फिरता आपको दिखाई नहीं पड़ा। तो चलिए, आप भी यह रौनक देखिए।

लोत्सवमिलितसिद्धविद्याधरापानदर्शनकौतूहलेन परिभ्रमन् न लक्षितः । तत् प्रियवयस्योऽपि तावदेतत् पश्यतु ।

**नायकः**—यथाह भवान् । [ सहर्षं परितः पश्यन् ]

दिग्धाङ्गा हरिचन्दनेन दधतः सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुकाः ।
सार्धं सिद्धगणैर्मधूनि दयितापीतावशिष्टान्यमी
मिश्रीभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥१॥

**तदेहि, वयमपि तमालवीथिकां गच्छामः ।**

[ सर्वे परिक्रामन्ति ]

---

एकत्र संगतानाम्, सिद्धानां, विद्याधराणां च आपानस्य सुरापानगोष्ठ्याः, दर्शने, यत् कौतूहलम्—औत्सुक्यम्, तेन [ हेतौ तृतीया ], **परिभ्रमन्**=इतस्ततो भ्रमणं कुर्वन्, अहम्, **न लक्षितः**=त्वयेति शेषः ।

**दिग्धाङ्गेति**—**हरिचन्दनेन**=कुङ्कुमपङ्केनेत्यर्थः [ 'हरिचन्दनमस्त्री स्याद् देवतानां महीरुहे । नपुंसकं तु गोशीर्षे ज्योत्स्नाकुङ्कुमयोरपि ॥' इति मेदिनी], **दिग्धाङ्गाः**=दिग्धानि—उपलिप्तानि, अङ्गानि—ललाटादिशरीरावयवाः, येषां तादृशाः, **सन्तानकानाम्**=सन्तानकाख्यदेवतरुपुष्पाणाम् [ 'पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥' इत्यमरः ], **स्रजः**=मालाः, **दधतः**=धारयन्तः, **माणिक्याभरणप्रभाव्यतिकरैः**=माणिक्यानाम्—नानाविधरक्तपीतादिमणीनाम् [ तैर्घटितानीति यावत् ], आभरणानि—आभूषणानि, तेषां प्रभा—कान्तयः, तासां व्यतिकरैः—संमिश्रणैः, **चित्रीकृताच्छांशुकाः**=चित्रीकृतानि—[ अचित्राणि चित्राणि सम्पादितानि ] नानाविधरूपसंयोगाच्चित्रवर्णतां प्रापितानि, अच्छानि—निर्मलानि, अंशुकानि—वस्त्राणि [ 'चेलं वसनमंशुकम्' इति वस्त्रनामस्वमरः ] येषां

---

**नायक**—जैसे आप की इच्छा । ( हर्ष से चारों ओर देखता हुआ )

अङ्गों पर हरिचन्दन मले हुए, सन्तानकों की मालाएँ धारण किये हुए, मणि-जटित आभूषणों की छटा से भड़कीले स्वच्छ वस्त्रों वाले यह विद्याधर, सिद्ध-गणों के साथ मिलकर चन्दन के वृक्षों की छाया तले, स्त्रियों की जूठी मदिरा पी रहे हैं ॥१॥

तो, चलो, हम भी तमालवीथी में चलें ।

( सभी चल पड़ते हैं )

विदूषकः—एसा खु तमालवीहिआ । एदं चन्दणलदामण्डवं । एदं च सरदादवपरिखेदिदं विअ तत्तहोदीए वदणं लक्खीअदि । ता इह फलिअसिलादले उपविसदु ।

एषा खलु तमालवीथिका । एतच्चन्दनलतामण्डपम् । एतच्च शरदातपपरिखेदितमिव तत्रभवत्या वदनं लक्ष्यते । तदिह स्फटिकशिलातले उपविशतु ।

नायकः—वयस्य ! सम्यगुपलक्षितम् ।

एतन्मुखं प्रियायाः शशिनं जित्वा कपोलयोः कान्त्या ।
तापाभिताम्रमधुना कमलं ध्रुवमीहते जेतुम् ॥१०॥

---

तथाभूताः, अमी=विवाहोत्सवानन्दनिर्भराः, विद्याधराः=देवयोनिविशेषाः, सिद्धगणैः=सिद्धानाम्—देवयोनिविशेषाणाम्, गणैः—समूहैः, सार्धम्=सह [सहयुक्तेऽप्रधाने तृतीया], चन्दनतरुच्छायासु=चन्दनतरूणाम्—चन्दनद्रुमाणाम्, छायासु—अनातपेषु, घनच्छायानां चन्दनद्रुमाणामध इत्यर्थः, मिथीभूय=मिलित्वा, दयितापीतावशिष्टानि=दयिताभिः—प्रियाभिः, पीतेभ्यः—आस्वादितेभ्यः, अवशिष्टानि, मधूनि=मद्यानि, पिबन्ति=रसयन्ति । शार्दूलविक्रीडितं छन्दः ॥९॥

विदूषकोक्तौ—एतच्चेत्यादि । शरदातपखेदितमिव=शरदातपेन—शारत्कालिकेन, आतपेन घर्मेण, खेदितमिव—आयासितमिव । तत्रभवत्याः=मलयवत्याः । वयस्येति—उपलक्षितम्=विचारितम् । साधीयाँसि विचार इति भावः ।

एतदिति—एतत्=पुरोदृश्यमानम्, प्रियायाः=मलयवत्याः, मुखम्=आननम् [कर्तृ], कपोलयोः=स्वावयवभूतयोः गण्डस्थलयोरेव, कान्त्या=द्युत्या, शशिनम्=शशलाञ्छितं चन्द्रमसम्, जित्वा=पराभूय ['क्षिप्त्वा' इति पाठे तिरस्कृत्येत्यर्थः], अधुना=अस्मिन् समये, तापाभिताम्रम्=तापेन-

---

विदूषक—यह तमालवीथी आ गई । और यह लतामण्डप है । और इनका मुख भी शरद् ऋतु की धूप से कुम्हलाया हुआ प्रतीत होता है । इसलिए, यहाँ स्फटिक शिला पर बैठ जाइए ।

नायक—मित्र ! ठीक जाँचा ।

यह प्रिया का मुख कपोलों की शोभा से चन्द्रमा को जीतकर अब धूप के ताप से लाल होकर सचमुच कमल को भी जीतना चाहता है ॥१०॥

[ मलयवतीं हस्ते गृहीत्वा ] प्रिये ! इहोपविशामः ।

[ सर्वे उपविशन्ति ]

**नायकः**—[ नायिकामुखमुन्नमय्य पश्यन् ] प्रिये ! वृथैव त्वमस्माभिः कुसुमाकरोद्यानदर्शनकुतूहलिभिः परिखेदिता । कुतः,

एतत् ते भ्रूलतोल्लासि पाटलाधरपल्लवम् ।
मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम् ॥११॥

---

शरदातपजनितेन श्रीष्मेण, अभित—सातिशयमित्यर्थः, ताम्रम्—रक्तं सत्, कमलम्=वारिजम्, **जेतुम्**=पराभवितुम्, **ईहते**=चेष्टते, **ध्रुवम्**=नूनम् । शशी तु शशलाञ्छितत्वादस्या मुखस्यैकदेशेन कपोलयुग्मेनैव जित, इदानीं तु रक्तिमातिशयं दधानेन मुखेन कमलविजयायोद्यमः क्रियते—इति प्रतीयत इति भाव. । आतपजनितमुखताम्रतातिशये कमलविजयोद्यमहेतुकत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कार । शशिनम्—इति विशेष्यं लाञ्छितस्य चन्द्रमस. पराजययोग्यतामावेदयत् साभिप्रायम्, इति परिकराङ्कुर । तदुक्तं कुवलयानन्दे—

'साभिप्राये विशेष्ये तु भवेत् परिकराङ्कुर' ।

क्वचित्तु 'तापाभिताम्रम्' इत्यस्य स्थाने 'तापानुरक्तम्' इति पाठ । तापेन अनुरक्तम्—ताम्रवर्णमिति पूर्ववदेवार्थः । आर्या छन्द ॥१०॥

उन्नमय्य=ऊर्ध्वीकृत्य । **कुसुमे**त्यादि—कुसुमाकरोद्यानस्य—कुसुमाकरनाम्न उद्यानस्य, दर्शने—विलोकने, कुतूहलिभि—उत्सुकै, **परिखेदिता**=आयासिता । परिखेदनस्य व्यर्थताया हेतुमुपन्यस्यति—कुत इति ।

**एतदिति—भ्रूलतोल्लासि**=भ्रुवौ=नेत्रयोरुपरि वर्तमाने [illegible], ते एव लते वल्लयौ, ताभ्यामुल्लसति—शोभत इति तादृशम्, **पाटलाधर-पल्लवम्**=पाटल—पाटलवर्णः श्वेतरक्त, अधर—अधरोष्ठ एव, पल्लव—किसलयम्, यत्र तादृशम्, **एतत्**=पुरोवर्ति, ते=भवत्या, **मुखम्**=आनन-मेव, **नन्दनम्**=नेत्रानन्दकरत्वाद् नन्दनाख्यम्, **उद्यानम्**=[illegible]

---

( मलयवती को हाथ से पकड़ कर ) प्रिये ! [illegible]

( सब बैठ [illegible] )

**नायक**—( नायिका के मुख को [illegible] ) [illegible] कामदेव के उद्यान देखने की लालसा [illegible] मौं रूपी लताओं से सुशोभित [illegible] यह तेरा (आनन्द देने वाला) [illegible] अतिरिक्त ) और तो [illegible]

चेटी—[ सस्मितं विदूषकं निर्दिश्य ] सुदं तुए कहं वण्णिदेत्ति।
श्रुतं त्वया कथं वर्णितेति ।

विदूषकः—[ सस्मितम् ] चउरिए ! मा एव्वं गव्वं उव्वह ! अह्माणं पि मज्झे दंसणीओ जणो अत्थि एव्व । केवलं मच्छरेण कोवि ण वण्णेदि।

चतुरिके ! मैवं गर्वमुद्वह । अस्माकमपि मध्ये दर्शनीयो जनोऽस्त्येव । केवलं मत्सरेण कोऽपि न वर्णयति ।

चेटी—[ सस्मितम् ] अय्य ! अहं दे वण्णेमि ।
आर्य ! अहं ते वर्णयामि ।

---

मस्ति, अतः=अस्मात् ते मुखात्, अन्यत्=अतिरिक्तम्, केवलम्=साधारणम्, वनम्=जडवृक्षसमूहमात्रम् । अस्ति—इति शेषः ।

प्रिये ! इदं त्वन्मुखमेव नेत्रानन्दहेतुत्वाद्, भ्रूलताविराजितत्वाद्, अधरकिसलयसुशोभितत्वाच्च नन्दनोद्यानशोभां वहति । एतदतिरिक्तं उद्यानपदवाच्यमपि न भवितुमर्हति, दूरं तु नन्दनत्वं तस्य । किन्तु तद् वनापरपर्याये जडानां पादपानां समूहमात्रम् । अतो यन्मन्ये त्वन्मुखनन्दनोद्याने विद्यमाने वृथैव वयमिह कुसुमाकरोद्यानमागत्य त्वामात्मानञ्च खेदितवन्त इति भावः । मुखे नन्दनोद्यानत्वारोपाद् रूपकम् । पूर्वार्धे भ्रुवोर्लताया अधरे पल्लवस्य चारोपौ तदङ्गता गताविति साङ्गमिदम् । मुखादतिरिक्तस्योद्यानत्वनिषेधप्रतीतेः परिसंख्या। एतदेवोद्यानं नन्दनमानन्दकरमितरत्तु वनमात्रं पीडामात्रकरम् [वनधातोर्हिंसार्थत्वमपि पटादौ प्रतिपादितम् ] इति—व्यतिरेकश्च । अनुष्टुप् वृत्तम् ॥११॥

श्रुतमिति—त्वया श्रुतम्, कथमस्मद्भर्तृदारिका नायकेन वर्णिता । एतादृशमपूर्वं सौन्दर्यमस्मद्भर्तृदारिकाया विद्यते यन्नायकोऽपि तामुच्चैः स्तौतीति भावः । चतुरिके इति—स्वभर्तृदारिकायाः स्तुतिमाकर्ण्य गर्वं मा कार्षीरित्यर्थः । अस्माकमिति—अहमपि दर्शनीयोऽस्मि, परं मात्सर्यवशाद् न मां कोऽपि वर्णयति—स्तौतीति विदूषकस्य निगूढाभिप्रायः । आर्येति—वर्णयामि=

---

चेटी—(मुस्कराकर विदूषक की ओर देखकर) तूने सुना है, इनका कैसा (मनोहर) वर्णन किया है ?

विदूषक—(मुस्कराकर) चतुरिके ! ऐसे गर्व मत कर। हमारे बीच में भी सुन्दर जन है तो, मगर ईर्ष्या से उसका वर्णन (प्रशंसा) कोई नहीं करता।

चेटी—(मुस्कराकर) आर्य ! मैं तुम्हारा वर्णन (प्रशंसा—रँगना) करती हूँ।

**विदूषकः**—[ सहर्षम् ] जीविदह्मि। करेदु होदी पसादं, जेण एसो पुण ण भणादि ईदिसो तादिसो मक्कडाआरत्ति।

जीवितोऽस्मि। करोतु भवती प्रसादम्, येनैष पुनर्न भणति ईदृशस्तादृशो मर्कटाकार इति।

**चेटी**—अज्ज तुवं मए विवाहजागरेण णिद्दाअमाणो णिमीलिअच्छो सोहन्तो दिट्ठो। ता एवं एव्व चिट्ठ।

अद्य त्वं मया विवाहजागरेण निद्रायमाणो निमीलिताक्षः शोभमानो दृष्टः। तदेवमेव तिष्ठ।

[ विदूषकस्तथा करोति ]

**चेटी**—[ आत्मगतम् ] जाव णीलीरसाणुआरिणा तमालपल्लवरसेण मुहं से कालीकरिस्सं।

यावन्नीलीरसानुकारिणा तमालपल्लवरसेन मुखमस्य कालीकरिष्यामि।

---

स्तौमि, वर्णवन्तं करोमि-केनचिद् रागेण रञ्जितं करोमीति गूढाभिप्रायः। [वर्णवच्छब्दात् 'तत्करोति-'इति णिच्। 'इष्ठवच्च' इत्यतिदेशान्मतुपो लुक्। अथवा 'वर्ण-वर्णक्रियाविस्तारगुणवचनेषु' इति चौरादिकाद् वर्णधातोरेवेदं रूपम्। वर्णक्रिया चात्रार्थः। ]

**जीवितोऽस्मीति**—मत्सौन्दर्यवर्णनप्रतिज्ञया त्वयाहं पुनर्जीवनमिव प्रापितोऽस्मीति भावः। **प्रसादम्**=मत्सौन्दर्यवर्णनरूपमनुग्रहम्। **एषः**=विटः। **अद्येति**—**निमीलिताक्षः**=निमीलिते-निमिषिते, अक्षिणी-नेत्रे येन तादृशः [ 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' इत्येष. ] अक्षिणी निमील्य स्थित इत्यर्थः। **एवमेव**=निमीलिताक्ष एव। **तथा करोति**=अक्षिणी निमील्य तिष्ठति। **यावदिति**—यावदयं निमीलिताक्षस्तिष्ठति, तावदिति

---

**विदूषक**—(प्रसन्न होकर) मैं धन्य हूँ। हाँ, आप अवश्य ऐसी कृपा कीजिए जिससे फिर यह 'यह ऐसा, वैसा, बन्दर जैसा है' इस तरह न कहे।

**चेटी**—आर्य! आज मैं ने तुझे विवाह में जागने के कारण ऊँघता हुआ आँखें बन्द किये सुन्दर रूप में देखा था। सो वैसे ही बैठो।

(विदूषक वैसे ही करता है)

**चेटी**—(मन में) तब तक नील के रस के समान तमाल के पत्तों के रस से इसका मुख काला कर दूँ।

[ उत्थाय पल्लवग्रहणं कृत्वा निष्पीडनं च नाटयति ]

[ नायको नायिका च विदूषकस्य मुखं पश्यतः ]

**नायकः—वयस्य ! धन्यः खल्वसि, यदस्मासु तिष्ठत्सु त्वमेवं वर्ण्यसे ।**

[ चेटी तमालपल्लवस्य रसेन विदूषकस्य मुखं नाट्येन कालीकरोति ]

[ नायिका सस्मितं विदूषकं दृष्ट्वा नायकं पश्यति ]

**नायकः—**

स्मितपुष्पोद्गमोऽयं ते दृश्यतेऽधरपल्लवे ।
फलं तु जातं मुग्धाक्षि ! पश्यतश्चक्षुषोर्मम ॥१२॥

---

भाव । **नीलीरसानुकारिणा**=नीलीरससदृशेन–नीलवर्णेनेत्यर्थः । **कालीकरिष्यामि**=अकालं कालं करिष्यामि–कृष्णीकरिष्यामीत्यर्थः ।

**उत्थायेत्यादि—पल्लवग्रहणम्**=तमालपल्लवस्य ग्रहणम्, **निष्पीडनम्**=रसश्च्योतनाय विमर्दनम् । नायको नीलीरसेन चेट्या रज्यमानं विदूषकमुखमवलोकयन् श्लिष्टं परिहासगर्भमाह–**वयस्येति** । त्वमेव, **धन्यः**=भाग्यवानसि, पक्षे–मूर्खतया दुर्भाग्योऽसि, **यदस्मासु तिष्ठत्सु**=विद्यमानेष्वपि, अस्मान् विहाय [ 'षष्ठी चानादरे' चात् सप्तमी ], **त्वमेवम्, वर्ण्यसे**=स्तूयसे, पक्षे–रञ्जकद्रव्येण कृष्णमुखता नीयसे ।

नायक· कृष्णमुखतां नीतं विदूषकमवलोक्य स्मितपूर्वकमात्माभिमुखं पश्यन्तीं नायिकां वर्णयति–**स्मितेति** । हे, **मुग्धाक्षि**=[ मुग्धे मनोहरे अक्षिणी यस्याः सा मुग्धाक्षी, संबोधने मुग्धाक्षि–'बहुव्रीहौ सक्थ्यक्ष्णोः–' इति षच्, षित्वान् ङीप्, 'अम्बार्थनद्योर्ह्रस्वः' ] हे मनोहरनयने, **अयम्**=पुरोवर्ती नितरां मनोज्ञः, **स्मितपुष्पोद्गमः**=स्मितम् मन्दहास एव, पुष्पम्–

---

( उठ कर पत्ते तोड़ कर निचोड़ती है )

( नायक और नायिका दोनों विदूषक के मुँह की ओर देखते हैं )

**नायक**—मित्र ! तू धन्य है, जो हमारे सामने इस प्रकार वर्णन किया (रँगा) जा रहा है ।

( चेटी तमाल के पत्तों के रस से विदूषक का मुख काला कर देती है )

( नायिका मुस्कराकर विदूषक को देखकर नायक की ओर देखती है )

**नायक**—हे मुग्धाक्षि ! मुस्कराहट का फूल तो तेरे होंठों की कोंपल पर खिला दिखाई देता है पर उसका फल तुझे निहारती हुई इन मेरी आँखों में उत्पन्न हो गया है ( अथवा मेरे नेत्र सफल हो गये हैं ) ॥१२॥

**विदूषकः**—भोदि ! किं दे किदं । भवति ! किं ते कृतम् ।

**चेटी**—णं वरिणदो सि । ननु वर्णितोऽसि ।

**विदूषकः**—[ हस्तेन मुखं परामृज्य हस्तं दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य ससम्भ्रमम् ] आः दासीए धीदे ! राअउलं खु एदं । किं दे करिस्सं । [नायकमुद्दिश्य] भो ! तुह्माणं पुरदो एव्व अहं दासीए धीदाए खलीकिदोह्मि । किं मम इह ट्ठिदेण । अण्णदो गमिस्सं । [ निष्क्रान्तः ]

आः दास्याः पुत्रि ! राजकुलं खल्वेतत् । किं ते करिष्यामि । भोः ! युष्माकं पुरत एवाहं दास्याः पुत्र्या खलीकृतोऽस्मि । किं ममेह स्थितेन । अन्यत्र गमिष्यामि ।

---

कुसुमम्, तस्य, उद्गम –उद्भव , ते=भवत्याः, **अधरपल्लवे**=अधर –अधरोष्ठ एव, पल्लव –किसलयम्, तस्मिन्, **दृश्यते**=साक्षात्क्रियते, **तु**=किन्तु, **फलम्**=पुष्पोद्गमानन्तर जायमान फल तृप्तिरूपमानन्दरूपं चक्षुर्जन्म सार्थकत्वरूप वा, **पश्यतः**=सस्मित त्वदधर निरीक्षमाणस्य, **मम**=जीमूतवाहनस्य, **चक्षुषोः**=नेत्रयो , **जातम्**=उद्गतम् । यत्रैव पुष्पोद्गमस्तत्रैव फलमिति निसर्ग । परमिह तु पुष्पोद्गमस्तवाधरविद्रुमे, फल मम चक्षुषोरिति महदद्भुतम् इति भाव । कार्यकारणयोर्वैयधिकरण्यादसङ्गतिरलङ्कार । तत्र च स्मिते पुष्पत्वारोपोऽङ्गम् । नायिकाननसौन्दर्यं व्यङ्ग्यम् । वृत्तमनुष्टुप् ॥१०॥

**भवतीति**—**ते**=त्वयेत्यर्थ , सम्बन्धसामान्ये षष्ठी । क्वचित्तु प्राकृते 'तुए' इति पाठ । तस्य 'त्वया' इति संस्कृतम् । तच्च माधीय एव । **वर्णितोऽसि**=रञ्जितोऽसीति भाव । **हस्तेनेति**–**परामृज्य**=प्रोञ्छ्य हस्तमित्यस्य कम्पनमिति शेष । **दण्डकाष्ठम्**=दण्डरूप काष्ठं दण्डकाष्ठम्, काष्ठयष्टिमित्यर्थ । **ससरम्भम्**=शीघ्रमित्यर्थ । **आ इति**—**आः**=इति क्रोधद्योतकमव्ययम् । **दास्याः पुत्रि**=चेटि, **राजकुलम्**=राजगृहम्, वर्तते, अन्यथा न जाने करतेऽस्य मम परिहासस्य फल भवेत् इति भाव । अथवा–राजकुलमेतदस्ति, नात्र त्वमेव परि-

---

**विदूषक**—भद्रे ! यह तू ने क्या किया ?

**चेटी**—तुझे वर्णित ( रञ्जित ) किया है ।

**विदूषक**—( हाथ से मुँह पोंछ कर, हाथ को देखकर और क्रोध से डण्डा उठा कर जल्दी से ) अरी नीच ! यह राजकुल है । तेरा क्या करूँ । (नायक की ओर उद्देश्य करके) ओह ! आप के सामने ही इस नीच ने मेरा अपमान कर दिया है । मेरा यहां रहने का क्या काम ? और कहीं जाता हूँ ।

( चला जाता है )

**चेटी**—कुविदो खु मम अय्यो अत्तेओ । जाव गदुअ पसादेमि ।

*कुपितः खलु मम आर्य आत्रेयः । यावद्गत्वा प्रसादयामि ।*

**नायिका**—हञ्जे चउरिए ! कहं मं एआइणिं उज्झिअ गच्छसि ।

हञ्जे चतुरिके ! कथं मामेकाकिनीमुज्झित्वा गच्छसि ।

**चेटी**—[ नायकमुद्दिश्य सस्मितम् ] एवं एव चिरं एआइणी होहि ।
एवमेव चिरमेकाकिनी भव ।

[ निष्क्रान्ता ]

---

हासः करणीय आसीत् । अस्थाने त्वयैतदनुष्ठितम् इति भाव । किं ते इति- अस्य तेऽविनयस्य कं दण्डमुपकल्पयामि । राजकुलादेव हेतोर्न किमपि कर्तुं प्रभवामि इति भावः । **भो** इत्यादि—क्वचित् 'दास्याः पुत्र्या' इत्यस्य स्थाने 'दास्या धीतया' इति पाठ । तत्र 'धेट् पाने' इत्यस्माद् धातोः, भावे क्तप्रत्यये, 'आदेच उपदेशेऽशिति' इत्यनेनात्वे, आकारस्य 'घुमास्था—'इत्यादिनेत्वे गीतपीतादिवद् धीतशब्दः सिध्यति । ततो धीतमस्या अस्तीति विग्रहे 'अर्श आद्यचि' धीताशब्दः कन्यावाची निष्पद्यते । **खलीकृतः**=तिरस्कृत. ।

**कुपित** इति—ममेति सम्बन्धसामान्ये षष्ठी । मयीति तदभिप्रायः । मद्यमिति वा । **एवमेवेति**—यदि दयितेन सहितापि त्वमात्मानमेकाकिनीमनुभवसि, तर्हि एतादृशी—एकाकिनी त्वमस्माभि सदैव वाञ्छ्यसे । अतो मयेतः प्रस्थातव्यमेवेति भाव. । इदानीं निर्मक्षिके विश्रब्धमास्वाद्यतां शृङ्गाररस इति गूढाभिसन्धिः । नायिकया एकाकित्वमगमने हेतुरुक्तः, तदेवैकाकित्वं चेट्या गमनहेतुतयोपात्तमिति द्वितीयो व्याघातोऽलङ्कार । 'सौकर्येण निबद्धापि क्रिया कार्यविरोधिनी । दया चेद् बाल इति मय्यपरित्याज्य एव ते ॥' इति तल्लक्षणं कुवलयानन्दे । मया गन्तव्यमेवेति कार्ये प्रस्तुते तत्कारणस्यैकाकित्वाशंसाया वचनादप्रस्तुतप्रशंसा च ।

---

**चेटी**—आर्य मैत्रेय मेरे से कुपित हो गया है, इसलिये जाकर मनाती हूँ ।

**नायिका**—सखि चतुरिका ! मुझे अकेली छोड़कर क्यों जा रही है ?

**चेटी**—( नायक की ओर संकेत करके, मुस्कराकर ) ऐसी अकेली तू सदा ही रह ।

( चली जाती है )

**नायक —**

दिनकरकरामृष्टं बिभ्रद् द्युतिं परिपाटलां
दशनकिरणैरुत्सर्पद्भिः स्फुटीकृतकेसरम्।
अयि मुखमिदं मुग्धे सत्यं समं कमलेन ते
मधु मधुकरः किन्त्वेतस्मिन् पिबन्न विभाव्यते ॥१३॥

[ नायिका विहस्य मुखमुन्नमयति ]

[ नायको दिनकरेति तदेव पठति ]

---

इत्थं चेटीविदूषकयोः कलहमुत्पाद्य निष्क्रमणे सम्पादिते रहसि विजृम्भमाणः सम्भोगं वर्णयति—**दिनकरेति**। **अयि, मुग्धे**=सुन्दरि, **दिनकरकरामृष्टम्**=दिनकरस्य–सूर्यस्य, करैः–किरणैः, आमृष्टम्–आसमन्तात् स्पृष्टम् [ सत् ], **परिपाटलाम्**=परितः–सर्वतः, पाटलाम्–रक्तवर्णाम्, **द्युतिम्**=कान्तिम्, **बिभ्रत्**=धारयत्, **उत्सर्पद्भिः**=ऊर्ध्वं प्रसरद्भिः, **दशनकिरणैः**=दशनानाम्–दन्तानाम्, किरणैः–रश्मिभिः [ प्रकृत्यादित्वात् तृतीया ], **स्फुटीकृतकेसरम्**=स्फुटीकृतः–प्रकाशितः, केसरः–किञ्जल्कः, यत्र तादृशम्, दन्तकिरणरूपकिञ्जल्कवदिति भावः। **इदम्**=निरतिशयमनोहारि, **ते**=भवत्याः मत्प्रेयस्याः, **मुखम्**, **कमलेन**=सरसिजेन, **समम्**=तुल्यम्, अस्ति इति, **सत्यम्**=सत्यमित्यर्धस्वीकारे, **किन्तु**=परन्तु, **एतस्मिन्**=कमलकल्पे मुखे, **मधु**=मकरन्दम्, **पिबन्**=आस्वादयन्, **मधुकरः**=भ्रमरः, **न विभाव्यते**=नावलोक्यते। दिनकरकरस्पर्शेन ताम्रवर्णं दन्तकिरणपुञ्जकिञ्जल्कविराजितं ते मुखं यद्यपि कमलोपमां भजते, तथापि न सर्वात्मना कमलसादृश्यं तत्र घटते। कमले मधुकरस्तद्रसं पिबन्नवलोक्यते, इह तु त्वन्मुखकमलाधरदलसुधारसं पिबन् क्वचिदपि मधुकरो नास्ति–इति सर्वथा कमलोपमाधिगतये मधुकरेण मया त्वदधररसः पातव्यः अन्यथा तवाननस्य कमलोपमा त्रुटितैव भवेत्–

---

**नायक**—हे मुग्धे! यह तेरा मुख सचमुच ही कमल के समान है। क्योंकि सूर्य की किरणें पड़ने से यह लालिमा को धारण किये है और इस में दाँतों की उठती हुई चमकीली किरणें स्पष्ट केसर के समान हैं। किन्तु इसके ऊपर मधु चूसता हुआ भँवरा दिखाई नहीं देता ॥१३॥

(नायिका हँसकर मुख ऊपर को उठा देती है)

(नायक फिर वही 'हे मुग्धे!' आदि पढ़ता है)

[ प्रविश्य ]

**चेटी**—[ सहसोपसृत्य ] एसो खु सिद्धजुअराओ मित्तावसू केण वि कज्जन्तरेण कुमारं पेक्खिदु आअदो।

एष खलु सिद्धयुवराजो मित्रावसुः केनापि कार्यान्तरेण कुमारं प्रेक्षितुमागतः।

**नायक**—प्रिये! गच्छ त्वमात्मनो गृहम्। अहमपि मित्रावसुं दृष्ट्वा त्वरिततरमागत एव।

[ चेटीसहिता निष्क्रान्ता नायिका। ततः प्रविशति मित्रावसुः ]

**मित्रावसुः**—

अनिहत्य तं समर्थः कथमिव जीमूतवाहनस्याहम्।
कथयिष्यामि तव हृतं राज्यं रिपुणेति निर्लज्जः ॥१४॥

---

इति भावः। चतुर्थपादे मधुमधुकरपदाभ्यां अधररसनायकयोर्निगरणादतिशयोक्तिः। भङ्ग्यन्तरेणाधररसपानाभिलाषनिवेदनात् पर्यायोक्तम् इति केचित्। कमलसादृश्यबोधनादुपमा च। अनुप्रासस्त्वस्य कवेः कवितायां प्रायः सर्वत्र जागर्त्येव। हरिणीवृत्तम्। तल्लक्षणं यथा—'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' ॥१३॥

एष इति—**केनापि कार्यान्तरेण**=केनापि प्रयोजनविशेषेणेत्यर्थः। हेतौ तृतीया।

**अनिहत्येति**—**समर्थः**=शक्तिमानपि, **अहम्**=मित्रावसुः, **तम्**=मतङ्गनामानं जीमूतवाहनस्य वैरिणम्, **अनिहत्य**=प्राणैरवियोज्य, **निर्लज्जः**=लज्जाविरहितः सन्, **तव**=भवतो जीमूतवाहनस्य, **राज्यम्**=अनुशासनीयः प्रदेशः, **रिपुणा**=शत्रुणा मतङ्गेन, **हृतम्**=स्वायत्तीकृतम्,

---

(चेटी का प्रवेश)

**चेटी**—(शीघ्रता से पास जाकर) यह सिद्ध युवराज मित्रावसु किसी कार्यवश आप को मिलने के लिये आए हैं।

**नायक**—प्रिये! अब तू अपने घर जा। मैं भी मित्रावसु को मिलकर समझो शीघ्र ही आया।

(नायिका चेटी के साथ चली जाती है। तब मित्रावसु प्रवेश करता है)

**मित्रावसु**—बिना शत्रु को मारे हट्टा कट्टा मैं निर्लज्ज होकर जीमूतवाहन को कैसे कह दूँ कि 'तेरा राज्य शत्रु ने छीन लिया है' ॥१४॥

तथाप्यनिवेद्यायुक्तरूपं गमनमिति निवेद्य गच्छामि ।

[ उपसर्पति ]

नायकः—मित्रावसो ! इह आस्यताम् ।

[ मित्रावसुरुपविशति ]

नायकः—ससंरम्भ इव लक्ष्यसे ।

मित्रावसुः—क. खलु मतङ्गहतके संरम्भः ।

नायकः—किं कृतं मतङ्गेन ।

मित्रावसुः—स्वनाशाय युष्मदीयं किल राज्यमाक्रान्तम् ।

---

इति, **जीमूतवाहनस्य**=[ सम्बन्धसामान्ये षष्ठी ] जीमूतवाहनायेत्यर्थ , **कथमिव**=केन प्रकारेण [ इवशब्दोऽत्र वाक्यालङ्कारे ], **कथयिष्यामि**=सूचयिष्यामि । अहं स्वसुहृद्राज्यापहर्तुर्मतङ्गस्य हनने समर्थोऽस्मि, परं तादृशोऽपि तद्धननोद्योगमकृत्वा केवलं सुहृदे तद् राज्यापहाररूपमप्रियवृत्तान्तं निवेदयितुमिच्छामि, तदेतन्ममात्यन्तमनुचितं लज्जाकरं चेति भाव । आर्या छन्द ॥१४॥

**तथापीति**—यद्यपि प्रतीकारशून्यस्य ममाप्रियनिवेदनमनुचितं तथाप्यसूचितं स स्वयमपि कथमिव प्रतीकाराय प्रवर्तेतेति भाव । **अनिवेद्य**=मतङ्गकृता राज्याक्रान्तिम् असूचयित्वा, **अयुक्तरूपम्**=अत्यन्तमनुचितम्, [ युक्तशब्दात् प्रशमाया रूपम् ] । **उपसर्पति**=जीमूतवाहनस्य समीपमुपगच्छति । **ससंरम्भ इति**—**ससंरम्भः**=संरम्भेण कोपेन सह वर्तत इति ससंरम्भ [ 'संरम्भ सम्भ्रमे कोपे' इत्यमर ], स्फुरदोष्ठादिना कोपाविष्ट इवेत्यर्थ । **लक्ष्यसे**=प्रतिभासि । **क. खल्विति**—घोतयमि मतङ्गे शत्रौ को

---

तो भी बिना कहे जाना उचित नहीं इसलिये कह कर ही जाता हूँ ।

( पास जाता है )

**नायक**—मित्रावसो ! यहाँ बैठ जाइए ।

( मित्रावसु बैठ जाता है )

**नायक**—कुछ घबराए हुए से लगते हो ।

**मित्रावसु**—भला दुष्ट मतङ्ग से क्या घबराना ?

**नायक**—क्यों, मतङ्ग ने क्या किया ?

**मित्रावसु**—अपना नाश कराने के लिये तुम्हारे राज्य पर आक्रमण कर बैठा है ।

**नायकः**—[ सहर्षमात्मगतम् ] अपि नाम सत्यमेतत् स्यात् ।

**मित्रावसुः**—तदुच्छित्तये मामाज्ञापयतु कुमारः । किं बहुना,

ससर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।

---

नामास्माकं सरम्भः, सत्त्वकुद्धैरप्यस्माभिर्हेलयैव विनाश्य —इति भाव । मतङ्गहतकशब्दे 'कुत्सितानि कुत्सनै' इत्यनेन समास ।

नायकोऽक्षौ **सहर्ष**मिति। शमप्रधानस्य जीमूतवाहनस्य परेण नश्वरस्वराज्याक्रान्तेः श्रवणमेव हर्षहेतु । **अपि नामे**ति–यद्येतद् मम राज्यापहारवृत्तं सत्यं भवेत्–तर्हि किमत पर पितृसेवापरायणस्य मम वाञ्छनीयमिति जीमूतवाहनस्य हृदयम् । **तदुच्छित्तये**=तस्य–मतङ्गस्य, उच्छित्तये–विनाशाय ।

**संसर्पद्भि**रिति—**एते**=युद्धवीरा ,**सिद्धा** =सिद्धाख्यदेवजातिविशेषा , **तव**=भवतो जीमूतवाहनस्य, **वचनम्**=आज्ञाम्, **प्राप्य**=अभिगत्य, **सद्यः**=तत्कालमविलम्ब्यैव, **समन्तात्**=चतसृषु दिक्षु, **संसर्पद्भिः**=सञ्चरद्भि –उड्डीयमानैरित्यर्थ ,**कृतसकलवियन्मार्गयानैः**=कृतम्–विहितम् सकलेषु समग्रेषु, वियत –आकाशस्य, मार्गेषु–पथिषु, यानम्–संचार , यैस्तादृशै , **विमानैः**=व्योमयानै [ 'व्योमयान विमानोऽस्त्री' इत्यमर ], **प्रावृषीव**=वर्षास्विव [ 'स्त्रियां प्रावृट् स्त्रिया भूम्नि वर्षा ' इत्यमरः ], **स्थगितरविरुचः**=स्थगिता –आच्छादिता , रवे –आदित्यस्य, रुचः–कान्तय –किरणा इति यावद् यत्र तादृशस्य, **वासरस्य**=दिनस्य, **श्यामताम्**=कृष्णताम्–प्रकाशाच्छादनेनान्धकारमयत्वमिति भाव , **कुर्वाणाः**=उत्पादयन्त , सन्त [ वर्षासु जलधरैरिव विशालकायैर्व्योमयानै सूर्यमाच्छाद्य दिवसमन्धकारमय सम्पादयन्त इति भाव ], **इतः**=अस्मात् प्रदेशात्, **युद्धाय**=त्वद्राज्याक्रमणकारिणा मतङ्गेन सह संग्राम कर्तुम् [ 'क्रियार्थोपपदस्य च कर्मणि स्थानिन.'–इत्यनेन चतुर्थी ], **यातास्थ**=प्रस्थिताश्च [ याता इत्यत्र 'आदिकर्मणि क्त कर्तरि च' इत्यादिकर्मणि क्त; यातुमारब्धा इत्यर्थः ],

---

**नायक**—( प्रसन्न होकर मन में ) क्या यह बात सच होगी !

**मित्रावसु**—कुमार ! मुझे उसके नाश करने की आज्ञा दें । अधिक क्या, ज्यों ही यह सिद्ध लोग यहाँ से आप की आज्ञा पाकर अपने विमानों में सारे आकाश मार्ग में दौड़ते हुए और सूर्य की किरणों को रोक कर दिन

एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धं चोद्वृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम् ॥१५॥

अथवा किं बलौघैः ।

एकाकिनापि हि मया रभसावकृष्ट-
निस्त्रिंशदीधितिसटाभरभासुरेण ।

---

**उद्वृत्तशत्रुक्षयभयविनमद्राजकम्** = उद्वृत्तस्य – उच्छृङ्खलस्य, शत्रोः –मतङ्गस्य, क्षयात्–विनाशात्, भयेन–भीत्या हेतुना, विनमत्–विशेषेण प्रह्वीभवत्–विनम्रतया त्वदधीनतां स्वीकुर्वदित्यर्थः, राजकम्–राज्ञां समूहः, तत्र तादृशम्, **ते**=भवतः, **स्वराज्यम्**=स्वशासनम्, **सिद्धं च**= निष्कण्टकं सम्पन्नं च । त्वदाज्ञागमने विलम्बः, शत्रुपराजये तु न कश्चन विलम्बो भविष्यतीति भावः । यानाश्च सिद्धं चेति चकारद्वयं यानस्वराज्यसिद्ध्योर्यौगपद्यं सूचयति, तेन समुच्चयालङ्कारः । अत्र यानसिद्ध्योः कारणकार्ययोः सहत्वबोधनेनाक्रमातिशयोक्तिमूलः । स्रग्धरावृत्तम् । लक्षणमुक्तं प्राक् ॥१५॥

**अथवेति** पक्षान्तरे । **बलौघैः**=बलानाम्–सैन्यानाम्, ओघैः–समूहैः, **किम्**=किं प्रयोजनम् । एकाक्येवाहं तस्य मतङ्गस्य निहन्तुं प्रभवामीति भावः ।

तदेव समर्थयते–**एकाकिनेति** । **हि**=यतः, **आजौ**=संग्रामे [ 'समित्याजिसमिद्युधः' इति युद्धनामस्वमरः ], **रभसावकृष्टनिस्त्रिंशदीधितिसटाभरभासुरेण**=रभसेन–वेगेन हर्षेण वा [ 'रभसो वेगहर्षयोः' इति विश्वः ], अवकृष्टः –कोशान्निष्कासितः [ 'निष्कासितोऽवकृष्टः स्याद्' इत्यमरः ], निस्त्रिंशः –[ निर्गतस्त्रिंशतोऽङ्गुलिभ्य –इति विग्रहे 'कुगतिप्रादयः' इत्यनेन समासे, 'संख्यायास्तत्पुरुषस्य' इति डच् समासान्तः ] खड्गः [ 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः ], तस्य दीधितयः –किरणाः, सटाः केसरा इव [ उपमितसमासः ] तासां भरः–समूहः, तेन भासुरः –भासमानः, तेन । सिंहपक्षे–रभसेन, अवकृष्टा –विधूननेनेतस्ततो

---

को वर्षाकाल की भाँति अन्धकारमय बनाते हुए युद्ध के लिये निकले त्यों ही आप का राज्य पुनः जीत लिया और सभी राजाओं का समूह उस गर्वित शत्रु के नाश से डरा हुआ आप के आगे झुका ॥१५॥

अथवा सैन्य-समूह की भी क्या आवश्यकता है ?

जैसे अकेला ही सिंह दूर से झपट कर हाथी को मार देता है, वैसे ही दूर से झपटते हुए मुझ अकेले द्वारा ही—जो कि वेग से सोनी हुई म्यान की

आराक्षिपत्य हरिणेव मतङ्गजेन्द्र-
माजौ मतङ्गहतकं हतमेव विद्धि ॥१६॥

**नायकः—**[कर्णौ पिधाय आत्मगतम्] **हहह ! दारुणमभिहितम् ।**

---

विकीर्णा, निस्त्रिंशा -त्रिंशादङ्गुल्यधिकपरिमाणा दीर्घा इति यावत्, दीधितय इव-किरणा-इव, सटा -प्रावास्थकेशा, तासां भरेण-समूहेन, भासुर – शोभमान, तेन, **एकाकिनापि**=असहायेनापि [ 'एकादाकिनश्चासहाये'], **मया**=मित्रावसुना, **आराद्**=दूराद्, **निपत्य**=उत्प्लुत्य [ 'आराद्दूर-समीपयो ' इत्यमर ], **हरिणा**=केसरिणा ['हर्यक्ष केसरी हरि ' इत्यमर ], **मतङ्गजेन्द्रमिव**=मत्तगजमिव ['मतङ्गजो गजो नाग '-इत्यमर । इन्द्रशब्द प्रशंसावचन । 'तस्य प्रशंसावचनैश्च'-इत्यनेन मतङ्गजशब्देन सह समास ], **मतङ्गहतकम्**=दुष्ट मतङ्गम्, **हतमेव**=मारितमेव, **विद्धि**=जानीहि । हनिष्यमाणस्य हतत्वप्रतिपादन हतावाधासाभावसूचनार्थम् । यथैकाकिनाऽपि हरिणाक्रान्तस्य गजेन्द्रस्य प्राणहानिर्निश्चिता तथैवैकाकिना खड्गमात्र-सहायेन मयाक्रान्तस्य मतङ्गजस्य नाशोऽपि निश्चित एवेति भाव । मित्रा-वसुनिष्ठ क्रोध स्थायी व्यज्यते । मतङ्ग आलम्बनम्, तत्कृत जीमूतवाहन-राज्याक्रमणमुद्दीपनम्, परुषोक्तिरनुभाव, गर्वासूयादय संचारिण । उपमालङ्कार । वसन्ततिलका वृत्तम् । तल्लक्षण यथा—'उक्ता वसन्ततिलका तभजा जगौ ग ' ॥१६॥

**कर्णाविति—पिधाय**=अङ्गुलिभ्या कर्णच्छिद्रे निरुध्य । अत्यन्त-दयालोर्जीमूतवाहनस्य शत्रुहननश्रवणेऽप्यसामर्थ्यं कर्णापिधाने हेतु । पिधा-येत्यत्रापिपूर्वाद् दधातेर्ल्यपि 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो ' इत्यादिना श्लोकवार्तिकेन अपिशब्दाकारस्य लोप । **हहहेत्यादि—हहहेति** दैन्यसूचको निपात । **दारुणम्**=अतिकठोरम् । अपराधिनो दण्डप्रदानावसरे ममैवैवं दैन्यप्रकाशनेन कदाचिन्मित्रावसुर्विमनायेतेत्यत आह-अथयेति । एवं तावद् इत्यस्य भणिष्यामीति शेष । **मित्रावसो इति—एतत्**=मतङ्गस्य हननम्, **कियत्**=अत्यन्त स्वादरस्य वीरस्य कृते नातिदुष्करमिति भाव । यदुतर-

---

चमक रूपी सटा-समूह से शोभायमान हो रहा है—युद्ध में दुष्ट मतंग को मारा हुआ समझो ॥१६॥

नायक—(कानों पर हाथ रखकर, मन में) हहह ! बड़ी क्रूरता की बात कही । अच्छा, ऐसे कहता हूँ । (प्रकट में, मुस्कराकर) मित्रावसो !

अथवा एवं तावत् । [ प्रकाशं सस्मितम् ] **मित्रावसो ! कियदेतत् । बहुतरमतोऽपि बाहुशालिनि त्वयि संभाव्यते । किन्तु,**

**स्वशरीरमपि परार्थे यः खलु दद्यामयाचितः कृपया ।**
**राज्यस्य कृते स कथं प्राणिवधक्रौर्यमनुमन्ये ॥१७॥**

**अपिच क्लेशान् विहाय शत्रुबुद्धिरेव मे नान्यत्र ।**

---

मिति—**बाहुशालिनि**=[ बाहुभ्यां शालते शोभत इति बाहुशाली, तस्मिन् ], बाहुशब्दो बाहुबलं पराक्रमं वा लक्षयति, बाहुबलशालिनि पराक्रमशालिनि वेति तदर्थः । **त्वयि**=भवति, **अतोऽपि**=अस्मादपि मतङ्गहननरूपात् कर्मण , **बहुतरम्**=अधिकमुत्कृष्टं कर्म, **सम्भाव्यते** । यद्येवं तर्हि किमर्थं मतङ्गमभिषेचयितुमाज्ञादाने विलम्बस इत्यत आह–किन्तु इति ।

**स्वशरीर**मिति—**य.**=अहं जीमूतवाहन ,**अयाचितः**=अप्रार्थितोऽपि सन्, **कृपया**=करुणया हेतुना प्रेरित , **परार्थे**=परोपकाराय, **स्वशरीरम्**=अत्यन्तप्रियम् आत्मदेहमपि, **दद्याम्**=[ शक्यार्थे लिङ् ] त्यक्तु शक्नुयामित्यर्थः । **खलु**=निश्चयेन, **सः**=अहम्, **राज्यस्य**=क्षुद्रस्य राज्यस्य, **कृते**=निमित्तम्, **कथम्**=केन प्रकारेण, **प्राणिवधक्रौर्यम्**=प्राणिनाम्–जीवानाम्, वधे–हिंसायाम्, क्रौर्यम्–क्रूरताम्, **अनुमन्ये**=अनुजानामि ।

परार्थं प्रिय शरीरमपि त्यक्तुमिच्छुरहं न जातु प्राणिहिंसाहेतु मतङ्गाभिषेचनमनुज्ञातुं शक्नोमीत्यर्थ । अर्थापत्तिरलङ्कारः । आर्या छन्द ॥१७॥

**अपि चेति**—**क्लेशान्**=अविद्या, अस्मिता, राग , द्वेष , अभिनिवेश इत्येतान् योगशास्त्रप्रसिद्धान्, पञ्च क्लेशान् [ 'अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा.' इति योगसूत्रम् । तत्र–अनित्यादिषु नित्यादिबुद्धिरविद्या, अहङ्कारोऽस्मिता, रागद्वेषौ प्रसिद्धौ, अभिनिवेश आसक्ति ], **विहाय**=परित्यज्य, **अन्यत्र**=अन्यस्मिन् कस्मिंश्चित् प्राणिनि वस्तुमात्रे वा, **मे**=मम जीमूतवाहनस्य, **शत्रुबुद्धि**=अयं मम शत्रुरिति ज्ञानमेव, **न**=नास्ति । इति कथमहमशत्रोर्मतङ्गस्य वधमनुजानीयामिति भाव. ।

---

यह क्या बड़ी बात है ? आप जैसे बाहुशाली (बलवान्) पुरुष इससे भी बढ़ चढ़ कर कर दिखा सकते हैं । किन्तु,

मैं, जो दूसरों के निमित्त बिना माँगे ही दया से अपना शरीर भी अर्पण कर सकता हूँ, भला कैसे राज्य के लिये प्राणियों के मारने की क्रूर आज्ञा दे दूँ ॥१७॥

और यह बात भी है कि विषयों के अतिरिक्त अन्य किसी के भी प्रति

यदि तेऽस्मत्प्रियं कर्तुमीहा, तदनुकम्प्यतामसौ क्लेशदासीकृतस्तपस्वी।

**मित्रावसुः**—[ सामर्षं सहासं च ] कथं नानुकम्प्यते, यादृशोऽसावस्माकमुपकारी कृपणश्च।

**नायकः**—[ आत्मगतम् ] प्रत्यग्रकोपाक्षिप्तचेतास्तावदसौ न शक्यते निवर्तयितुम्। तदेवं तावत्। [ प्रकाशम् ] मित्रावसो! उत्तिष्ठ। अभ्यन्तरमेव प्रविशावः। तत्र च त्वां बोधयिष्यामि। संप्रति परिणतमहः। तथाहि—

---

यदीति—**अस्मत्प्रियम्**=मदिष्टम्, अस्मदिति बहुवचनं तु प्राणिमात्रस्येष्टसंपादनमेव मदिष्टमिति सूचनार्थम्। **तत्**=तर्हि, **क्लेशदासीकृतः**=क्लेशानाम्–अविद्यादीनाम्, **दासीकृतः**=दासतां नीत वशीकृत, अनित्यराज्यसुखादिलोलुप इति यावत्, अतएव, **तपस्वी**=शोचनीय ['मुनिशोच्यौ तपस्विनौ' इति विश्व.], **असौ**=मतङ्ग, **अनुकम्प्यताम्**=दयनीयः उपेक्षणीय इति भाव। स्वयमेव क्लेशपराभूतस्य क्लेशनं न वीरोचितमिति भावः। अनेन नायके जीमूतवाहने मैत्र्यादिचित्तपरिकर्मणामुपेक्षाख्यपरिकर्मणः परा प्रतिष्ठा सूचिता। इत्थमपकर्तुं शत्रोरपि नायकमुखादनुकम्पनीयत्वं श्रुत्वा सामर्षो मित्रावसु सोल्लुण्ठमाह—**कथमिति**। विपरीतलक्षणया नायमस्माकमपकारी जात्वनुकम्पनीय, प्रत्युत दण्डनीयः-इति भाव। अपकारातिशयोऽदण्ड्यत्वातिशयश्च व्यङ्ग्य.। **प्रत्यग्रेति**–प्रत्यग्र –अभिनव –अपकार्यपि मतङ्गोऽनुकम्पनीय इति मदुपन्यासेन अधुनैव समुत्पन्न इति भाव, कोपः, तेन, आक्षिप्त–परिक्षुब्धम्, चेत –मन, यस्य तादृश, **असौ**=मित्रावसु, **निवर्तयितुम्**=स्वनिश्चयाद् वारयितुम्, **न शक्यते**=न पार्यते। **तत्**=तस्मात् इममनुनेतु-

---

मेरा द्वेष भाव नहीं है। यदि तुम मुझे प्रसन्न करना चाहते हो तो उस बेचारे विषयों के दास के ऊपर दया करो।

**मित्रावसु**—( क्रोध और हँसी से ) जैसा कि वह हमारा बड़ा उपकारी और दीन है, उस पर क्यों न दया की जाय।

**नायक**—( मन में ) ताजे ताजे क्रोध से इसका मन क्षुब्ध है। इसलिये इसे ठीक मार्ग पर लाना कठिन है। तो ऐसे सही। ( प्रकट में ) मित्रावसो! उठो, अन्दर चलते हैं। वहाँ चलकर तुम्हें समझाऊँगा। अब तो दिन ढल गया है। क्योंकि—

निद्रामुद्रावबन्धव्यतिकरमनिशं पद्मकोशादपास्य-
न्नाशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्व ।
दृष्ट सिद्धै प्रसन्नस्तुतिमुखरमुखैरस्तमप्येष गच्छ-
न्नेक श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रयास ॥१८॥

[ निष्क्रान्तौ ]

इति तृतीयोऽङ्कः ।

---

मिति भाव, **एतम्**=वक्ष्यमाणम्, भणामीति शेष । **परिणतम्**=अवसान प्राप्तम्, सूर्योऽस्तमुपगत इति भाव । दिनपरिणतिं समर्थयते-**तथाहीति** ।

**निद्रामुद्रेति—अनिशम्**=प्रत्यहम्, **पद्मकोशात्**=पद्मानाम्—कमलानाम्, कोशात्—कुड्मलात् [ पद्मस्य—पद्माख्यनिधे, कोशात्—पात्राद्, आगारादित्यपि बोध्यम् ] [ 'पद्मोऽस्त्री पद्मके व्यूहनिधिसख्यान्तरेऽम्बुजे' इत्यमरटीकाया भानुजिदीक्षित, 'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके' इति मेदिनी च ], **निद्रामुद्रावबन्धव्यतिकरम्**=निद्रामुद्रा—अविकासावस्था, तया तस्या वा, अवबन्ध —दलानामन्योऽन्यं दृढसंश्लेष, तस्य, व्यतिकर —सबन्ध, तम्—सकोचमिति भाव [ निद्रा—दान प्र गजागरुकता, मुद्रा—मुद्राचिह्नम्, ताभ्याम्, अवबन्ध —प्रतिबन्ध, तस्य व्यतिकरम्, इत्यपि व्याख्येयम् ], **अपास्यन्**=दूरीकुर्वन्, कमलानि विकासयन्—इति गिरिदत्तार्थ [ याचकेभ्यो पद्मनिधेर्मुखमुद्घाटयन्नित्यपि भाव ], **आशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्व**=आशानाम्—दिशाम् [ 'दिशस्तु ककुभ काष्ठा आशाश्च हरितश्च ता' इत्यमर ], पूर —पूरणमेव—स्वप्रकाशेन व्यापनमेव, एकम्—प्रधानम्, कर्म, तत्र प्रवणै =सलग्नै, निजकरै —स्वकिरणै, प्रीणित —तमोनिवारणेन आनन्दित, अशेष —अखिल, विश्व —ससारो येन तादृश [ आशाया —याचकाना मनोरथस्य, पूर —पूरण सम्पादनमेव, एक कर्म, तत्र प्रवणेन, निजकरेण—स्वहस्तेन, प्रीणित —प्रसादित, अशेष, विश्वो येन तादृश इत्यपि बोध्यम् ], **अस्तम्**=अस्ताचलमपि [ ऐश्वर्यप्रशमपात्यपि बोध्यम् ], **गच्छन्**=प्राप्नुवन्, **सिद्धै**—अणिमाद्यष्टसिद्धिमद्भिर्मुनिभि, [ आप्तमनोरथै-

---

कमल की कली की सकोच रूपी निद्रा का सर्वदा दूर करता हुआ, सब दिशाओं में फैली हुई अपनी किरणों स सारे ससार का आनन्दित करता हुआ और स्तुति क गीत गात हुए सिद्धों से देखा हुआ ( अभिमुख

रित्यपि बोध्यम् ], **प्रसक्तस्तुतिमुखरमुखैः**=प्रसक्ताभिः-उपस्थानसमये प्रस्तुताभिः, स्तुतिभिः-स्तोत्रैः, मुखराणि-शब्दायमानानि, मुखानि येषां तादृशैः सिद्धैः, **दृष्टः**=साक्षात्कृतः, किं च, यस्य **प्रयासः**=प्रातः सायमुदयास्तमयपरिश्रमः वियद्भ्रमणं च, **परहितकरणायैव**=परेषाम्, हितस्य जलवर्षणसस्यपरिपाकादिरूपस्य कल्याणस्य, करणायैव-सम्पादनायैवास्ति, स **एषः**=सर्वलोकप्रत्यक्षः, **एकः**=अनुपमः, **विवस्वान्**=आदित्य एव, **श्लाघ्यः**=स्तुतियोग्यः, अस्तीति शेषः ।

पद्मविकासनेन जगत् सौरभमयं तन्वन् मधुलिहां मधुलेहनावसरं च ददानः, तमोनिवारणेन निखिलं लोकं प्रीणयन्, अतएवारतं गच्छन्नपि सायं *सन्ध्यासमये सिद्धैरुपस्थीयमानः जलवर्षणसस्यपरिपाकादिलोकहितप्रवण* एष भगवान् सूर्यः सर्वेषामपि स्तोतव्य इति भावार्थः । अत्र व्याख्योक्तमार्गेण निद्रामुद्रादिविशेषणसाम्यमहिम्ना-याचकेभ्यो पद्मनिधिकोषमुखमुद्घाटयतः *सकलयाचकमनोरथपरिपूरणप्रवणस्य स्वसकाशात् प्राप्तमनोरथैर्जनैः स्तूय*मानस्य परोपकारपरायणस्य कस्यचिद् उदारस्य धनिनो वृत्तान्तोऽपि प्रतीयते । अत इयं समासोक्तिः । तल्लक्षणं यथा—'परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः'।

अथवा यथा परहितैकव्यसनी भगवान् सूर्यो लोकविश्रमायास्तमयमप्युपयन् सर्वेषां श्लाघ्यः, तथैव हे मित्रावसो ! परोपकारमत्यहमपि मतङ्गेन हृतराज्योऽपि सकलजनश्लाघ्यो भविष्यामि । अतोऽपकुर्वन्नपि मतङ्गो न हन्तव्यः । मद्राज्यहरणेन यदि भवति तस्य कश्चनोपकारस्तर्हि स एव मेऽभिलषणीय-इत्येव प्रस्तुतसूर्यवृत्तान्तात् अप्रस्तुतार्थान्तरप्रतीत्या प्रस्तुताङ्कुरः । तल्लक्षणं यथा—'प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुताङ्कुरः' इति ।

इदमन्यदिह बोध्यम्—यदत्र कविना नायकमुखेन परोपकारैकविवस्वद्वर्णनया आवश्यापरवशस्य जीमूतवाहनस्य नागशिशुरक्षायै गरुडमते स्वशरीरसमर्पणादिभविष्यत्कथानकमपि सूचितम् । स्रग्धरा छन्दः ॥१८॥

इति श्रीमदच्युतानन्दात्मजश्रीपरमेश्वरानन्दशर्मकृतायां प्राज्ञविनोदिन्यां नागानन्दव्याख्यायां तृतीयोऽङ्कः समाप्तः ॥३॥

---

ठाकर आह्वान किया हुआ) यह सूर्य अस्त होता हुआ भी धन्य है, जिसका परिश्रम केवल दूसरों की भलाई करने के लिए ही है ॥१८॥

(दोनों निकल जाते हैं)

# चतुर्थोऽङ्कः ।

[ ततः प्रविशति गृहीतवस्त्रयुगलः काञ्चुकीयः प्रतीहारश्च ]

**काञ्चुकीयः**—

अन्तःपुराणां विहितव्यवस्थः पदे पदेऽहं स्खलितानि रक्षन् ।
जरातुरः संप्रति दण्डनीत्या सर्वं नृपस्यानुकरोमि वृत्तम् ॥१॥

---

अथ कविर्जीमूतवाहनस्य नागशिशुरक्षार्थं स्वशरीरत्यागावसरं प्रस्तावयितुकामः काञ्चुकीयप्रतीहारयोः प्रवेशेन विष्कम्भकमवतारयति—**ततः प्रविशतीति** । **ततः**=जीमूतवाहनस्य मित्रावसुना सहाभ्यन्तरप्रवेशानन्तरम् । **गृहीतवस्त्रयुगल**=गृहीतं वस्त्रयोर्युगलं येन तादृशः । काञ्चुकीयलक्षणं यथा—'ज्ञानविज्ञानसम्पन्नाः स्त्रीसंभोगविवर्जिताः ।

अमत्सरा ये पुरुषाः काञ्चुकीयास्तु ते स्मृताः ॥' इति मातृगुप्ताचार्यः ।
एष एव काञ्चुकीयः कञ्चुकीत्यपि व्यवह्रियते । तदुक्तं भरतेन—

अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥
जरावैक्लव्ययुक्तेन विशेद् गात्रेण कञ्चुकी ॥

**प्रतीहारः**—द्वाररक्षकः ['प्रतीहारो द्वारपालद्वा स्थद्वा स्थितदर्शकाः' इत्यमरः] प्रतिपूर्वाद् हरतेर्घञ् । यद्यपि 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इत्यत्रामनुष्येति पर्युदासात् द्वारपाले वाच्ये प्रतिशब्दे दीर्घो न भवितुमर्हति, तथापि द्वारि वाच्याया दीर्घो भवत्येव, तात्स्थ्यात्ताच्छब्द्यमिति प्रतीहारस्योपि प्रतीहार इत्युच्यते ।

**अन्तःपुराणामिति**—अन्तःपुराणाम्=अन्तःपुरम्—राजस्त्रीणाम्-

---

( तत्पश्चात् वस्त्रों का जोड़ा लिये काञ्चुकीय और
प्रतीहार का प्रवेश )

**काञ्चुकीय**—अन्तःपुर का प्रबन्ध करता हुआ, बुढ़ापे के मारे डण्डे के सहारे पद पद पर अपने आपको ठोकरों से बचाता हुआ, अब मैं बिल्कुल राजा के चरित्र का अनुकरण करता हूँ जो कि अन्तःपुर (रानियों अथवा नगरों) की व्यवस्था करता है और दण्डनीति द्वारा—स्थान स्थान पर आपत्तियों (अथवा कर्तव्य-च्युति) से बचाता है ॥१॥

**प्रतीहार**—आर्य ! क नु खलु भवान् प्रस्थितः ।

**काञ्चुकीय**—आदिष्टोऽस्मि देव्या मित्रावसोर्जनन्या । यथा—कञ्चुकिन् ! त्वया दशरात्रं यावन्मलयवत्या जामातुश्च

---

गारम्, तेषाम् राजावरोधानाम् । [ जातौ बहुवचनम् ] ['स्त्र्यगार भूभुजा मन्त पुर स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च' इत्यमर ], **विहितव्यवस्थ**=विहिता—कृता, व्यवस्था—व्यवस्थान प्रबन्ध इति यावत्, येन तादृश , अन्त पुरचारिणा चेटीषण्ढवामनादीना यथायथ कर्तव्यनिर्देशक इत्यर्थ । [ राजपक्षे—पुराणाम्=नगराणाम्, अन्त =अभ्यन्तरे, विहितव्यवस्थ =विहिता—सम्पादिता, व्यवस्था—वर्णाश्रमाचारमर्यादा येन तादृश ] **संप्रति**=इदानीम्, **जरातुरः**=जरया वार्धक्येन, आतुर —निर्बल ,सन्, **दण्डनीत्या**=दण्डस्य काष्ठयष्टे , नीत्या—नयनेन अवलम्बनेन [ राजपक्षे—दण्डनीति =प्रजाशासन नीति —अपराधिना दण्डदानादि तया] **पदे पदे**=प्रतिपद प्रतिचरणन्यासम्, **स्खलितानि**=विषमभूमौ पादस्खलनानि [ राजपक्षे—पदे पदे=कर्तव्यार्थेषु, स्खलितानि, अधिकारिणा प्रजाना च प्रमादमभवान् दोषान् ], **रुन्धन्**=निवारयन्नित्यर्थ , सन्, **अहम्**=काञ्चुकीय , **नृपस्य**=राज्ञ , **सर्वम्**=कृत्स्नम् **वृत्तम्**=आचार व्यवहार वा, **अनुकरोमि**=राजसदृशो भवामीत्यर्थ । यथा राजा पुरेषु व्यवस्था विधत्ते यथा वा स दण्डनीत्या प्रजानामधिकारिणा प्रमादसभाव्यानि स्खलितानि निरुन्धे, तथैवाहमपि—अन्त पुरेषु व्यवस्था विदधे, दण्डनीत्या [दण्डधारणेन] चात्मन स्खलितानि विषमप्रदेशेषु चरणन्यासात् निरुन्धे । अतोऽहमिदानीं सर्वथा राजतुल्योऽस्मि—इति भाव । उपमालङ्कार ।

पूर्वार्धमस्येन्द्रवज्रयोत्तरार्धं चोपेन्द्रवज्रया सकीर्णमित्युपजातिवृत्तमिदम् । इन्द्रवज्रोपेन्द्रवज्रयोर्लक्षण यथा—

स्यादिन्द्रवज्रा यदि तौ जगौ ग उपेन्द्रवज्रा जतजास्ततो गौ ।
अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता ॥१॥

**आर्येति**—**प्रस्थितः**=चलितु प्रवृत्त [ आदिकर्मणि क्त. कर्तरि च ] । **आदिष्ट इत्यादि**—दशाना रात्रीणा समाहारो दशरात्रम् । [ 'अह सर्वैक देशसख्यातपुण्याच्च रात्रे' इत्यनेनाच् प्रत्यय । 'सख्यापूर्वं रात्र क्लीबम्'

---

**प्रतीहार**—आर्य ! आप किधर जा रहे हैं ?

**काञ्चुकीय**—मित्रावसु की माता रानी जी ने मुझे आज्ञा दी है कि

रक्तवासांसि नेतव्यानीति। कुत्र प्रथमं गच्छामि। राजसुता च श्वशुरकुले वर्तते। जीमूतवाहनोऽपि युवराजेन मित्रावसुना सह समुद्रवेलां द्रष्टुमद्य गत इति मया श्रुतम्। तन्न जाने किं मलयवत्याः समीपं गच्छाम्युताहो जामातुरिति।

प्रतीहारः—आर्य! वरं राजपुत्र्याः समीपगमनम्। तत्र हि कदाचिदियत्या वेलया जामाता प्रत्यागतो भविष्यति।

काञ्चुकीयः—सुनन्द! साधूक्तम्। भवता पुनः क्व गम्यते।

प्रतीहारः—अहमपि महाराजविश्वावसुना समादिष्टः। यथा—सुनन्द! गच्छ। मित्रावसुं ब्रूहि—अस्मिन् दिवसे प्रतिप-

---

इति क्लीबत्वम्, अत्यन्तसंयोगे द्वितीयैकवचनम्], समुद्रवेलाम्=समुद्रस्य वेलाम्—जलक्षोभम्—हिन्दीभाषाया 'ज्वार' इति शब्देन व्यपदिश्यमानम्। जामातु=जीमूतवाहनस्य। सम्बन्धसामान्ये षष्ठी। मलयवत्या इत्यत्रापि सैव। कुत्र मलयवत्या जामातुर्वान्तिके। प्रथमम्=पूर्वम्, न जाने=न निश्चेतुमर्हामीति भाव। आर्येत्यादि—इयत्या वेलया=यावान् कालस्तव मलयवत्या अन्तिके गमने व्यत्येति तावता कालेनेत्यर्थः [करणे तृतीया], प्रत्यागतः=प्रतिनिवृत्त, समुद्रवेलादर्शनत इति शेष। सुनन्देति—सुनन्देति प्रतीहारस्य नाम। साधूक्तम्=मलयवतीसकाश गन्तव्यमिति यत्त्वयोक्त तत्साधु—सम्यगिति भाव। पुन शब्दस्त्वर्थे। अहमपीत्यादि—प्रतिपदुत्सवे—प्रतिपदि जायमाने कस्मिंश्चिदुत्सवविशेषे। स्थालीपाकाख्य कर्मविशेष प्रतिपदुत्सव इति तु श्रीशिवराम। क्वचित्तु 'दीपप्रतिपदुत्सवे' इति पाठ। प्रतिपदि क्रियमाणो दीपप्रदानोत्सव इति तदर्थ। 'मलयवत्या' 'जामातु'श्चेति षष्ठीद्वय सम्बन्धसामान्ये। मलयवत्यै

---

"कञ्चुकिन्! तू दस रात्रि तक जमाई और मलयवती के लिये लाल कपड़े ले जाया कर"। पहले कहाँ जाऊँ? राजकुमारी तो सुसराल में है और सुना है कि आज जीमूतवाहन भी युवराज मित्रावसु के साथ समुद्र की रौनक देखने गया है। इसलिये समझ में नहीं आता कि मलयवती के पास जाऊँ या जमाई के?

**प्रतीहार**—आर्य! राजकुमारी के पास जाना ठीक है। सम्भव है, वहाँ इतनी देर तक जमाई लौट ही आया हो।

**काञ्चुकीय**—सुनन्द! ठीक कहा। भला आप कहाँ जा रहे हो?

**प्रतीहार**—मुझे भी महाराज विश्वावसु ने आज्ञा दी है कि "सुनन्द!

दुत्सवे मलयवत्या जामातुश्चैतदुत्सवानुरूपं किंचिदागत्य निरूपयति। तद्गच्छतु राजपुत्र्याः सकाशमार्यः। अहमपि मित्रावसो राह्वानाय गच्छामि।

[निष्क्रान्तौ]

विष्कम्भकः।

[ततः प्रविशति नायको मित्रावसुश्च]

नायकः—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः।

जामात्रे चोपहारं प्रदातुमिति तदभिप्रायः। **एतदुत्सवानुरूपम्**=एतदुत्सवोचितम्, **निरूपयति**=बोधयति-निश्चिनोति वा। एतस्मिन् प्रतिपदुत्सवे जामात्रे मलयवत्यै चोत्सवानुरूपं कतम उपहारो देय इति चिन्तनार्थं मित्रावसुं गृहीतिं समस्तप्रघट्टकार्थः। **निष्क्रान्तौ**-काञ्चुकीयप्रतीहारौ। **विष्कम्भकः**-तल्लक्षणं यथा—वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः॥

अयं च विष्कम्भको केवलमध्यमपात्रप्रयोजितत्वाच्छुद्धः।

परोपकारव्यसनी नायको वने परोपकारावसरालाभमेव तद्दोषत्वेन वर्तयति—शय्येति। **शाद्वलम्**=शादो बालतृणं विद्यतेऽस्मिन्निति शाद्वलम्, बालतृणैर्हरितो भूप्रदेशः ['शाद्वलः शादहरिते शादौ जम्बालघासयोः' इति चामरः, 'नड्शादाड्ड्वलच्']। **शय्या**=शयनोचितं तल्पम्, अस्तीति शेषः। एवमन्यत्रापि शेषकल्पना कर्तव्या। **शुचिशिला**=शुचिः-निर्मला, शिला-

जा। मित्रावसु को कह कि आकर इस अमावस्या के उत्सव के दिन मलयवती और जमाई को भेंट देने योग्य किसी वस्तु का निश्चय कर लें"। तो आप राजकुमारी के पास जाएं और मैं भी मित्रावसु को बुलाने जाता हूँ।

(दोनों चले जाते हैं)

विष्कम्भक।

(तत्पश्चात् नायक और मित्रावसु का प्रवेश)

नायक—हरी हरी घास बिछौना है, आसन के लिये स्वच्छ शिला है, रहने के लिये वृक्षों की छाया है, पीने के लिये झरनों का ठण्डा पानी है, खाने

इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥२॥

**मित्रावसुः**—[ऊर्ध्वमवलोक्य] कुमार ! त्वर्यतां त्वर्यताम् ।

---

प्रस्तरपट्टिका, **आसनम्**=उपवेशनम् [ आस्यतेऽस्मिन्निति बाहुलकाद् अधिकरणे ल्युट् ], **द्रुमाणाम्**=वृक्षाणाम्, **अध**=अध प्रदेश , **सद्म**=छायाबहुलत्वाद् गृहम्, **शीतम्**=शीतलम्, **निर्झरवारि**=निर्झराणाम्–निरन्तर प्रवहता स्रोतसाम्, वारि–जलम्, **पानम्**=पेयम् [ पीयत इति पानम्, कर्मणि ल्युट् बाहुलकात् ], **कन्दा**=मूलानि, **अशनम्**=भोज्यपदार्थ , [ अत्रापि कर्मणि ल्युट् ], **मृगा**=वन्यपशव , **सहायाः**=सहचारिण , सन्तीति शेष । **इति**=एव पूर्वोक्तेन प्रकारेण, **अप्रार्थितलभ्यसर्वविभवे**= अप्रार्थित –कस्मादप्ययाचित –याञ्चालाघवमस्वीकृत्यापीति भाव , लभ्य –लब्धु शक्य , सर्व –सकल , विभव –शयनासनादिर्जीवनोचिता सामग्री यत्र तादृशेऽपि, **दुष्प्रापार्थिनि**=दुष्प्रापा –दु खेन प्राप्तु शक्या [ आप्नोते खल्, दुष्प्राडुपसर्गौ ] अर्थिन –याचका [ अर्थाच्चासन्निहिते–इतानि ] यत्र तादृशे, **वने**=अरण्ये, **अयम्**=अयमेव, **एक**=केवल , दोष , यद्, अत्र, परोपकारव्यसनिभिर्जनै , **परार्थघटनावन्ध्यै**=परेषाम्–इतरेषाम्, अर्थिनाम्, अर्थस्य–अभिलषितस्य वस्तुन , घटना-सम्पादनम्, तया वन्ध्यै –शून्यै , परोपकारशून्यैरिति भाव , **वृथा**=व्यर्थमेव, **स्थीयते** । तिष्ठतेर्भावे लट । यद्यपि वने अन्यत् सकलमपि जीवनोपकरणमयाचितमुपनत भवति, तथापि याचकजनाभावाद् परोपकारो नैवात्र कर्तुं पार्यते । त विना च जीवन व्यर्थमेव । तदुक्तमभियुक्तै —'अवन्ध्य दिवस कुर्याद् दानाध्ययनकर्मभि ' । स एव याचकजनाभाव एव वनस्य दोष इति भाव । इत क्वापि परोपकारप्रसक्ते देशे चलितव्यमिति प्रस्तुतेऽप्रस्तुतवनदोषोपन्यासादप्रस्तुतप्रशसा । अत्र स्थानवैयर्थ्यस्य परार्थघटनावन्ध्यत्वेन, तस्य च दुष्प्रापार्थितया समर्थनात् काव्यलिङ्गम् । अप्रार्थितेत्यादि विशेषण वनस्य सेव्यत्वे साभिप्रायमिति परिकरश्च । वृत्त शार्दूलविक्रीडितम् ॥२॥

**कुमारेत्यादि**—**त्वर्यताम्**=समुद्रवेला प्रतीति शेष ।

---

क लिये कन्द मूल हैं और साथ के लिए मृग हैं । इस प्रकार वन में बिना माँगे ही सब सम्पत्ति मिल जाती है । केवल एक दोष है । वह यह कि याचकों के न होने से परोपकाररहित जीवन वृथा ही बिताना पड़ता है ॥२॥

**मित्रावसु**—( ऊपर देखकर ) कुमार ! जल्दी करो, जल्दी करो । अथवा समुद्र के उद्वेलित होने का समय हो गया ।

**समयोऽयं चलितुमम्बुराशेः।**

**नायकः**—[आकर्ण्य] **सम्यगुपलक्षितम्।**

उद्गर्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धत
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति ॥३॥

---

**समय** इति—अयमम्बुराशेः समुद्रस्य चलितुम् वीचिरूपेणोच्छलितुम्, समयः [ कालसमयवेलासु तुमुन् ] समुद्रे वीचीनामुत्थानस्यैष एव समय इति भावः। अथवा अम्बुराशेरित्यस्य वेलामिति शेषः, अम्बुराशेर्वेलाम् (तटम्) चलितुमयं समय इति वाक्ययोजना।

मित्रावसुप्रोक्तं समर्थयते—**उद्गर्जदिति**। **उद्गर्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः**=उद्गर्जन्तः—उच्चैः शब्दायमानाः, जलकुञ्जरेन्द्राः—जलहस्तिनः समुद्रजलजीवविशेषाः [ प्रशस्ताः कुञ्जराः कुञ्जरेन्द्राः, इन्द्रशब्दोऽत्र प्रशस्तवाचकः, प्रशंसावचनैश्चेत्यनेन समासः, जलानां कुञ्जरेन्द्राः जलकुञ्जरेन्द्राः—इति विग्रहः ] तैः [ कर्तृभिः ] रभसेन—वेगेन, आस्फालाः—जलताडनानि, तेषाम्, अनुबन्धः—सातत्यम्, तेन उद्धतः—प्रचण्डः। अतिमहानिति भावः [ क्वचित्तु—अनुबद्धोद्धत इति पाठः। तैः—आस्फालैः, अनुबद्धः—सम्बद्धः, अत एव उद्धत इति च तद्व्याख्यानम्। अथवा अनुबद्धमिति भावक्रान्तं मत्वा पूर्ववद् व्याख्येयम्], **सर्वाः, पर्वतकन्दरोदरभुवः**=पर्वतकन्दराणाम्—गिरिगुहानाम्, उदरभुवः—मध्यप्रदेशान्, **प्रतिध्वानिनीः**=प्रतिशब्दयुक्ताः [ प्रतिध्वननं प्रतिध्वानः, स आसामस्तीति प्रतिध्वानिन्यस्ताः—इति विग्रहः, अत इनिठनौ ], **कुर्वन्**=विदधत्, **श्रुतिपथोन्माथी**=कर्णेन्द्रियोद्वेजकः [ श्रुतेः पन्था इति श्रुतिपथः, तमुन्मथ्नातीति श्रुतिपथोन्माथी ], **अयम्**=श्रूयमाणः, **ध्वनिः**=शब्दः, **यथा**=येन प्रकारेण, **उच्चैः**=अतितारं यथा स्यात्तथा, **उच्चरति**=उद्गच्छति—गगनमार्गमप्युल्लङ्घ्य गच्छ-

---

**नायक**—( सुनकर ) आप ने ठीक पहचाना।

गरजते हुए बड़े बड़े जलहस्तियों की टक्करों के (शब्द के) साथ मिलकर बढ़ी हुई यह ध्वनि पर्वतों की सभी कन्दराओं को अन्दर से गुंजाती हुई कान फाड़ने वाला ऊँचा शोर कर रही है। इसलिये प्रतीत होता है कि शङ्खों के अनन्त समूह को उछालती हुई समुद्र की लहर आने ही वाली है ॥३॥

**मित्रावसुः—कुमार! नन्वागतैव। पश्य—**

कवलितलवङ्गपल्लवकरिमकरोद्गारसुरभिणा पयसा।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति ॥४॥

---

तीति भाव, **तथा**=तेन प्रकारेण, **प्रायः**=मन्ये इति भाव, **इयम्**, **प्रेङ्खद्दसंख्यशङ्खवलया**=प्रेङ्खन्-जलाघातेन इतस्तत प्रचलन्, असङ्ख्य—सङ्ख्यातुमशक्य, शङ्खानाम्—कम्बूनाम्, वलय—समूह, यत्र तादृशी, **वेला**=क्षुभितसमुद्रजलसमूह—उच्छलन्ती वीचिरिति यावत् [ज्वार इति भाषायाम् 'अब्ध्यम्बुविकृतौ वेला' इत्यमरः], **आगच्छति**=तटाभिमुखमायाति [केचित्तु वेला—समुद्रतटम्, आगच्छति—अत्यन्तं सन्निहितेनेत्यर्थ., अन्यथा उच्चैर्ध्वनिरयं न श्रूयेतेति व्याचक्षते]।

यदा समुद्रे वेला—वीचय उद्गच्छन्ति, तदा स्वभावतो महान् ध्वनिरुद्भवति। इदानीमत्रैष महान् ध्वनि श्रूयते, तेनानुमीयते यत् समुद्रे वीचय उत्थिता इति भाव। साधनेन साध्यस्यानुमानाद् अनुमानालङ्कार। यद्यपि 'मन्ये शङ्के ध्रुव प्राय' इत्याद्युक्तया प्राय शब्द उत्प्रेक्षावाचक, तथापि नात्रोत्प्रेक्षा। प्रकृतस्य परात्मना सादृश्यमूलकसम्भावनायामेवोत्प्रेक्षाया स्वीकारात्। एतादृशस्थले—मन्ये इत्यादीनामनुमितिबोधकत्वमेवेति साहित्यविद॰। वाच्यौचित्यादोजस्विनी रचना। वृत्त शार्दूलविक्रीडितम् ॥३॥

**नन्विति**—त्वं ब्रवीषि—आगच्छतीति, इयं त्वागतैव।

आगता वेला वर्णयति—**कवलितेति**। **कवलितलवङ्गपल्लवकरिमकरोद्गारसुरभिणा**=कवलिता—आस्वादिता, लवङ्गानाम्—देवकुसुमाख्यलतानाम्, पल्लवा—किसलयानि, यैस्तादृशा, ये करिण—हस्तिन, मकरा—नक्राश्च ['मकरो निधौ। नक्रे राशिविशेषे च' इति हैम] तेषाम्, उद्गार—मुखनिर्गतवायु, तेन सुरभिणा—सुगन्धिना, पयसा—जलेन, उपलक्षिता [इत्थंभूतलक्षणे तृतीया], **रत्नद्युतिरञ्जिता**=रत्नानाम्—नानाविधसमुद्रमणीनाम्, द्युतिभि—कान्तिभि, रञ्जिता—रूषिता कर्बुरिता, **एषा**=पुरोदृश्यमाना, **समुद्रवेला**, **भाति**=शोभते। अनुप्रासालङ्कार। समुद्रस्य नानाविधरत्नाकरत्व व्यङ्ग्यम्। आर्या वृत्तम् ॥४॥

---

**मित्रावसु**—कुमार! लो, आ ही गई। देखो—

यह रत्नों की ज्योति से चमकती हुई समुद्र की उत्ताल तरंग हाथी और मगरमच्छों द्वारा खाए हुए लौंग के पत्तों की डकारों से सुगन्धित जल से शोभायमान हो रही है ॥४॥

तदेह्यस्माज्जलप्रसरणमार्गादपक्रम्यानेनैवगिरि सानुसमीपमार्गेण परिक्रमावः ।

नायकः—मित्रावसो ! पश्य शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्यचलसानवः ।

मित्रावसुः—कुमार ! नैवामी मलयसानवः । नागानामस्थिसङ्घाताः खल्वेते ।

नायकः—[सोद्वेगम्] कष्टं, किन्निमित्तं पुनरमी सङ्घातमृत्यवो जाताः ।

---

तदिति—तत्=यत समुद्रे महान् जलक्षोभ , तस्मादित्यर्थः । जलप्रसरणमार्गाद्=जलाना प्रसरणस्य मार्ग , तस्माद् , अपक्रम्य=अपसृत्य, गिरिसानुसमीपमार्गेण=गिरे , सानु –शिखरम्, तत्समीपवर्तिना पथेत्यर्थ । परिक्रमावः=गच्छाव । मित्रावसो इति—शरत्समयपाण्डुभि =शरत्समये–शरदृतौ, पाण्डुभि श्वेतवर्णैः , पयोदपटलैः=मेघसमूहै , प्रावृता.=आच्छादिता , एते, मलयसानवः=मलयपर्वतशिखराणि,प्रालेयाचलशिखरश्रियम्=प्रालेयाचल –हिमालयपर्वत , तस्य शिखराणाम्, श्रियम्–शोभाम्, उद्वहन्ति=धारयन्ति । अन्येनान्यस्य शोभाया धारणासभवात् सादृश्ये पर्यवसानान्निदर्शनालङ्कारः । श्वेतवर्णमेघाच्छादिततया हिमालयशिखरश्रीसदृशीं श्रिय धारयन्तीति भाव । नैवेति—नागानाम्=सर्पाणाम्, अस्थिसङ्घाता.=अस्थ्ना सङ्घाता समूहा । कष्टमिति—किन्निमित्तम्=केन हेतुनेत्यर्थ [ 'निमित्तपर्यायप्रयोगे सर्वासा प्रायदर्शनम्' इति वचनान्निमित्तशब्दात् प्रथमा द्वितीया वा बोध्या ] सङ्घातमृत्यवः=सघातस्य समुदायस्य मृत्युर्येषा ते सघातमृत्यव ,समुदायरूपेण युगपत्प्राप्तमरणा इत्यर्थ [ज्ञापकाद् व्यधिकरणपदो बहुव्रीहि ] यदीमे समुदिता युगपच्च न म्रियेरन्, तदा नायम स्थिसघात उपलभ्येत, तथाचैतेषा सघातमृत्युताया कारण मूहीति भाव ।

---

इसलिए, आओ । जल के फैलने के मार्ग से हट कर हम इसी पर्वत की चोटी के समीप मार्ग पर टहलें ।

नायक—मित्रावसो ! देखो, शरद ऋतु के श्वेत बादलों के समूह से ढकी हुई मलयपर्वत की चोटियां हिमालय की चोटियों के समान सुन्दर प्रतीत होती हैं ।

मित्रावसु—कुमार ! यह मलय-पर्वत की चोटियां नहीं हैं । यह तो नागों की हड्डियों के ढेर हैं ।

नायक—(सदमकर) शोक ! भला किस कारण यह ढेरों के ढेर

**मित्रावसुः**—कुमार! कुमार! नैवामी सङ्घातमृत्यवः।

**नायकः**—मित्रावसो! किमन्यत्।

**मित्रावसुः**—श्रूयताम्, पुरा किल स्वपक्षपवनापास्तसागरजलस्तरसा रसातलादुद्धृत्य भुजङ्गमाननुदिनमाहारयति स्म वैनतेयः।

**नायकः**—[सोद्वेगम्] कष्टम्, अतिदुष्करं करोति। ततस्ततः।

**मित्रावसुः**—ततः सकलनागलोकविनाशशङ्किना नागराजेन गरुत्मानभिहितः।

**नायकः**—[सादरम्] किं मां भक्षयेति।

---

**नैवेति**—नेमे नागाः समुदिता युगपद् मृत्युमधिगतवन्त –इति भावः।

**किमिति**—अस्थ्यस्थिसङ्घातस्यान्यत् किं कारणमस्ति, तद् ब्रूहि इति भावः। **पुरेति**—**पुरा**=प्राचीने समये, **स्वपक्षपवनापास्तसागरजलः**=स्वपक्षयोः, पवनेन–वायुना, अपास्तम्–इतस्ततः क्षिप्तम्, सागरस्य, जलम्, येन तादृशः। महाबल इति ध्वनिः। **वैनतेयः**=विनताया अपत्यम् गरुडः [स्त्रीभ्यो ढक्], **रसातलात्**=पातालात्, **भुजङ्गमान्**=सर्पान्, **तरसा**=बलेन, **उद्धृत्य**=ऊर्ध्वं धृत्वा, आनीयेति वा, **अनुदिनम्**=प्रत्यहम्, **आहारयति**=आहारं करोति भुङ्क्ते इत्यर्थः [आहारशब्दात् 'तत्करोति–'इति णिच्], किलेत्यैतिह्ये, इतिहासविद एवमाहुरिति भावः। **कष्टमिति**—**अतिदुष्करम्**=कैरपि अतिदुःखेन कर्तुं शक्यम्, अतिकठोरं कर्मेति यावत्। **ततस्ततः**=तदनन्तरम्, किं जातमिति शेषः। **तत इति**—**सकलनागलोकविनाशशङ्किना**=सकलानां नागलोकानां विनाशम् शङ्कत इति सकलनागलोकविनाशशङ्की तेन। इत्थं गरुडेन प्रत्यहं नैकनागानां भोजनेन नागकुलमचिरात् क्षयमेष्यतीत्येव विभ्यतेति भावः। **वासुकिना**=वासुकिनाम्ना नागराजेन। **गरुत्मान्**=गरुडः, **अभिहितः**=प्रोक्तः निवेदित इति यावत् [अभिपूर्वाद् दधातेः क्तः, दधातेर्हिः]। **किं मामिति**—नागानां विपत्तिमुपश्रुत्य निरतिशयं करुणाक्रान्तहृदयः

---

**मित्रावसु**—कुमार! कुमार! यह ढेरों के ढेर एक संग नहीं मरे।

**नायक**—मित्रावसो! नहीं तो क्या?

**मित्रावसु**—सुनो, पूर्वकाल में गरुड अपने परों की हवा से समुद्र के जल को उछाल कर बड़े वेग से पाताल में से साँपों को निकाल कर हर रोज खाता था।

**नायक**—(शोक से) ओहो! बहुत जुल्म करता था। फिर क्या?

**मित्रावसु**—तो सब नागलोक के नाश के भय से नागों के राजा ने गरुड से कहा—

**नायक**—(आदर से) क्या यह कि 'मुझे खा लो'?

**मित्रावसुः**—नहि नहि ।

**नायकः**—किमन्यत् ।

**मित्रावसुः**—इदमुक्तम्—त्वदभिसंपातसन्त्रासात् सहस्रशः स्रवन्ति भुजङ्गाङ्गनानां गर्भाः । शिशवश्च पञ्चत्वमुपयान्ति । एवं च संततिसमुच्छेदादस्माकं तवैव स्वार्थहानिर्भवेद्, यदर्थमभिपतति भवान् पातालम् । तदेकैकं भुजङ्गमानामनुदिवसं समुद्रतटस्थितस्याहमेव प्रेषयिष्यामीति । प्रतिपन्नं च तत् पक्षिराजेन ।

---

परोपकृतिप्रवणो नायक —'गरुत्मानभिहित' इति मित्रावसुवाक्ये जायमाना 'किमभिहित' इत्याकाङ्क्षामपनोदितुं स्वाशयानुरूपं वाक्याध्याहारं प्रकल्प्य प्रश्नयति—**किमित्यादि**। **प्रथमम्**=सर्वान् नागान् विहाय पूर्वम्, **माम्**=वासुकिनमेव, **भक्षय**, **इति**=एवम्, गरुत्मान् अभिहित, **किम्** इति भाव ।

**नहीति**—'मा प्रथमं भक्षय' इति नोक्तं वासुकिनेति भावः । **किमिति**—तर्हि किमुक्तम् इति भाव । परदु.खासहिष्णोरितोऽन्यद् वचनस्यासंभवादिति नायकस्य हृदयम् । **इदमिति**—**त्वदभिसंपातसन्त्रासात्**=तव-भवतो गरुडस्य, अभिसंपात नागानामुपर्याक्रमणम्, तस्माद् यः संत्रासः-महाभयम्, तस्माद्, **सहस्रशः**=सहस्राणाम्-बह्वीनामिति भावः ['संख्यैकवचनाच्च वीप्सायाम्' इति शस्], **भुजङ्गाङ्गनानाम्**=सर्पस्त्रीणाम्, **गर्भाः**=उदरे गर्भावस्थाया स्थिता सत्त्वा., **स्रवन्ति**=अपरिपूर्णा समयात् प्रागेव बहिरापतन्ति । **पञ्चत्वम्**=मरणम् । **एवमिति**—**एवम्**=सर्पनारीणा गर्भस्रावेण सर्पशिशुविनाशेन च, **अस्माकम्**=सर्पाणाम्, **संततिसमुच्छेदात्**=संतते -वंशस्येत्यर्थं, समुच्छेदात्-प्रध्वंसात्, **तवैव**=भवतो गरुडस्यैव, **स्वार्थहानिः**=स्वार्थस्य-सर्पकर्मकभोजनरूपस्य प्रयोजनस्य, हानि -विघात, भवेत्, प्र यहं नैकनागविनाशेनाचिरादेव समूलमुच्छिन्ने नागकुले तव भोजनाभाव स्यात्,

---

**मित्रावसु**—नहीं, नहीं ।

**नायक**—तो क्या कहा ?

**मित्रावसु**—यह कहा कि—'आप की झपट के डर से नाग स्त्रियों के हजारों ही गर्भ गिर जाते हैं और बच्चे मर जाते हैं । इस प्रकार हमारी सन्तति का नाश होने से तुम्हारे स्वार्थ की ही हानि होगी, जिसके लिये आप पाताल पर आक्रमण करते हो । इसलिये मैं स्वयं ही समुद्र के तट पर आप के लिये एक एक साप प्रति दिन भेज दिया करूँगा'। गरुड ने भी इस बात को मान लिया ।

इत्येकशः प्रतिदिनं विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः ।
यास्यन्ति यान्ति च गताश्च दिनैर्विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥५॥

इति भावः । यदर्थमिति—यदर्थम्=यान् भोक्तुमित्यर्थः, भवान्=गरुडः, पातालम्=नागलोकम्, अभिपतति=आक्रामति । तदिति—तत्=तव भोजनहानिर्न भवेद्, अस्माकं च वंशो नाच्छिद्येत—इति हेतोः, अहम्=वासुकिरेव, अनुदिवसम्=प्रतिदिनम्, समुद्रतटस्थितस्य, तवान्तिके—इति शेषः, भुजङ्गमानाम्=सर्पाणां मध्ये, एकैकम्=एकैकशः-एकमेकं कृत्वा, प्रेषयिष्यामि=प्रहेष्यामि । प्रतिपन्नमिति—तत् च=त्वया नागलोकमाक्रम्य नैकेषां नागानां विनाशो न कर्तव्यः, अहं च तवाहारार्थं प्रत्येकमेकं नागं समुद्रतटे प्रेषयिष्यामि इत्येवं परस्परप्रतिज्ञानम्, पक्षिराजेन=गरुडेन [ राजाहःसखिभ्यष्टच् ], प्रतिपन्नम्=स्वीकृतम् ।

इतीति—इति=पूर्वोक्तप्रतिज्ञानुसारेण, विहितव्यवस्थः=विहिता—कृता, व्यवस्था—नियमः, येन तादृशः, पतगाधिराजः=पतगानाम्—पक्षिणाम्, अधिराजः—ईश्वरः, गरुड इत्यर्थः, प्रतिदिनम्, एकशः=एकैकम्, यान्, अहिपतीन्=नागान् इत्यर्थः, भक्षयति=भुङ्क्ते, तेषाम्=नागानाम्, तुहिनशैलरुचः=[तुहिनशैलः—हिमालयः, तस्य रुगिव रुग् येषां तादृशाः ]हिमालयतुल्यकान्तय इत्यर्थः, अमी=विप्रकृष्टे दृश्यमानाः, अस्थिकूटाः=अस्थ्नाम्, कूटाः — समूहाः, दिनैः=दिवसैः, न तु मासैः, स्वल्पेनैव समयेनेत्यर्थः [ अपवर्गे तृतीया ], विवृद्धिम्=उपचयम्, गताः=प्राप्ताः, यान्ति=गच्छन्ति, प्रत्यहं नागभक्षणादिति भावः, यास्यन्ति च=नागभक्षणनियमस्यानवधित्वाद्—इति भावः । [ कचित्तु— इत्येष भोगिपतिना' इति प्रथमपादे पाठः । तस्य भोगः—सर्पशरीरं स एषामस्तीति भोगिनः—सर्पाः, तेषां पतिः, वासुकिरित्यर्थः ]। तुहिनशैलरुच —इत्यत्र वाचकधर्मोपमानलोपेन लुप्तोपमा । तृतीयपादे 'यास्यन्ति' इति याप्रवृत्ते, तिङ्प्रत्ययस्य

इस प्रकार प्रबन्ध करके गरुड प्रतिदिन एक एक करके जिन साँपों को खाता था, वह हिम से ढके हुए पर्वतों के समान उन्हीं की हड्डियों के ढेर हैं जो भूत, भविष्यत् और वर्तमान काल में दिनों दिन बढते गये, बढते जाते हैं और बढते जाएगे ॥५॥

**नायकः**—कष्टं, रक्षिताः किलैवं नागराजेन पन्नगाः ।
जिह्वासहस्रद्वितयस्य मध्ये नैकापि सा तस्य किमस्ति जिह्वा ।
एकाहिरक्षार्थमहिद्विषोऽद्य दत्तो मयात्मेति यया ब्रवीति ॥६॥

च प्रस्तावे 'गता' इति प्रकृतिप्रत्यययो क्रमो भग्न । अतो भग्नप्रक्रमोऽत्र दोष । 'यास्यन्ति यान्त्ययुरहोभिरनल्पऋद्धिम्' इति तूचित पाठ प्रतिभाति । वसन्ततिलका वृत्तम् । तल्लक्षण यथा—'उक्ता वसन्ततिलका तभजा जगौ ग:' ॥५॥

**कष्टमिति—पन्नगा** =सर्पा । किलेत्यनेन-एकैकनागप्रदानेन नागरक्षाया अलीकत्वं प्रतिपादितम् । तथाहि-गरुडायैककनागप्रेषणेन नागाना सघातमृत्युरेव केवलो निवारित., न त्वत्यन्त विनाश । अत एव नायको नागविनाश सत्वस्य विज्ञाय कष्टमिति हार्दं दु ख प्रकाशयति ।

नायको वासुकिं प्रत्यसूया प्रकाशयति—**जिह्वेति** । **तस्य**=वासुके [परोपकृतिविमुखतया नामाग्रहणम् ], **जिह्वासहस्रद्वितयस्य**=सहस्रद्वयपरिमिताना वागिन्द्रियाणाम् [ जिह्वाना सहस्रयोर्द्वितयम्, तस्येति विग्रह, सहस्रमुखो नागराज इति प्रसिद्धि, प्रतिमुख च जिह्वाद्वयमिति सहस्र द्विगुणयित्वा सहस्रद्वितयस्येत्युक्तम् ], **मध्ये, सा**=तादृशी, **एका, अपि, जिह्वा**=वागिन्द्रियम्, **नास्ति**=न विद्यते, **किम्? यया**=जिह्वया, स वासुकि, **अद्य, मया**=वासुकिना, **एकाहिरक्षार्थम्**=एकस्य, अहे—सर्पस्य, रक्षार्थम्-प्राणरक्षायै, **अहिद्विषः**=सर्पशत्रोर्गरुडस्य [ सम्बन्धसामान्ये षष्ठी । अथवा-कृते इत्यध्याहर्तव्यम् । 'अहिद्विष कृते' इति योजना । अथवा-अहिद्विष इति भयहेतौ पञ्चमी । अहिद्विष सकाशाद् एकाहिरक्षार्थमिति योजना ], **आत्मा**=स्वशरीरम्, **दत्तः**=अर्पित, **इति**=एवम्, **ब्रवीति**=कथयति । व्यर्थं तस्य वासुकेर्जिह्वासहस्रद्वितयम्, येष्वेकतमदपि परोपकृतये न प्रवर्तते—इति भाव । वासुकिं प्रत्यसूया प्राधान्येन व्यज्यते । इन्द्रवज्रावृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ ग' इति तल्लक्षणम् ॥६॥

**नायक**—हाय ! क्या नागों के राजा ने ऐसे साँपों की रक्षा की ? क्या उसकी दो हजार जिह्वाओं में से एक भी ऐसी जिह्वा न थी, जिस से कह देता कि 'मैं आज एक साँप की रक्षा के लिये साँपों के शत्रु ( गरुड ) के लिए अपने आत्म को समर्पण करता हूँ' ॥६॥

आश्चर्यमाश्चर्यम्।

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥७॥

कष्टम्, अनवसानेयं विपत्तिर्नागानाम्। [आत्मगतम्] अपि नाम शक्नुयामहं स्वशरीरदानादेकस्यापि फणभृतः परिरक्षां कर्तुम्।

[ततः प्रविशति प्रतीहारः]

**प्रतीहारः**—आरूढोऽस्मि गिरिशिखरम्। [विलोक्य] अये! मित्रावसुर्जामातुः समीपे वर्तते। यावदुपसर्पामि। [उपसृत्य प्रणम्य] विजयेतां कुमारौ।

---

**आश्चर्यमिति**—द्विरुक्तिरतिशयबोधनार्था।

आश्चर्यहेतुं वक्ति-**सर्वेति**। **मूढाः**—कृत्याकृत्यविवेकशून्याः, **सर्वाशुचिनिधानस्य**=सर्वेषाम्, अशुचीनाम्—विण्मूत्राद्यपवित्रवस्तूनाम्, निधानस्य—कोशरूपस्य, **कृतघ्नस्य**=उत्तमान्नपानादिकृतोपकारनाशकस्य [सायंकाले भोजनाभावे प्रातःकालिकभोजनजन्यां पुष्टिमनादृत्य शुष्यति, किमन्यत्, सर्वदा घृतौदनादिना परिपोष्यमाणमप्येतद् शरीरम्, सकृदपि भोजनालाभे, कार्याक्षमं भवति, न पूर्वभुक्तघृतौदनादि स्मरति युगपदेव कार्यविमुखं भवतीति सत्यमेवेदं कृतघ्नमिति भावः], **विनाशिनः**=विनाशशीलस्य [ताच्छील्ये णिनिः], **शरीरकस्यापि**=क्षुद्रस्य देहस्यापि [कुत्सितं शरीरं शरीरकम्, तस्य, कुत्सायां कन्], **कृते**=पोषणार्थमित्यर्थः, **पापानि**=दुश्चेष्टितानि, **कुर्वते**=विदधति, इत्यहो आश्चर्यमाश्चर्यमिति पूर्वेण सम्बन्धः। अत्र शरीरविशेषणानि तस्य हेयत्वेनासंरक्षणीयत्वाभिप्रायगर्भाणि। अतः परिकरालङ्कारः। अनुष्टुप् छन्दः ॥७॥

**कष्टमिति**—**अनवसाना**=न अवसानं यस्याः सा—अनन्तेत्यर्थः।

---

आश्चर्य! महान् आश्चर्य!

सब प्रकार की गन्दगी के घर, कृतघ्न और नाश हो जाने वाले शरीर के लिये भी मूर्ख लोग पाप करते हैं ॥७॥

हाय! नागों की इस विपत्ति का कोई अन्त नहीं। (मन में) क्या मैं अपने शरीर की भेंट देकर एक भी साँप की रक्षा नहीं कर सकता?

(प्रतीहार का प्रवेश)

**प्रतीहार**—मैं पर्वत की चोटी पर चढ़ आया। (देखकर) अरे! मित्रावसु जमाई के साथ ही है। तो पास जाता हूँ। (पास जाकर प्रणाम करके) कुमारों की विजय हो।

मित्रावसुः—सुनन्द ! किन्निमित्तमिहागमनम् ।

प्रतीहारः—[ कर्णे ] एवम् ।

मित्रावसुः—कुमार ! तातो मामाह्वयते ।

नायकः—गम्यताम् ।

मित्रावसुः—कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे कुतूहलान्न चिरं स्थातव्यम् ।

[ निष्क्रान्तो मित्रावसु प्रतीहारश्च ]

नायकः—यावदहमपि गिरिशिखरादवतीर्य समुद्रतटमवलोकयामि । [ परिक्रामति ]

[ नेपथ्ये ]

हा पुत्तअ सङ्खचूल ! कहं वावादिअमाणो किल अज्ज तुवं मए पेक्खिदव्वो ।

हा पुत्र शङ्खचूड ! कथं व्यापाद्यमानः किलाद्य त्वं मया द्रष्टव्यः ।

---

कुमारेणेति—बहुप्रत्यवाये=बहव , प्रत्यवाया –विघ्ना भयानि वा यत्र तादृशे । हेतुगर्भविशेषणम् । एकाकिना त्वया कौतुकादत्र चिरं न स्थातव्यम्, यतो बहुविघ्नोऽयं प्रदेश इति भाव । हा पुत्रेति—शंखचूडेति सर्पस्य नाम । व्यापाद्यमानः=हन्यमान , गरुडेनेति शेष । मया=त्वज्जनन्या ।

---

मित्रावसु—सुनन्द ! किस कारण यहाँ आए हो ?

प्रतीहार—( कान में ) ऐसी बात है ।

मित्रावसु—कुमार ! पिता मुझे बुला रहे हैं ।

नायक—जाइए ।

मित्रावसु—आप भी कुतूहल से इस सकट भरे स्थान पर बहुत देर न ठहरें ।

( मित्रावसु और प्रतीहार दोनों चले जाते हैं )

नायक—तब तक मैं भी पहाड़ की चोटी से उतर कर समुद्र का दृश्य देखता हूँ ।

( नेपथ्य में )

हा पुत्र शंखचूड ! मैं आज तुझे मरता कैसे देखूँगी ?

**नायकः**—[ आकर्ण्य ] अये ! योषित इवार्तप्रलापः । तद् यावदुपेत्य केयं कुतोऽस्या भयकारणमिति स्फुटीकरोमि । [ परिक्रामति ]

[ ततः प्रविशति क्रन्दन्त्या वृद्धयानुगम्यमानः शंखचूडो गोपायितवस्त्रयुगलः किङ्करश्च ]

**वृद्धा**—[ सास्रम् ] हा पुत्तअ सङ्खचूल ! कहं वावादिज्जमाणो किल अज्ज तुमं मए पेक्खिदव्वो । [ चिबुके गृहीत्वा ] इमिणा मुखचन्देण विरहिदं अन्धआरीभविस्सदि पाआलं ।

हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानः किलाद्य त्वं मया प्रेक्षितव्यः । अनेन मुखचन्द्रेण विरहितमन्धकारीभविष्यति पातालम् ।

**शङ्खचूडः**—अम्ब ! किमेवमतिविक्लवा सुतरामात्मानं पीडयसि ।

**वृद्धा**—[ निर्वर्ण्य पुत्रस्याङ्गान्यामृशन्ती ] हा पुत्तअ ! कहं दे

---

अये इति—**आर्तप्रलापः**=दुःखाक्रन्दनम् । **स्फुटीकरोमि**=निश्चिनोमि । **ततः प्रविशतीति**—**क्रन्दन्त्या**=रुदत्या, **गोपायितवस्त्रयुगलः**=गोपायितम्—गुप्ततया रक्षितम्, वस्त्रयोः—वध्यचिह्नभूतयो रक्तवस्त्रयोः, युगलम्—द्वयम्, येन तादृशः, रक्तवस्त्रयुगलसहितः । **निर्वर्ण्येति**—**निर्वर्ण्य**=दृष्ट्वा । **आमृशन्ती**=स्पृशन्ती ।

---

**नायक**—( सुनकर ) अहो ! यह आर्त्त विलाप तो किसी स्त्री का प्रतीत होता है । तो तब तक पास जाकर 'यह कौन है और इसे किसका डर है' यह विदित करता हूँ । ( घूमता है )

( शंखचूड और कपड़ों के जोड़े को छिपाए हुए नौकर और उनके पीछे रोती हुई बुढ़िया का प्रवेश )

**वृद्धा**—हा पुत्र शंखचूड ! कैसे मैं आज तुझे मारा जाता हुआ देखूँगी ? ( ठोढ़ी पकड़ कर ) इस मुख-चन्द्र के बिना पाताल ( मेरे लिये ) अन्धेरा हो जायगा ।

**शंखचूड**—अम्माँ ! क्यों इस प्रकार व्याकुल होकर अपने आपको अति दुःखी कर रही है ?

**वृद्धा**—( देखकर, पुत्र के शरीर पर हाथ फेरती हुई ) हा पुत्र ! कठोर

अदिट्ठसूरसुउमारं सरीरं णिग्घिणहिअओ गरुलो आहारयिस्सदि। [ कण्ठं गृहीत्वा रोदिति ]

हा पुत्रक ! कथं ते अदृष्टसूर्यसुकुमारं शरीरं निर्घृणहृदयो गरुड आहारयिष्यति ।

**शङ्खचूडः**—अम्ब ! अलमलं परिदेवितेन । पश्य—

क्रोडीकरोति प्रथमं जातं नित्यमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥८॥

---

हेति—पुत्रकेत्यनुकम्पायां कन् । **निर्घृणहृदयः**=निर्घृणम्–निर्दयम्, हृदयं यस्य तादृश , निर्दय इत्यर्थ , गरुड , **अदृष्टसूर्यसुकुमारम्**=[ न दृष्ट , सूर्यो येन तादृश , स चासौ सुकुमारश्च, तम् इति विग्रह ] अदृष्टसूर्यम्-शैशवेन हेतुना निरन्तरगृहस्थित्या अपरिचितसूर्यसंतापम्, सुकुमारम्-अतिशयेन कोमलम्, **ते**, **शरीरम्**, **कथम्**, **आहारयिष्यति**=भोक्ष्यते ? तव कोमलं शरीरं भक्षणानर्हं दयनीयं चेति भाव । **अलमिति**—**परिदेवितेन**=शोकेन, शोकं मा कार्षीरित्यर्थः। शोकाकरणे हेतुमुपन्यस्यति—**पश्येति**।

**क्रोडीकरोतीति**—**यदा**=यदीत्यर्थः, **अनित्यता**=विनाशशीलता, **धात्रीव**=उपमातेव, **जातम्**=उत्पन्नं प्राणिनम्, **प्रथमम्**=जनन्या पूर्वम्, **क्रोडीकरोति**=स्वविषयीकरोति, **पश्चात्**=अनित्यतया धात्र्या च क्रोडीकरणानन्तरम्, **जननी**=उत्पादयित्री माता, **क्रोडीकरोति**=स्वाङ्के निदधाति, **तदा**=तर्हि, **शोकस्य**=मरणजन्यदुःखस्य, **कः क्रमः**=अवसरः, न कोऽपीत्यर्थ. । यदुत्पद्यते तदवश्यं विनश्यतीति प्रकृतेरपरिहार्यो नियम । तन्मात ! ममापि त्वत्कुक्षेरुत्पन्नस्य विनाशो दुष्परिहरः। तदद्य वा विनश्यामि, श्वो वा विनंक्ष्यामि, नात्र किमप्यन्तरम् । एतस्मिन्नपरिहार्ये वस्तुनि न त्वया मनागपि शोको विधेय इति भाव । पद्यमिदं कवयितुः 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥' इति गीतावचनपरिचयमनुमापयति । धात्री वेति पूर्णोपमा । यथा शिशुजन्मनि

---

हृदय वाला गरुड तेरे इस कोमल शरीर को, जिस पर कि सूर्य की झलक भी नहीं पड़ी, कैसे खा जाएगा ? ( गले लगाकर रोती है )

**शंखचूड**—अम्माँ ! इस विलाप से क्या लाभ ? देख—

उत्पन्न होते ही मनुष्य को पहले दाई की भांति अनित्यता गोद में ले लेती है और पीछे माता । इसलिये शोक करने का स्थान कहाँ ? ॥८॥

**वृद्धा**—हा पुत्तअ ! चिट्ठ । मुहुत्तअं पि दाव वदनं दे पेक्खिस्सं
हा पुत्रक ! तिष्ठ । मुहूर्तमपि तावद्वदनं ते प्रेक्षिष्ये ।

**किङ्करः**—एहि कुमाल ! किं तव एताए भणन्तीए । पुत्तसिणेहमोहिदा क्खु एसा ण लाअकज्जं जाणादि ।

एहि कुमार ! किं तवैतया भणन्त्या । पुत्रस्नेहमोहिता खल्वेषा न राजकार्यं जानाति ।

**शङ्खचूडः**—भद्र ! अयमहमागच्छामि ।

**किङ्करः**—[ आत्मगतम् ] आणीदो क्खु मए वज्झसिलासमीवं शङ्खचूलो । जाव एदं वज्झचिण्हं लत्तंसुअजुअलं दइअ वज्झसिलं दशेमि ।

आनीतः खलु मया वध्यशिलासमीपं शङ्खचूडः । यावदेतद् वध्यचिह्नं रक्तांशुकयुगलं दत्त्वा वध्यशिलां दर्शयामि ।

**नायकः**—अये ! इयमसौ योषित् । [ शंखचूडं दृष्ट्वा ] नूनमनेनाप्यस्याः सुतेन भवितव्यं, यदर्थमाक्रन्दति । [ समन्तादवलोक्य ] न खलु पुनः किञ्चिद् भयकारणं पश्यामि । तत् कुतोऽस्य भयं भविष्यतीति किमुपेत्य पृच्छामि । अथवा प्रसक्त

मातरि प्रसववेदनाभिभूतायां सद्योजातं शिशुं तदानीं सन्निहितोपमातैवाङ्के करोति, तथैवोत्पन्नं वस्तुजातमुत्पत्तिसमय एवानित्यतया क्रोडीक्रियते—स्ववशीक्रियत इत्युपमार्थः । उत्पत्तिमद्वस्तुजातमनित्यमित्यर्थस्य भङ्ग्यन्तरेण प्रतिपादनात् पर्यायोक्तम् । अवश्यविनाशिनो मम शोको न कर्तव्य इत्येवं विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशंसा च । अनुष्टुब्वृत्तम् ॥८॥

नायकोक्तौ—अथवेति । अनयोः=शंखचूडराजकिङ्करयोः, आलापः=

**वृद्धा**—हा पुत्र ! ठहर । एक क्षण के लिये तो तेरा मुखड़ा देख लूँ ।

**किङ्कर**—कुमार ! चलो । इसके कहने का तुम्हें क्या ? पुत्र के स्नेह में बावली यह राजा की आज्ञा को नहीं जानती ।

**शंखचूड**—भद्र ! लो, यह चल रहा हूँ ।

**किङ्कर**—( मन में ) शंखचूड को तो मैं वध्यशिला के पास ले ही आया हूँ । तो यह मृत्यु के लाल कपड़ों का जोड़ा देकर इसे वध्यशिला दिखा दूँ ।

**नायक**—अरे ! यह वही स्त्री है । ( शंखचूड को देखकर ) और यही इस का पुत्र होगा, जिसके लिये वह रोती है । ( चारों ओर देख कर ) मैं

एवायमालापः। कदाचिदित एव व्यक्तिर्भविष्यति। तद् विटपान्तरितस्तावच्छृणोमि।

किङ्करः—[ सास्रं कृताञ्जलि ] कुमाल शङ्खचूल ! एशो सामिणो आदेशो त्ति कलिअ ईदिशं पि णिट्ठुलं मन्तीअदि।

कुमार शङ्खचूड ! एष स्वामिन आदेश इति कृत्वेदशमपि निष्ठुरं मन्त्र्यते।

शङ्खचूडः—भद्र ! कथय।

किङ्करः—णाअलाओ वासुई आणवेदि।

नागराजो वासुकिराज्ञापयति।

शङ्खचूडः—[ शिरस्यञ्जलिं कृत्वा सादरम् ] किं मामाज्ञापयति स्वामी।

किङ्करः—एदं लत्तंसुअजुअलं पलिहिअ आलोह वज्झशिलं, जेण लत्तंसुअचिह्णोवलक्खिदं गलुलो गण्हिअ आहालकलणाअ णइस्सदि।

---

परस्पर वाचा विनिमय, प्रसक्त=प्रारब्ध एव। इत एव=अस्मादेवालापात्। व्यक्तिः=विषयस्फुटता। विटपान्तरितः=विटपेन—वृक्षशाखया, अन्तरितः—व्यवहितः। सास्रमिति—कृताञ्जलि—कृता—बद्धा, अञ्जलिर्येन स। इति कृत्वा=इति हेतोरित्यर्थः। मन्त्र्यते=भाष्यते त्वा प्रतीति शेष।

---

यहाँ भय का कारण तो कोई पाता नहीं। तो इस किसका डर है, क्या यह बात पास जाकर पूछूँ ? अथवा बातचीत तो चल ही रही है। शायद इसी से स्पष्ट हो जाए। इसलिये वृक्ष के पीछे छिपकर ही सुनता हूँ।

किङ्कर—( आँसू भरकर हाथ जोड़े ) कुमार शङ्खचूड ! यह स्वामी की आज्ञा है, इसी कारण ऐसी कठोर बात कहने लगा हूँ।

शंखचूड—भद्र ! निःशङ्क कह डालो।

किङ्कर—नागराज वासुकि आज्ञा देता है।

शंखचूड—( अञ्जलि सिर पर रख कर आदर से ) स्वामी मुझे क्या आज्ञा देते हैं ?

किङ्कर—यह लाल जोड़ा पहन कर वध्यशिला पर चढ़ जाओ, जिस से कि इस लाल चिह्न से पहचान कर गरुड़ तुम्हें उठाकर खाने के लिये ले जाए।

एतद् रक्तांशुकयुगलं परिधायारोह वध्यशिलां, येन रक्तांशुकचिह्नोपलक्षितं गरुडो गृहीत्वाऽऽहारकरणाय नेष्यति ।

नायकः—[ सास्रम् ] कष्टमसौ वासुकिना परित्यक्तस्तपस्वी ।

किङ्करः—शङ्खचूल ! गरह एदं । [ वस्त्रयुगलमर्पयति ]

शङ्खचूड ! गृहाणैतत् ।

शङ्खचूडः—[ सादरम् ] उपनय [ इति गृहीत्वा शिरसि स्वाम्यादेशमर्पयति ]

वृद्धा—[पुत्रहस्ते वाससी दृष्ट्वा सोरस्ताडनं] हा वच्छ ! एदं क्खु तं वज्झचिण्हं वसणं, जेण मायदि मे हिअअं । [ मोहमुपगता ]

हा वत्स ! एतत् खलु तद्वध्यचिह्नं वसनं, येन बिभेति मे हृदयम् ।

किङ्करः—आसण्णा क्खु गलुलस्स आगमणवेला । ता लहु अवक्कमामि ।

आसन्ना खलु गरुडस्यागमनवेला । तल्लघ्वपक्रामामि ।

[ निष्क्रान्तः ]

शङ्खचूडः—अम्ब ! समाश्वसिहि समाश्वसिहि ।

---

एतदिति—रक्तांशुकचिह्नोपलक्षितम्=रक्तांशुकेन चिह्नेन उपलक्षितम्-परिचायितम्, अयमेव सर्पशिशुर्वासुकिना मदाहारार्थं प्रेषित –इत्येवं ज्ञातम् । तपस्वी=दीनो दयनीयः । उपनय=देहि । आसन्नेति—आसन्ना=अचिरभाविनी । लघु=शीघ्रम् ।

---

नायक—(आँसू भरकर) हाय ! इस बेचारे को वासुकि ने त्याग दिया ।

किङ्कर—शंखचूड ! यह लो । ( वस्त्रों का जोड़ा देता है )

शंखचूड—( आदर से ) लाओ ( इस प्रकार लेकर स्वामी की आज्ञा को सिर पर धारण करता है )

वृद्धा—( पुत्र के हाथ में कपड़े देख कर छाती पीटकर ) हाय पुत्र ! यह वस्त्र तेरी मृत्यु का चिह्न है, जिनको देखकर मेरा हृदय दहलता है । ( मूर्छित हो जाती है )

किङ्कर—गरुड के आने का समय समीप ही है, इसलिये शीघ्रता से चला जाऊँ । ( चला जाता है )

शंखचूड—अम्मा ! धीरज धर, धीरज धर ।

वृद्धा—[समाश्वस्य, सास्रं] हा जाद ! हा पुत्तअ ! हा मणोरहसदलद्ध ! कहिं तुमं पुणो पेक्खिस्सं । [ कण्ठे गृहीत्वा रोदिति ]

हा जात ! हा पुत्रक ! हा मनोरथशतलब्ध ! कुत्र त्वां पुनः प्रेक्षिष्ये ।

नायक.—[ सास्रम् ] अहो ! नैर्घृण्यं गरुत्मतः । अपि च,

मूढाया मुहुरश्रुसन्ततिमुच कृत्वा प्रलापान् बहून्
कस्त्राता मम पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम् ।
अङ्के मातुरवस्थित शिशुमिम त्यक्त्वा घृणामश्नत
श्चन्तुनैव खगाधिपस्य हृदय वज्रेण मन्ये कृतम् ॥६॥

---

अहो इति—नैर्घृण्यम्=निर्घृणस्य भावो नैर्घृण्यम्, भावे ष्यञ्, निर्दयत्वमित्यर्थः ।

मूढाया इति—मूढाया =भविष्यन्तीं पुत्रविपत्तिं विचिन्त्य व्याकुलचित्ताया, बहून्=अनेकान् प्रलापान्=विलापान्—शोकोद्गारान्, कृत्वा, मुहु =भूयोभूय, अश्रुसन्ततिमुच.=अश्रूणाम्—बाष्पाणाम्, सन्ततिम्—प्रवाहम्, मुञ्चतीति तादृश्या भृश रुदत्या इत्यर्थ । पुत्रक !=हे दयनीय शिशो ! तव=शपत्नूडस्य, त्राता=रक्षक, क. ?, इति=एवमुक्त्वा, दिक्षु=दिशासु, कृपणम्=दीनं यथा स्यात् तथा [ क्रियाविशेषणमिदम् ], असहायतया दैन्यसूचिकामित्यर्थ , दृशम्=दृष्टिम् , क्षिपन्त्याः=प्रेरयन्त्या , मातु , अङ्के=क्रोडे, अवस्थितम्=विद्यमानम् , इमम्=पुरो वर्तमानम्, शिशुम्=नागपोतम्, घृणाम्=करुणाम्, त्यक्त्वा, अश्नत =अशिष्यत ['वर्तमानसामीप्ये वर्तमानवद् वा' इति वर्तमानसमीपे भविष्यति लट्], खगाधिपस्य=

---

वृद्धा—( चेतना में आकर रोती हुई ) हाय बच्चे ! हाय पुत्र ! हाय सैकड़ों मनोरथों से पाये हुए प्यारे बेटे ! फिर तुझे कहाँ देखूँगी । ( गले लगाकर रोती है )

नायक—( आँसू भर कर ) अहो ! गरुड की क्रूरता । क्यों ?—

बहुत विलाप करती हुई, आँसुओं की झड़ी लगाए मूर्च्छित होकर 'मेरे बच्चे ! तेरा कौन रक्षक है ? ' इस प्रकार चारों ओर करुणा की दृष्टि डालती हुई माता की गोद में आश्रय लिए हुए इस बच्चे को निर्दयता से खाते हुए गरुड की चोंच नहीं, किन्तु मेरे विचार में हृदय ही पत्थर का बना हुआ है ॥६॥

---

१ 'उपाश्रितम्' इति क्वचित् पाठ । २ 'कारुण्य करुणा घृणा' इत्यमर ।

शङ्खचूडः—[ अम्बाया अश्रूणि परिमार्जयन् ] अम्ब ! अलमलं वैक्लव्येन । ननु समाश्वसिहि समाश्वसिहि ।

वृद्धा—[ सास्रम् ] पुत्तअ ! कहं समस्ससिमि । किं एकपुत्तो त्ति किदाणुकम्पेण णिवत्ताविदो सि णाअराएण । हा कदन्त-हदअ ! कहं दाणिं तुए णिग्घिणहिअएण एव्वं वित्थिण्णे जीव-लोए मम पुत्तओ एव्व सुमरिदो । सव्वहा हदह्मि मन्दभाइणी । [ मूर्च्छां नाटयति ]

पुत्रक ! कथं समाश्वसिमि । किमेकपुत्र इति कृतानुकम्पेन निवर्तितोऽसि नागराजेन । हा कृतान्तहतक ! कथमिदानीं त्वया

---

खगानाम्—पक्षिणाम्, अधिपस्य—स्वामिनो गरुडस्येति यावत्, चञ्चुः= त्रोटिः, वज्रेण, नैव कृता, किन्तु, हृदयम्, वज्रेण कृतम्=विहितम्, इति, मन्ये=उत्प्रेक्षयामि ।

गरुडस्य त्रोटिर्वज्रनिर्मितत्वाद् वज्रसारेति मिथ्याप्रवादः । वस्तुतस्तु तस्य हृदयमेव वज्रविनिर्मितम्, अत एवास्मिन्सुकुमारे सर्पशिशौ तदेकतन्मायां तन्मातरि च विलपन्त्या न मात्रयापि द्रवतीति भावः । उत्प्रेक्षालङ्कृतिः । शार्दूलविक्रीडितं वृत्तम् ॥६॥

क्वचित्तु—'तव पुत्रक' 'इत्यस्य स्थाने 'मम पुत्रक' इति पाठः । 'त्वयि गरुत्मता भक्षिते मम त्राता को भविष्यति इति तद्भावः । क्वचिद् 'चञ्चु-र्नैव' इत्यस्य स्थाने 'चञ्चवमेण' इति पाठः । स च सुगम एव ।

अम्बेति—वैक्लव्येन=शोकेन ।

पुत्रक ! कथमिति—समाश्वासकारणं नास्तीति भावः । कृतानुकम्पेन= कृता अनुकम्पा येन स तेन । निवर्तितः=परावर्तितः-परित्यक्त इत्यर्थः । कृतान्तहतक=दुष्ट यमराज ! [ 'कुत्सितानि कुत्सनैः' इत्यनेन समासः ]

---

शंखचूड—(माँ के आँसू पोंछता हुआ) अम्माँ ! बस, बस। व्याकुल होने से क्या लाभ । धीरज धर, चेतना कर ।

वृद्धा—(आँसू भर कर) पुत्र ! कैसे धीरज धरूँ । क्या नागराज ने दया करके कि तू इकलौता बेटा है, तुझे छोड़ दिया है ? हाय निगोड़े यम ! क्या आज तुझ क्रूर हृदय वाले को इतने बड़े संसार में से मेरा बच्चा ही याद आया ? मुझ अभागिनी का तो सर्वनाश हो गया । (मूर्च्छित हो जाती है)

---

१ 'चञ्चूश्चञ्चुरुत्तया त्रोटिः' इति हलायुधः ।

निर्घृणहृदयेनैवं विस्तीर्णे जीवलोके मम पुत्रक एव स्मृतः। सर्वथा हतास्मि मन्दभागिनी।

नायकः—आर्तं कण्ठगतप्राणं परित्यक्तं स्वबान्धवैः।
त्राये नैन यदि ततः कः शरीरेण मे गुणः ॥१०॥

तद् यावदुपसर्पामि।

शङ्खचूडः—अम्ब ! संस्तम्भयात्मानम्।

वृद्धा—हा पुत्तअ संखचूल ! दुल्लहो संत्थंभो। जदा एव्व णाअलोअपरिरक्खएण वासुइणा सअं परिच्चत्तोसि तदा को दे परित्ताणं करिस्सदि।

हा पुत्रक शङ्खचूड ! दुर्लभः संस्तम्भः। यदैव नागलोकपरिरक्षकेण वासुकिना स्वयं परित्यक्तोऽसि, तदा कस्ते परित्राणं करिष्यति।

---

अथ शङ्खचूडमातुर्विलापेन जातदयोदयो नायकः स्वमनसि चिन्तयति—आर्तमिति। आर्तम्=विपद्ग्रस्तम्, कण्ठगतप्राणम्=कण्ठगताः—निर्याणाय—आसन्ननिर्गमाः प्राणाः—असवः, यस्य तादृशम्—आसन्नमृत्युम्, स्वबान्धवैः=स्वसम्बन्धिभिः पितृभ्रात्रादिभिः, परित्यक्तम्=नितरामुपेक्षितम्, एनम्=सर्पशिशुं शङ्खचूडम् [अन्वादेश इदशब्दस्यैनादेश ], यदि=चेत्, न त्राये=न रक्षामि, ततः=तर्हि, मे=मम, शरीरेण=विशरणशीलेन देहेन, कः, गुणः=लाभः। न कोऽपीत्यर्थः। आर्तत्राणानुपयोगि शरीरं व्यर्थमेव, अतो मयास्य रक्षणं कार्यमेवेति भावः। आर्तादिविशेषणानि रक्षणीयत्वाभिप्रायगर्भाणि—अतः परिकरः। शरीरेणेति विशेष्यं च विशरणशीलताहेतुकासंरक्षणीयत्वाभिप्रायगर्भमिति परिकराङ्कुरश्च। अनुष्टुब्वृत्तम्॥१०॥

अम्बेति—संस्तम्भय=स्थिरीकुरु, धीरा भवेत्यर्थः। हा पुत्रकेति—संस्तम्भः=स्थैर्यम्, धैर्यमित्यर्थः। यदैवेति—राजैव प्रजा रक्षणाया भवन्ति।

---

नायक—सब बन्धुओं से छोड़े हुए मृत्यु के निकट पहुँचे हुए इस दुःखी को यदि मैं न बचा सकूँ तो मेरे शरीर का क्या लाभ है ? ॥१०॥

तो तब तक पास जाता हूँ।

शंखचूड—अम्मा ! अपने आप को ढाढस दे।

वृद्धा—हा पुत्र शंखचूड़ ! ढाढस बाँधना असम्भव है। जब कि स्वयं नागलोक के रक्षक वासुकि ने ही तुम्हें छोड़ दिया है तो और कौन तेरी रक्षा करेगा !

**नायकः**—[ उपसृत्य ] नन्वयमहम्।

**वृद्धा**—[ ससम्भ्रममुत्तरीयेण पुत्रमाच्छाद्य नायकमुपसृत्य ] गरुल विणदाणन्दण ! वावादेहि मं। अहं दे आहारणिमित्तं परिकप्पिदा।

गरुड विनतानन्दन ! व्यापादय माम्। अहं ते आहारनिमित्तं परिकल्पिता।

**नायकः**—[ सास्रम् ] अहो ! पुत्रवात्सल्यम्।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम्।
अकरुणहृदयः करुणां कुर्वीत भुजङ्गशत्रुरपि ॥११॥

---

वासुकिश्च नो राजा। स एव यदि त्वामुपेक्षेत, तदा कोऽन्यस्त्वां रक्षिष्यति। न कोऽपीति भाव।

'कस्ते परित्राणं करिष्यति' इति वृद्धाया जिज्ञासामाकर्ण्य नायक आह—**नन्वयमहम्** इति। **अयम्**=त्वत्सन्निहित, **अहम्**=जीमूतवाहन, परित्राणं करिष्यामीति शेष। **ननु**=निश्चयेन। भविष्यत्पुत्रविपत्तिसम्भ्रान्ता वृद्धा नायकं गरुडमुपस्थितं मत्वा आह—**गरुडेति**। **विनतानन्दन**=विनताया नन्दन—समृद्धिहेतु पुत्र इति भाव। सम्बुद्धौ रूपम्। विनता गरुडस्य मातेत्यैतिह्यम्। **व्यापादय**=जहि। **अहो**=अपूर्वम्। **पुत्रवात्सल्यम्**=पुत्रे, वात्सल्यम्—प्रेम [वत्सशब्दाल्लचि वत्सल, ततो भावे ष्यञ्]।

**अस्या** इति—**पुत्रस्नेहेन**=पुत्रप्रेम्णा, **इदम्**=अनुभूयमानम्, **अस्याः**=वृद्धाया, **विक्लवत्वम्**=व्याकुलताम्, **विलोक्य**=दृष्ट्वा, **अकरुणहृदयः**=न करुणा यस्य तद् अकरुणम्—निर्दयम् हृदयम्, यस्य तादृश, **भुजङ्गशत्रु**=भुजङ्गानाम्—सर्पाणाम्, शत्रु—शातयिता, गरुड, **अपि**, **करुणाम्**=दयाम्, **कुर्वीत**, इति **मन्ये**=तर्कयामि। कुर्वीतेत्यत्र सम्भावनाया लिङ्। अकरुणस्यापि करुणोदय इति विरोधाभास। आर्यावृत्तम् ॥११॥

---

**नायक**—( पास जाकर ) लो, यह मैं।

**वृद्धा**—( झटपट दुपट्टे से पुत्र को छिपाकर नायक के समीप जाकर ) गरुड ! विनता के लाडले ! मुझे मार। मैं तेरे आहार के लिये भेजी गई हूँ।

**नायक**—( आँसू भर कर ) बलिहारी पुत्रस्नेह की।

मेरी समझ में तो ममता के वश इसकी यह दुर्दशा देख कर कठोरचित्त साँपों का शत्रु ( गरुड ) भी इस पर तरस खायगा ॥११॥

शङ्खचूडः—अम्ब ! अलमलं त्रासेन । न खल्वयं नागशत्रुः । पश्य,

महाहिमस्तिष्कविभेदमुक्तरक्तच्छटाचर्चितचण्डचञ्चुः ।
क्वासौ गरुत्मान् क्व च नाम सोमसौम्यस्वभावाकृतिरेष साधुः ॥१२॥

वृद्धा—हा पुत्तअ ! अहं पुण तुज्झ मरणभीदा सव्वं एव्व गरुलमअं पेक्खामि ।

हा पुत्रक ! अहं पुनस्तव मरणभीता सर्वमेव गरुडमयं पश्यामि ।

---

अम्बेति—अलमलं त्रासेन=त्रासं मा कार्षीरित्यर्थः ।

शंखचूडो मातुर्भ्रमं निरस्यति—महाहीति । महाहिमस्तिष्कविभेदमुक्तरक्तच्छटाचर्चितचण्डचञ्चुः=महान्तः—दीर्घकायाः, अहयः—सर्पाः, तेषां मस्तिष्काणि—शिरांसि, तेषां विभेदः—विदारणम्, तेन मुक्ता—विनिसृता, रक्तस्य—रुधिरस्य, छटा—धारा, तया, चर्चिता—रञ्जिता, चण्डा—भीषणा, चञ्चुः—त्रोटिः, यस्य तादृशः, असौ=महाभयङ्करतया प्रसिद्धः, गरुत्मान्=गरुडः, क्व, च=क्वच, सोमसौम्यस्वभावाकृतिः=सोमवत्—चन्द्रवत्, सौम्ये—शान्तसुन्दरे, स्वभावः—शीलं, आकृतिः—रूपं च यस्य तादृशः, एषः=पुरः स्थितः त्वया भ्रान्त्या गरुडतया ज्ञातः, साधुः=साध्नोति परकार्यमिति साधुः परोपकारशीलः सज्जनः, क्व नाम । एतयोस्तेजस्तिमिरयोरिव महदन्तरमस्ति । अतस्त्वयात्र गरुडभ्रमो न कार्यं इति भावः । विषमालङ्कारः । तल्लक्षणं यथा—'विरूपयोः संघटना या च तद् विषमं मतम्' इति । पूर्वार्धे वाच्यवस्त्वपेक्षा ओजस्विनी रचना मकार—हकार—चकाराणामनुप्रासश्च । उत्तरार्धे च कोमलार्थापेक्षा कोमला रचना सकारानुप्रासश्च । उपजातिश्छन्दः ॥१२॥

पुत्रकेति—एवम्—'त्वत्संरक्षणार्थमेवागात' इति ।

---

शंखचूड—अम्मा ! डर मत । यह नागों का शत्रु (गरुड) नहीं है । देख—बड़े बड़े साँपों के सिर फोड़ने से निकली हुई रुधिर की धारा से सनी कठोर चोंच वाला कहाँ वह गरुड़ ! और कहाँ यह चन्द्रमा के समान सौम्य स्वभाव और आकृति वाला यह श्रेष्ठ पुरुष ! ॥१२॥

वृद्धा—हाय बेटे ! तेरी मृत्यु से डरी हुई मुझको सब कुछ गरुडमय दीख रहा है ।

---

१ 'स्वभावरूपाकृति' इति क्वचित् पाठः ।

नायकः—अम्ब! मा भैषीः। नन्वयमहं विद्याधरः, त्वत्सुतसंरक्षणार्थमेवायातः।

वृद्धा—[ सहर्षम् ] पुत्तअ! पुणो पुणो एव्वं भण।
पुत्रक! पुनः पुनरेवं भण।

नायकः—अम्ब! किमनेन पुनः पुनरभिहितेन। कर्मणैव सम्पादयामि।

वृद्धा—[ शिरस्यञ्जलिं कृत्वा ] पुत्तअ! चिरं जीव।
पुत्रक! चिरं जीव।

नायकः—

ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यावद् विनतात्मजाय।
पुत्रस्य ते जीवितरक्षणार्थं स्वं देहमाहारयितुं ददामि॥१३॥

---

**ममैतदिति**—**अम्ब**=हे मातः, **एतत्**=त्वत्पुत्रेण गृहीतम्, **वध्यचिह्नम्**=वध्यस्य चिह्नभूतं रक्ताशुकयुगलम्, **मम**=मह्यमित्यर्थः [ सम्बन्धसामान्ये षष्ठी ], **अर्पय**=देहि। **यावद्**, **अहम्**, **प्रावृत्य**=अनेन रक्ताशुकयुगलेन आत्मानम् आच्छाद्य, **ते**=तव, **पुत्रस्य**=सुतस्य शंखचूडस्य, **जीवितरक्षणार्थम्**=जीवितस्य-जीवनस्य, रक्षणार्थम्-रक्षणाय, ['अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्'], **विनतात्मजाय**=विनतायाः, आत्मजाय-पुत्राय गरुडाय, **स्वम्**=स्वकीयम्, **देहम्**=शरीरम्, **आहारयितुम्**=भोज्यतां नेतुम्, **ददामि**=अर्पयामि। अत्र दयावीरः प्राधान्येन व्यज्यते। पुत्रविपत्तिविह्वला शङ्खचूडमातालम्बनम्, तद्गतं व्याकुलभिवचनमुद्दीपनम्, तत्पुत्रकृते स्वदेहार्पणमनुभाव। उपजातिर्वृत्तम्॥१३॥

---

**नायक**—माता! डरो मत। मैं विद्याधर हूँ और तेरे पुत्र की रक्षा के लिये ही आया हूँ।

**वृद्धा**—( प्रसन्नता-पूर्वक ) बेटा! बार बार ऐसे कहो।

**नायक**—माता! बार बार कहने से क्या लाभ? करके ही दिखाता हूँ।

**वृद्धा**—( हाथ जोड़कर मस्तक नवाकर ) बेटा! सदा जीते रहो।

**नायक**—माता! यह मौत का चिह्न मुझे दे दो ताकि इसे ओढ़ कर तेरे पुत्र की रक्षा के लिए अपने शरीर को गरुड के प्रति भोजनार्थ अर्पण कर दूँ॥१३॥

वृद्धा—[ कर्णौ पिधाय ] पडिहदं खु एदं । तुमं पि मे संखचूलणिव्विसेसो पुत्तओ एव्व । अहव संखचूलादो अहिअदरो, जो एव्वं बन्धुजणपरिचत्तं मे पुत्तअं सरीरप्पदाणेण रक्खिदुं इच्छसि ।

प्रतिहतं खल्वेतत् । त्वमपि मे शङ्खचूडनिर्विशेषः पुत्रक एव । अथवा शङ्खचूडादधिकतरः, य एवं बन्धुजनपरित्यक्तं मम पुत्रकं शरीरप्रदानेन रक्षितुमिच्छसि ।

शङ्खचूडः—[ सस्मितम् ] अहो ! जगद्विपरीतमस्य महासत्त्वस्य चरितम् । कुतः,

विश्वामित्रः श्वमांसं श्वपच इव पुराऽभक्षयद् यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ।

---

**प्रतिहतम्** इति-**एतत्**=त्वदुक्तम्, **प्रतिहतम्**=निवर्तितम्, 'भवतु' इति शेषः । **शङ्खचूडनिर्विशेषः**=शङ्खचूडेन, निर्विशेषः–तुल्यः । निर्गतो विशेषो यस्मादिति विग्रहः ।

**अहो** इति-**जगद्विपरीतम्**=जगतः–जगद्व्यवहारादिति भावः, विपरीतम्–प्रतिकूलम् । जगति लोका यया कयापि रीत्या स्वजीवनरक्षणमेवात्मनः कर्तव्यं मन्वते, अयं तु तद्विपरीतं स्वप्राणव्ययेनापि परप्राणान् रक्षितुमिच्छतीति भावः । **महासत्त्वस्य**=महत्–उदारम्, सत्त्वम्[१]–स्वभावः, आत्मबलं वा यस्य तादृशः, तस्य ।

जगद्विपरीतत्वमेव नायकचरितस्य समर्थयते-**विश्वामित्र** इति । **पुरा**=पुरायुगे, **यन्निमित्तम्**=यदर्थम्, यान् प्राणान् रक्षितुमिति भावः । **विश्वामित्रः**=तदाख्य ऋषिविशेषोऽपि [ विश्वस्य मित्रं विश्वामित्रः, 'मित्रे

---

वृद्धा—(कानों पर हाथ रखकर) ऐसा अनर्थ नहीं हो सकता। तू भी तो शंखचूड के समान मेरा पुत्र ही है। बल्कि शंखचूड से भी बढ़ कर, जो कि बन्धुओं से छोड़ हुए मेरे पुत्र को अपनी देह न्योछावर करके बचाना चाहते हैं।

शंखचूड—(मुस्करा कर) वाह ! इस महापुरुष का व्यवहार जगत् से निराला है। क्योंकि—

जिन प्राणों (की रक्षा) के लिये पूर्वकाल में विश्वामित्र ने चाण्डाल की न्याईं कुत्ते का मांस खा लिया, जिनके लिये गौतम ने अपने उपकार करने वाले

---

१ 'सत्त्व गुणे पिशाचादौ बले द्रव्यस्वभावयोः' इति मेदिनी ।

पुत्रोऽस्य काश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेव चित्रं तृणमिव कृपया यः परार्थे जहाति ॥१४॥

चर्यौ' इति दीर्घः, पुंस्त्वं लोकात्], श्वपच इव=चाण्डाल इव, श्वमांसम्=शुनो मांसम्, अभक्षयद्=भक्षितवान्। यत्कृते=येषां प्राणानां कृते-गौतमेन=गौतमनाम्ना केनचित् पुरुषेण, कृततदुपकृतिः=कृता-विहिता, तस्य-गौतमस्य, उपकृतिः-उपकारः, येन तादृशः-स्वोपकारकारीत्यर्थः, नाडीजङ्घः=नाडीजङ्घनामा कश्चिद् बकः, विजघ्ने=विहतः [कर्मणि लिट्], यदर्थम्=यस्मै प्राणरक्षणरूपप्रयोजनाय, काश्यपस्य=एतन्नामकस्य ऋषेः, पुत्रः, अयम्=अयं कुलशत्रुः, तार्क्ष्यः=गरुडः, उरगान्=सर्पान्, प्रतिदिनम्=प्रत्यहम्, अत्ति=भक्षयति, तान् एव प्राणान्, यः=जीमूतवाहनः, कृपया=करुणया, करुणापरवशः सन्निति भावः, परार्थे=परेषामुपकाराय, तृणमिव=अतितुच्छवस्तुवदिति भावः, जहाति=त्यजति, इति, चित्रम्=आश्चर्यम्।

प्राणाः कस्य न प्रियाः। यान् रक्षितुकामो विश्वामित्रः श्वपच इव श्वजाघनीममभक्षयत्, यांश्च पालयितुं गौतमो नाम कश्चिद् द्विजः स्वोपकारिणं नाडीजङ्घनामानं बकं निहत्य कृतघ्नतापापेन आत्मानमयूयुजत्, किमन्यद् अयमेव ऋषिपुत्रः गरुडः यान् प्राणान् रक्षितुं प्रतिदिनमुरगानाहारीकरोति,

नाडीजंघ बक को मार दिया और जिन के लिये यह काश्यप का पुत्र गरुड़ नित्य साँपों को खाता है, आश्चर्य है कि उन्हीं प्राणों को यह दया के कारण दूसरों के निमित्त तिनके की भाँति न्योछावर किया चाहता है ॥१४॥

१ पुरा किल दुर्भिक्षपीडितो विश्वामित्रः क्षुन्निवृत्त्यै शमयितुकामः कुत्रचि-चाण्डालाच्छ्वमांसं याचित्वा भक्षयतीति महाभारते शान्तिपर्वणि १४१ तमेऽ-ध्याये प्रतिपादितम्। मनुस्मृतावप्येषोऽर्थो दशमेऽध्याय उपक्षिप्तो वेदितव्यः।

२ आर्याद् गौतमो नाम कश्चित् कृपणो ब्राह्मणः। स हि धनलोभा-दितस्ततः आहिण्डमानः केनचिद् नाडीजङ्घनाम्ना पक्षिणा दृष्टः। स हि पक्षी तस्य धनाभिलाषं विज्ञाय तं कंचनोदारं राक्षसं प्रति प्रेषितवान्। ततो-लब्धधनराशिः स ब्राह्मणो यदा निवृत्ते तदा मार्गे रात्रिमेकां स्वोपकारिणस्त-स्यैव नाडीजङ्घस्य सविध एव विशश्राम। रात्रौ बुभुक्षापीडितो पक्षसुप्ति-स्थं विश्वस्तं स्वोपकारिणं हत्वा जघासेति वृत्तं महाभारते शान्तिपर्वणि १६७–१७२ तमेष्वध्यायेषु लिखितं वेदितव्यम्।

[नायकमुद्दिश्य] भो महात्मन्! दर्शिता त्वयेयमात्मप्रदानाध्यवसायान्निर्व्याजा मयि दयालुता। तदलमनेन निर्बन्धेन। कुतः,

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ॥१५॥

---

तान् सर्वथापि रक्षणीयान् आत्मनः प्रियान् प्राणान् तृणायमन्यमानोऽसौ कृपापरवशः परार्थे जहातीति—यत् सत्यमस्य चरितमाश्चर्यकरं जगद्विपरीतं चेति भावः। तृणगिवेत्युपमालङ्कृतिः। विद्याभिन्नायपेक्षया नायकस्योत्कर्षप्रतिपादनाद् व्यतिरेकः। प्राणरक्षार्थं अभक्ष्यमपि भक्ष्यते, अकार्यमपि क्रियते इत्यत्र प्रमाणरूपेणैतिह्योपन्यासादैतिह्यालङ्कारोऽपि। स्रग्धरावृत्तम् ॥१४॥

**भो** इति—**आत्मप्रदानाध्यवसायाद्**=आत्मनः—स्वशरीरस्य, प्रदानम्—परार्थं उत्सर्गः, तत्र अध्यवसायः—दृढो निश्चयः, तस्माद्। **निर्व्याजा**=व्याजः कपटम्, तद्रहिता—अकृत्रिमेति भावः। **निर्बन्धेन**=आग्रहेण, मत्प्राणरक्षार्थं स्वशरीरार्पणाग्रहस्त्वया त्यक्तव्य इति भावः।

आग्रहत्यागे कारणमुपन्यस्यति—जायन्ते इति। **मादृशाः**=मत्सदृशाः [अस्मदुपपदाद् दृशेः कञ्, अस्मदो मादेशः, आ सर्वनाम्नः], **क्षुद्रजन्तवः**=क्षुद्राः—तुच्छाः अनुपयोगिनः, जन्तवः—प्राणिनः, **जायन्ते**=उत्पद्यन्ते, च, **म्रियन्ते**=निधनमुपयान्ति च। **परार्थे**—परेषामुपकारं कर्तुम्, **बद्धकक्षाणाम्**=बद्धा कक्षा परिकरो यैस्तादृशानामुद्यतानाम्, **त्वादृशाम्**=त्वत्सदृशानाम्, **उद्भवः**=उत्पत्तिः, **कुतः**=न सर्वदा सम्भवतीत्यर्थः। मद्विधा लोकस्य कमप्युपकारमसाधयन्तः प्रत्युत दंशप्रवेशेन लोकानां प्राणापहारकाः क्षुद्राः प्राणिनो न जाने प्रत्यहं कियन्त उत्पद्यन्ते कियन्तो वा म्रियन्ते। मादृशैर्जीवितैर्मृतैर्वा न लोकस्य कोऽपि लाभो हानिर्वा, प्रत्युत हानिरेव। त्वादृशास्तु परोपकारव्रतिनो न सर्वदा सर्वत्रोपलभ्यन्ते, अतस्तव जीवनमावश्यकम्। जीवितस्त्वं न जाने कियतोऽसहायान् प्राणिन उपकरिष्यसि, मृते तु त्वयि त्वत्साहाय्यवञ्चितास्ते भवेयुरिति भावः। मम जीवनं नावश्यकं

---

(नायक की ओर उद्देश करके) हे महात्मन्! आपने अपनी जान तक देने पर तुल जाने से मेरे ऊपर अपार (अकृत्रिम) दयालुता दिखा दी है। अब अधिक आग्रह करने की आवश्यकता नहीं। क्योंकि,

मेरे जैसे तुच्छ प्राणी तो उत्पन्न होते और मरते ही रहते हैं पर दूसरों के हित कटिबद्ध होने वाले आप जैसों की उत्पत्ति कहाँ? ॥१५॥

---

१ कक्षित् कक्षायामिति पाठः। अर्थे तु न भेदः।

**तत् किमनेन । मुच्यतामयमध्यवसायः ।**

**नायकः—[शङ्खचूडं हस्ते गृहीत्वा] कुमार शङ्खचूड ! न मे चिरान्धावसरस्य परार्थसम्पादनमनोरथस्यान्तरायं कर्तुमर्हति भवान्। [पादयोः पतित्वा] तदलं विकल्पेन। दीयतां वध्यचिह्नम् ।**

**शङ्खचूडः—भो महासत्त्व ! किमनेन वृथाप्रयासेन । न खलु शङ्खचूडः शङ्खधवलं शङ्खपालकुलं मलिनीकरिष्यति । अथ ते**

---

तव तु तदावश्यकमिति प्रस्तुतेऽप्रस्तुतस्य वर्णनादप्रस्तुतप्रशंसा। पूर्वोक्तनिर्बन्धत्यागस्य हेतुना समर्थनात् काव्यलिङ्गम्। पूर्वार्धे दीपकं च। वृत्तमनुष्टुप् ॥१५॥

**तदिति**—**किमनेन**=वध्यचिह्नं परिधाय स्वशरीरोत्सर्गनिर्बन्धेन किम्। **अध्यवसायः**=स्वशरीरत्यागनिश्चयः । **कुमारेति**—**लब्धावसरस्य**=लब्ध, अवसरः—समयः, येन यस्य वा तादृशस्य। **परार्थसम्पादनमनोरथस्य**=परार्थस्य परप्रयोजनस्य, सम्पादने—अनुष्ठाने, मनोरथस्य—अभिलाषस्य। **अन्तरायम्**=विघ्नम्। वध्यचिह्नमदत्त्वा मम परोपकारानुष्ठाने विघ्नं न कुरु इत्यर्थः। **अलं विकल्पेन**=विकल्पं सन्देहं मा कार्षीरित्यर्थः । **भो महासत्त्वेति**—त्वं वृथैव मत्सकाशाद् वध्यचिह्नग्रहणे प्रयासं मा कार्षीः, नाहं तुभ्यं वध्यचिह्नं दास्यामीति भावः । **न खल्विति**—अहं तुभ्यं वध्यचिह्नं दत्त्वा तव प्राणव्ययेन स्वप्राणान् रक्षित्वा, **शङ्खधवलम्**=शङ्खवच्छुक्लम्-निर्मलम्, **शङ्खपालकुलम्**=शङ्खपालनाम्नोऽस्मद्वंशप्रवर्तकप्रधाननागस्य, **कुलम्**=वंशम्, अपयशसा कलङ्कितं न करिष्यामीति भावः । **अथ ते इति**—यदि त्वम् अस्मान् अनुकम्पायो-

---

तो इस हठ से क्या लाभ ? इस आग्रह को छोड़ दीजिए ।

**नायक**—(शङ्खचूड को हाथ से पकड़ कर) कुमार शङ्खचूड ! मेरे इस दूसरों की भलाई करने के मनोरथ में, जो मुझे बहुत समय के पश्चात् प्राप्त हुआ है, आप अड़चन न डालिए । इसलिए बहुत बकझक छोड़ कर मुझे यह वध्यचिह्न दीजिये ।

**शङ्खचूड**—हे महापुरुष ! आप वृथा अपनी आत्मा को क्यों क्लेश दे रहे हैं ? यह शङ्खचूड शङ्ख की भाँति श्वेत (निर्मल) शङ्खपालकुल[1] को कलङ्कित नहीं करेगा । यदि आपने मेरे ऊपर कृपा करनी ही है तो ऐसा उपाय सोचिए, जिससे यह विपत्ति से दुःखी हुई मेरी माता प्राण न छोड़ दे ।

---

१ नागवंशप्रवर्तका अष्टौ नागा अभवन् । तदुक्तम्—
अनन्तं वासुकिं शेषं पद्मनाभं च कम्बलम्। धृतराष्ट्रं शङ्खपालं तक्षकं कालियं तथा॥

वयमनुकम्पनीयाः, तदियमस्मद्विपत्तिविक्लवा यथा न परित्यजति जीवितमम्बा, तथाभ्युपायश्चिन्त्यताम् ।

नायकः—किमत्र चिन्त्यते । चिन्तित एवाभ्युपायः । स तु त्वदायत्तः ।

शङ्खचूडः—कथमिव ।

नायकः—म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥१६॥

अयमभ्युपायः । तदर्पय त्वरितं वध्यचिह्नम् । यावदनेनात्मानमाच्छाद्य वध्यशिलामारोहामि । त्वमपि जननीं पुरस्कृत्यास्माद् देशान्निवर्तस्व । कदाचिदियमालोक्यैव सन्निकृष्टमाघातस्थानं स्त्रीसहभुवा कातरत्वेनास्या प्राणान् जह्यात् । किञ्च न

---

वयानेव मनुषे, तर्हि, अस्मद्विपत्तिविक्लवा=अस्माकम्, विपत्त्या-मरणेन, विक्लवा-शोकाकुला, इयं=मे जननी-यथा प्राणान् न त्यजति, तथा कश्चिदुपायश्चिन्तनीय इति भाव. ।

नायकोक्ती—त्वदायत्त इति । त्वदधीन इत्यर्थः । मह्यं वध्यचिह्नप्रदानमेव तव मातुर्जीवितस्योपाय । स च त्वदधीन इति भावः । शंखचूड उपायस्य स्वायत्तता पृच्छति—कथमिवेति ।

म्रियत इति—या=या ते जननी, त्वयि=भवति शंखचूडे, म्रियमाणे=प्राणाँस्त्यजति सति, म्रियते=प्राणास्त्यजति, जीवति=ध्रियमाणे, सति, जीवति=ध्रियते, यदि, ताम्=स्वमातरम्, जीवन्तीम्=ध्रियमाणाम्, इच्छसि=कामयसे, तर्हि, मम=जीमूतवाहनस्य, असुभिः=प्राणैः, आत्मानम्, रक्ष=पालय । अनुष्टुब् वृत्तम् ॥१६॥

आघातस्थानम्=वधस्थानम् । स्त्रीसहभुवा=स्त्रिया सह भवतीति

---

नायक—इसमें सोचने की क्या बात है ? उपाय तो सोचा ही हुआ है । और वह उपाय केवल तुम्हारे ही अधीन है ।

शंखचूड—सो कैसे ?

नायक—आपके मर जाने से यह मर जायगी और आपके जीते रहने से यह जियेगी । इसलिये यदि इसको जीवित रखना चाहते हो तो मेरे प्राणों से अपनी रक्षा करो ॥१६॥

यही उपाय है । इसलिये झटपट मुझे वध्यचिह्न दे दो ताकि मैं अपने आप

पश्यति भवान् इदं विपन्नपन्नगानेककङ्कालसंकुलं महाश्मशानम् । तथाहि—

चञ्चच्चञ्चूद्धृतार्धच्युतपिशितलवग्राससंवृद्धगर्धै-
र्गृध्रैरारब्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।
वक्त्रोद्भ्रान्ताः पतन्त्यश्छमिति शिखिशिखाश्रेणयोऽस्मिन् शिवाना-
मस्रस्रोतस्यजस्रस्रुतबहलवसावाससविस्रे स्वनन्ति ॥१७॥

---

स्नीसहभूतेन स्नास्वभावसुलभेनेत्यर्थः । जहातु=त्यजतु । **विपन्नपन्नगानेककङ्कालसङ्कुलम्**=विपन्नानाम्–मृतानाम्, पन्नगानाम्–सर्पाणाम्, अनेके–बहवः, कङ्काला –अस्थिपञ्जराणि, तैः संकुलम्–व्याप्तम् ।

महाश्मशानं वर्णयति—चञ्चदिति । **चञ्चच्चञ्चूद्धृतार्धच्युतपिशितलवग्राससंवृद्धगर्धैः**=चञ्चन्त्या–चञ्चलया, चञ्च्वा–त्रोट्या, उद्धृत –पूर्वमूर्ध्वं धृतं पश्चाच्च, अर्धे अर्धमार्गे च्युतं. [उद्धृतार्धच्युतयोः स्नातानुलिप्तवत् समासः] पिशितस्य–मांसस्य, लवः –खण्डः, तस्य ग्रासे–अदने, संवृद्ध –अभिवृद्धिं गत , गर्धः –तृष्णा, येषां तादृशैः । **आरब्धपक्षद्वितयविधुतिभिः**=आरब्धा –कृता , पक्षद्वितयस्य–पक्षयोर्द्वितयस्य–द्वयोः पक्षयोरित्यर्थः [द्वितयशब्दे 'संख्याया अवयवे तयप्'] विधुतयः –कम्पनानि यैस्तादृशैः–आभितः पक्षौ प्रसार्य कम्पयद्भिरित्यर्थः , **गृध्रैः**=गृध्रनामकैः पक्षिभिः, **बद्धसान्द्रान्धकारे**=बद्ध –पक्षौ प्रसार्य रचितः , सान्द्रः–निबिडः , अन्धकारो यत्र तादृशे, **अस्मिन्**=पुरोदृश्यमाने महाश्मशाने, **अजस्रस्रुतबहलवसावाससविस्रे**=अजस्रम्–निरन्तरम्, स्रुतया–क्षरितया, बहलया–

---

को इसस टक कर वध्यशिला पर चढ़ जाऊँ । तुम भी माता का साथ लेकर इस स्थान से लौट जाओ । कहीं माता इस वध्य स्थान को पास ही देखकर स्त्री स्वभाव की कातरता के कारण प्राण न त्याग दें । क्या तुम इस मरे हुए साँपों की हड्डियों से भरपूर महाश्मशान को नहीं देख रहे?—

चञ्चल चोंच से नोंच कर गिरी हुई मांस की बोटियों (को उठाने) के लालच से झपटते हुए गीधों ने जहाँ अपने परों के फैलाव से घुप अन्धेरा कर दिया है और जहाँ कि गीदड़ों के मुख से निकली हुई आग की ज्वालाएँ निरन्तर बहती हुई चरबी से दुर्गन्धित रुधिर के स्रोत में बुझकर "छम छन" की ध्वनि कर रही हैं ॥१७॥

---

१ चञ्चच्चञ्च्वग्रकृत्तच्युतेति क्वचित् पाठः । चञ्चन्त्या चञ्च्वा अग्रेण अग्रभागेन कृत्ता –पूर्वं छिन्न , पश्चाच्च च्युत पतित इति तद्विग्रहः ।

**शङ्खचूड**—कथं न पश्यामि ।

प्रतिदिनमशून्यमहिनाहारेण विनायकाहितप्रीति ।
शशिधवलास्थिकपाल वपुरिव रौद्र श्मशानमिदम् ॥१८॥

भूयस्या, वसया–मेदसा [चरबीति लोके प्रसिद्धया] वास –वासन स्वगन्धाधानम्, तेन विस्रे[1]–आमगन्धिनि, **असृक्स्रोतसि**=असृजः[2]–रुधिरस्य, स्रोतसि–प्रवाहे [अथवा–अजस्रेत्यादि अस्मिन्निरयस्य विशेषण वाच्यम्], **शिवानाम्**=गोमायुस्त्रीणाम्, **वक्त्रोद्वान्ता**=वक्त्रेभ्य –मुखेभ्य उद्वान्ता –उद्गीर्णा, **शिखिशिखाश्रेणय**=शिखिनः[3]–अग्नेः, शिखानाम्[4]–ज्वालानाम्, श्रेणय –पङ्क्तय, पतन्त्य, **छमिति स्वनन्ति**=छमिति शब्द कुर्वन्ति । शिवा रुवत्योऽग्निमुद्गिरन्तीति प्रसिद्धि । अतएव ता उल्कामुखा इति व्यपदिश्यन्ते । अतएव रुवतीना तासा मुखेभ्य उद्गीर्णा अग्निज्वाला यदा महाश्मशानवर्तिनि रुधिरप्रवाहे पतन्ति तदा तस्माद् छमिति शब्द उत्पद्यते । वारिणि ज्वलदङ्गारनिपातनेन छमिति शब्द उत्पद्यत एव । अत्र कविना बीभत्सो रस साधु परिपोषित । तत्र दुर्गन्धमांसाद्यालम्बनम्, गृध्रैश्वन्क्वा तदुल्लुञ्चनादि चोद्दीपनम्, आक्षिप्तो नासिकानिकोचादिरनुभाव, आवेगादय सचारिण. । जुगुप्सा स्थायी भाव । रचनाप्यत्र बीभत्सानुरूपौजस्विनी । स्रग्धरा वृत्तम् ॥१७॥

**प्रतिदिनमिति—प्रतिदिनम्**=प्रत्यहम्, **अहिना**=सर्परूपेण, **आहारेण**=भोजनेन, **अशून्यम्**=युक्तम्, रुद्रवपु पक्षे–अहिना–सर्परूपेण, हारेण–ग्रीवालङ्कारेण, अशून्यम्, **विनायकाहितप्रीति**=वीना पक्षिणा नायको गरुड, तस्य, आहिता–उत्पादिता, प्रीति –सतोष, येन तादृशम् [प्रत्यह सर्परूपभोजन–दातृत्वाद् गरुडप्रीत्युत्पादकमिति भाव], पक्षे–विनायकस्य[5]–

**शखचूड**—देख क्यों नहीं रहा !

यह श्मशान, जो कि प्रतिदिन भोजनार्थ एक साँप देने के कारण गरुड को प्यारा है और जो चन्द्रमा के समान श्वेत हड्डियों से अटा पड़ा है, रुद्र के शरीर की भाँति, जिस पर सदा साँपों के हार लटकते हैं, जो गणेश को प्यारा है और जिस पर चाँद की किरणों से चमकती हुई खोपड़ियाँ अधिकतर श्वेत प्रतीत होती है, अति भयङ्कर है ॥१८॥

१ 'विस्र स्यादामगन्धि यत्' इत्यमर । २ 'रुधिरेऽसृक्लोहितास्ररक्तक्षतजशोणितम्' इत्यमर । ३ 'शिखी वह्नौ बलीवर्दे' इत्यमर । ४ 'शृणि ज्वाले अपि शिखे' । ५ 'विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' इति मेदिनी।

तद् गच्छ । किमेभिस्त्रासनोपायैः । आसन्नः खलु गरुड-स्यागमनसमयः । [ मातुरग्रतो जानुभ्यां स्थित्वा शिरोनिहिताञ्जलिः ] अम्ब ! त्वमपि निवर्तस्वेदानीम् ।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां प्रियसुते ! माता भूयास्त्वमेव नः ॥१६॥

---

गणेशस्य आहिता प्रीतिर्येन तादृशम् । गणेशानन्दकरमिति भाव. । अथवा—विनायकेनाहिता प्रीतिर्यस्येति विग्रहीतव्यम् । विनायकेन गणेशेन स्वसुतेनानन्दितमिति भाव. । **शशिधवलास्थिकपालम्**=शशिवत्–चन्द्रवत्, धवलानि–श्वेतानि, अस्थीनि–कपालानि च यत्र तादृशम् । पक्षे—शशिना–शिरोधृतया चन्द्रकलया, धवलानि–अतिशयेन धवलतां नीतानि, अस्थीनि–अस्थिरूपाणि, कपालानि–नरमुण्डानि यत्र तादृशम् । **इदम्**=पुरोदृश्यमानम्, श्मशानम्, **रौद्रम्**=रुद्रसम्बन्धि, शिवस्येत्यर्थ , **वपुरिव**=शरीरमिवास्ति । श्लेषानुप्राणिता पूर्णोपमा । अत्र श्मशानस्य शिवशरीरोपमया, नेदं श्मशानं मम किंचिद् भीतिं जनयति, किन्तु शिवशरीरवदनुग्राहकमेवेदम् । किं च स्वामिवचनमनुपालयन्नहमत्र श्मशाने प्राणांस्त्यजन् परब्रह्माख्ये शिव एव लयमाप्स्यामि । अतो ममानन्दकरमेवेदम्–इति व्यज्यते । नायकेन महाश्मशानं शंखचूडं ततो निवर्तयितुं भयङ्करतयोपन्यस्तम्, परं शंखचूडस्तदेव श्मशानं शिवशरीरोपमयानन्दकरत्वेनोपन्यस्तवान्–इति व्याघातालङ्कारोऽप्यत्र प्रतिभाति । आर्या वृत्तम् ॥१८॥

किमेभिरिति–व्यर्थास्त्वे त्रासनोपायाः । नाहमेतेभ्यो मनागपि बिभेमीति भावः ।

**समिति—प्रियसुते !**=प्रियः–स्वप्राणेभ्योऽप्यधिकं स्नेहभाजनम्, सुतः पुत्रो यस्यास्तादृशि ! **मातः**=हे जननि !, **वयम्**=अहमित्यर्थः [ 'अस्मदो द्वयोश्च' इति बहुत्वम् ], **यस्यां यस्याम्**, **गतौ**=योनौ, **समुत्पत्स्यामहे**=जन्म ग्रहीष्यामः, **तस्यां तस्याम्**, योनौ, **त्वमेव**, **नः**=अस्माकम्,

---

इसलिये जाओ । इन डराने वाली बातों से क्या लाभ ? गरुड के आने का समय निकट आ पहुँचा है । (माता के सामने घुटने टेक कर) माँ ! अब तुम भी लौट जाओ ।

मैं जिस जिस योनि में भी उत्पन्न होऊँ, उस उसी योनि में हे पुत्रवत्सला माता ! तुम ही मेरी माता बनना (यही मेरी प्रार्थना है) ॥१६॥

[ पादयो पतति ]

**वृद्धा**—[ सास्रम् आत्मगतम् ] **कहं पच्छिमं से वअणं ।** [ प्रकाशम् ] **पुत्तअ ! तुमं उज्झिअ अण्णदो मे पाआ ण पसरन्ति । ता तुए सह गमिस्सं ।**

कथं पश्चिममस्य वचनम् । पुत्रक ! त्वामुज्झित्वाऽन्यत्र मे पादौ न प्रसरतः । तत् त्वया सह गमिष्यामि ।

**शंखचूडः**—[ उत्थाय ] **यावदहमपि नातिदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि ।**

[ उभौ निष्क्रान्तौ ]

**नायकः**—**कष्टम् । न सम्पन्नमभिलषितम् । तत् कोऽत्राभ्युपायः ।**

---

**माता, भूयाः** [ आशिषि लिङ् ] । अत्र शखचूडनिष्ठो मातृविषयो रतिभाव प्राधान्येन व्यज्यते, अतो भावकाव्यमिदम् । तदुक्तम्–रतिर्देवादिविषया भाव । प्रियसुते इति विशेषणस्य साभिप्रायत्वात् परिकर । वृत्तमनुष्टुप् ॥१६॥

**कथमिति**—**पश्चिमम्**=अन्तिमम् । **उज्झित्वा**=त्यक्त्वा । **यावदिति**—यावद् गरुड आयाति तावदित्यर्थ । **नातिदूरे**=समीप एव । **दक्षिणगोकर्णम्**=दक्षिणोदधितीरवर्ति गोकर्णाख्य शिवक्षेत्रम् । अत्र तु तत्क्षेत्रवर्ति शिवलिङ्ग गोकर्णशब्देनोच्यते । तदुक्त भागवते–'गोकर्णाख्य शिवक्षेत्र सान्निध्य यत्र धूर्जटे' इति । **प्रदक्षिणीकृत्य**=परिक्रम्य [ प्रगतो दक्षिण प्रदक्षिणम्, अप्रदक्षिण प्रदक्षिण कृत्वेति प्रदक्षिणीकृत्येति विग्रह ] । **कष्टमिति**—**अभिलषितम्**=परार्थं देहोत्सर्जनावसरप्राप्तिरूपम्, **न संपन्नम्**=न सिद्धम्, शखचूडेन वध्यचिह्नरक्ताशुकयुगलस्याप्रदानादिति भाव ।

---

(पाँवों पर गिरता है)

**वृद्धा**—(रो कर) हे पुत्र ! क्या यह तेरे अन्तिम शब्द हैं ? तुझे छोड़ कर मेरे पाँव दूसरी ओर ही नहीं उठते । इसलिए मैं तो यहीं तेरे साथ ही रहूँगी ।

**शंखचूड**—(उठकर) तो मैं भी पास ही भगवान् दक्षिण गोकर्ण की प्रदक्षिणा करके अपने स्वामी की आज्ञा का पालन करता हूँ ।

(दोनों चले जाते हैं)

**नायक**—शोक ! मेरा मनोरथ सफल न हुआ । तो अब क्या उपाय करना चाहिए ?

[ सहसा प्रविश्य ]

**काञ्चुकीयः**—इदं वासोयुगलम्।

**नायकः**—[ दृष्ट्वा सहर्षमात्मगतम् ] दिष्ट्या सिद्धमभिवाञ्छितमनेनातर्कितोपनतेन रक्तांशुकयुगलेन।

**काञ्चुकीयः**—इदं वासोयुगलं देव्या मित्रावसोर्जनन्या कुमाराय प्रेषितम्। परिधत्तां कुमारः।

**नायकः**—उपनय।

[ काञ्चुकीय उपनयति ]

**नायकः**—[ गृहीत्वाऽऽत्मगतम् ] सफलीभूतो मे मलयवत्याः पाणिग्रहणविधिः। [ परिधाय प्रकाशम् ] कञ्चुकिन्! गम्यताम्। मद्वचनादभिवादनीया देवी।

**काञ्चुकीयः**—यदाज्ञापयति कुमारः। [ निष्क्रान्तः ]

---

इदमिति—इदं वासोयुगलमिसम्य अभ्युपाय इति शेषः। इदं=मया काञ्चुकीयेन दीयमानम्, वासोयुगलम्=रक्तांशुकद्वयम्, अभ्युपायः=परार्थे देहोत्सर्जनावसरप्राप्तेः निमित्तभूत इति भावः। दिष्ट्येति—अतर्कितोपनतेन=अतर्कितम्-अकस्मात्, उपनतेन-प्राप्तेन। सफलीभूत इति—सफलीभूत इत्यस्य परार्थे देहोत्सर्गावसरप्रदानेनेति शेषः। यदि नाहं मलयवत्याः पाणिं पीडयेयम्, तर्हि तज्जनन्यपि मे नेदं रक्तांशुकयुगमुपायनं दद्यात्। ततश्च नाहं परार्थे शरीरोत्सर्गावसरं लभेय इति हृदयम्।

---

(एकाएक कञ्चुकी का प्रवेश)

**कञ्चुकी**—यह रहा कपड़ों का जोड़ा।

**नायक**—(देखकर, प्रसन्नता के साथ, मन ही मन) अहोभाग्य! अचानक लाए हुए इस लाल कपड़े के जोड़े से मेरा मनोरथ सिद्ध हो गया।

**कञ्चुकी**—यह कपड़ों का जोड़ा मित्रावसु की माता रानी जी ने आप के लिये भेजा है। इसलिये आप इसको पहन लीजिये।

**नायक**—तो ले आओ।

(कञ्चुकी लाता है)

**नायक**—(लेकर, मन में) मेरा मलयवती के साथ विवाह करना सफल हुआ। (पहनकर प्रकट में) कञ्चुकी! जाओ, मेरी ओर से रानी को प्रणाम कहो।

**कञ्चुकी**—जैसी युवराज की आज्ञा। (चला जाता है)

**नायकः**—वासोयुगमिद रक्तं प्राप्तकाले ममागतम् ।
करोति महतीं प्रीतिं परार्थं देहमुज्झतः ॥२०॥

[ दिशो विलोक्य ] **यथाय चलितमलयाचलशिखरशिलासञ्चय. प्रचण्डो नभस्वांस्तथा तर्कयामि आसन्नीभूत. पक्षिराज इति । अपिच—**

तुल्याः संवर्तकाभ्रै पिदधति गगन पङ्क्तय पक्षतीना
तीर वेगानिलस्त क्षिपति भुव इव प्लावनायाम्बु सिन्धो ।

---

**वासोयुगमिति—रक्तम्**=रक्तवर्णम्, **इदम्**=मत्पाणिस्थितम्, **वासोयुगम्**=वाससो -वस्त्रया , युगम्-युगलम् , **प्राप्तकाले**=उचिते समये, **आगतम्**=प्राप्तम्, सत्, **परार्थम्**=परस्मै, परप्राणरक्षायै-इति भाव , **देहम्**=स्वशरीरम्, **उज्झतः**=त्यजत , **मम**=जीमूतवाहनस्य, **महतीम्**= गुर्वीम्, **प्रीतिम्**=प्रसन्नताम्, **करोति**=उत्पादयति । अनुष्टुप् वृत्तम् ॥२०॥

**यथेति — चलितमलयाचलशिखरशिलासचयः** = चलित – कम्पित , मलयाचलस्य–मलयगिरे , शिखरस्य–शृङ्गस्य, शिलानाम्–प्रस्तर पट्टिकानाम्, सचय –समूहो येन तादृश । **नभस्वान्**=वायु , **तर्कयामि**= अनुमिनोमि । अनुमानालङ्कार ।

**तुल्या** इति—**संवर्तकाभ्रै**.=सवर्तकस्य[1]–प्रलयकालस्य, अभ्रै –मेघै , **तुल्याः**=सदृश्य , **पक्षतीनाम्**=पक्षमूलानाम्–उभयपार्श्वस्थिताना तिर्यक्-प्रसृताना पक्षाणाम्[2], **पङ्क्तयः**=श्रेण्य , **गगनम्**=आकाशम्, **पिदधति**= आच्छादयन्ति । एतेन गरुडस्यातिबृहत्कायत्वमभिव्यञ्जितम् । [ पिदधति इत्यत्र 'वष्टि भागुरिरल्लोपम्–'इत्यादिनापि शब्दाकारस्य लोप ] **वेगानिल** =

---

**नायक**—ठीक अवसर पर आया हुआ यह लाल कपड़ों का जोड़ा मुझे, जो कि दूसरों के निमित्त देह-त्याग करने पर तुला हूँ, अति भला प्रतीत हो रहा है ॥२०॥

(चारों ओर देखकर) चूंकि प्रचण्ड पवन के मारे मलयाचल की चट्टानें काँपने लग गई हैं। इसलिये मेरा विचार है कि गरुड कहीं पास ही आ पहुँचा है। जैसे कि—

प्रलय काल के मेघों के समान परों की पङ्क्तियाँ आकाश को ढक रही हैं, वेगवान् वायु मानो डुबाने के लिए समुद्र जल को तट पर उछाल रहा है ।

---

१ 'संवर्त प्रलय कल्प ' इत्यमर । २ 'पक्षतिस्तु भवेत् पक्षमूले च प्रतिपत्तिथौ' इति मेदिनी ।

कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रै-
र्देहोद्द्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः ॥२१॥

पक्षद्वयप्रकम्पजनितवेगयुक्तो वायु, भुवः=पृथिव्या, प्लावनायेव=स्वस्मिन् निमज्जयितुमिव, अम्बुराशेः=समुद्रस्य, अम्भः=जलम्, तीरे=तटे, क्षिपति=प्रेरयति, च=किंच, सपदि=तत्क्षणे, कल्पान्तशङ्काम्=कल्पान्त –प्रलयकाल, तस्य शङ्काम्–तद्विषयकं भ्रमम्, कुर्वन्=जनयन् सन्, दिग्द्विपेन्द्रैः=दिशाम्, द्विपेन्द्रा –गजेन्द्रा, तै॰, ऐरावतादिभिरष्टभिर्दिग्गजै, सभयम्=भयेन सह, वीक्षितः=अवलोकित, द्वादशादित्यदीप्तिः=द्वादश–द्वादशसंख्याका, आदित्या –अर्यमादय सूर्या तद्वद् दीप्ति –कान्तिर्यस्य तादृश॰, गरुडः, देहोद्द्योतैः=देहस्य–स्वशरीरस्य, उद्द्योतै॰–उत्कृष्टकान्तिभि, दश=दशसंख्याका, आशाः=पूर्वादीर्दिश, मुहुः=भूय, कपिशयति=कपिशा करोति–धूम्रवर्णा करोतीति भाव। गरुडागमनेन प्रलयकाल उपस्थापित। तथाहि––प्रलये भूमिं प्लावयितु संवर्तकाद्या मेघा उदयन्ते, समुद्रजल वेलामतिक्रामति, सप्तविधा वाता॰ सद्वेव वेगेन वान्ति, सद्योदिता द्वादशादित्या स्वतेजसा सर्वान् प्राणिन भूमिं च जर्जरयन्ति। इहापि–अतिविशालकायो गरुड उड्डीयमान संवर्तकादिमेघसदृशौ पक्षौ समस्तं व्योम आच्छादयति, तत्पक्षकम्पजनिता वायव प्रलयकालिका इवातिवेगवन्तो वेलामतिक्रमयितु समुद्रजलमुच्छालयन्ति, तच्छरीरकान्ति प्रलये सद्योदितानामपि द्वादशादित्याना तेजोतिशायाना सर्वा दिश कपिशयति, दिग्द्विपेन्द्रा अपि कल्पान्तमुपस्थित शङ्कमाना नितरा बिभ्यति

दिग्गज चौंक कर डर के मारे उसकी ओर देख रहे हैं। इस प्रकार प्रलयकाल की शंका उत्पन्न करता हुआ बारह आदित्यों के समान चमकने वाला गरुड अपने शरीर की प्रभा से दशों दिशाओं को बार बार प्रदीप्त कर रहा है ॥२१॥

१ क्वचित्तु 'तीरं वेगान्निरस्तं क्षिपति भुव इव प्लावनायाम्बुसिन्धो' इति पाठ॰। वेगात्–पक्षद्वयप्रकम्पजनिताद् वायुवेगात्, निरस्ताम्–स्वस्थानादुत्थापितम्, सिन्धो, अम्बु, भुव प्लावनायेव–निमज्जयितुमिव, तीरम्–तटप्रदेशम्, क्षिपति–आक्रामति–इति तद्व्याख्यानमिति केचित्।

२ क्वचित्तु 'देहोद्द्योतो दशाशा कपिशयति शिशुर्द्वादशादित्यदीप्ति' इति पाठ॰। शिशु –अल्पता नीता, द्वादशादित्याना दीप्तिर्येन, तादृश॰ देहोद्योत देहस्य गरुडदेहस्योद्द्योत, दश आशा॰ कपिशयति, इति तद्व्याख्यानम्

तद् यावदसौ नागच्छत्येव शंखचूडः, तावत् त्वरिततर-मिमां वध्यशिलामारोहामि । [ तथा कृत्वोपविश्य स्पर्शं नाटयन् ] अहो ! स्पर्शोऽस्याः ।

न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा ।
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथा स्पृष्टा ॥२२॥

अथवा किं मलयवत्या ।

शयितेन मातुरङ्के विस्रब्धं शैशवे न तत् प्राप्तम् ।
लब्धं सुखं मयास्यां वध्यशिलायां यदुत्सङ्गे ॥२३॥

---

इति भावः । प्रथमपादे उपमा, द्वितीये फलोत्प्रेक्षा, तृतीये भ्रान्तिः, चतुर्थेऽतिशयोक्तिः । तत्र भ्रान्तिः प्रधानम्, इतरासां तदङ्गता गता । स्रग्धरा वृत्तम् ॥२१॥

वध्यशिलास्पर्शसुखं वर्णयति नायकः–नेति । **मलयचन्दनरसार्द्रा**= मलयजनितं चन्दनं मलयचन्दनम्–श्रीखण्डम् तस्य, रसः–द्रवः, तेन, आर्द्रा–लिप्तापि, **मलयवती**=मत्प्रिया, **तथा**=तेन प्रकारेण, **न सुखयति**= नानन्दयति, मामिति शेषः, **यथा**=येन प्रकारेण, **अभिवाञ्छितार्थसिद्ध्यै**= अभिवाञ्छितस्य–परार्थे देहोत्सर्जनरूपस्य मनोरथस्य, सिद्ध्यै–पूर्त्यै, **स्पृष्टा**= आलिङ्गिता, **इयम्**, **वध्यशिला**, सुखयतीति । **मन्ये**=अनुभवामि । वध्यशिलाऽपि सुखयतीति गम्यो विरोधः । मलयवत्यपेक्षया वध्यशिलाया उत्कर्षबोधनाद् व्यतिरेकश्च । अभिवाञ्छितसिद्धिहेतुत्वं चोत्कर्षहेतुः । वृत्तमार्या ॥२२॥

**अथवेति**–किं मलयवत्या, वध्यशिलासमक्षे मलयवतीति लघ्वी माना । अतो वध्यशिला तुलयितुं मलयवतीवर्णनमनुचितम्–इति भावः ।

**शयितेने**ति–**शैशवे**=बाल्यकाले, **मातुः**=जनन्याः, **अङ्के**=क्रोडे,

---

इसलिये उस शखचूड के आजाने से पहले पहले शीघ्र ही मैं इस वध्यशिला पर चढ़ जाता हूँ । (वैसा करके बैठ जाता है और स्पर्श सुख प्रकट करता है) अहा ! इसका क्या ही सुन्दर स्पर्श है ।

मलयपर्वत के चन्दन का रस लगाए हुए मलयवती का आलिङ्गन उतना मन को नहीं लुभाता, जितना कि इष्ट-मनोरथसिद्धि के लिये इस वध्य शिला का स्पर्श ॥२२॥

अथवा मलयवती का तो कहना ही क्या ?

बचपन में माता की गोद में निःशङ्क सोने से मुझे वह सुख नहीं प्राप्त हुआ था, जो इस वध्यशिला पर बैठने से ॥२३॥

तदयमागत एव गरुत्मान् । यावदात्मानमाच्छाद्य तिष्ठामि । [ तथा करोति ]

[ ततः प्रविशति गरुडः ]

**गरुडः—एष भोः !**

क्षिप्त्वा बिम्बं हिमांशोर्भयकृतवलयां संहरन् शेषमूर्तिं
सानन्दं स्यन्दनाश्वभ्रमणविघटिते पूष्णि दृष्टोऽग्रजेन ।
एष प्रान्तावसज्जज्जलधरपटलायायतीभूतपक्षः
प्राप्तो वेलामहीध्रं मलयमहमहिमासगृध्नुः क्षणेन ॥२४॥

---

विस्रब्धम्=निश्चिन्तम्, शयितेन=सुप्तेन, मया=जीमूतवाहनेन, तत्=तादृशम्, सुखम्, न प्राप्तम्=नानुभूतम् । यत्=यादृशम्, सुखम्, अस्याः=मयाधिष्ठितायाः, वध्यशिलायाः, उत्सङ्गे=अङ्के, शयानेन, लभ्यम्=लभ्यते अनुभूयत इत्यर्थः [ लभतिरत्र ज्ञानार्थः, 'मतो मतिबुद्धिपूजार्थेभ्यः' इति वर्तमाने क्त. ] । एतद् वध्यशिलास्पर्शजन्यं सुखं मातृगर्भशयनजन्यं सुखमप्यतिशेत इति भाव. । व्यतिरेकालङ्कारः । आर्या वृत्तम् ॥२३॥

**एष भो इति—भो** इति गरुडस्य वध्यशिलायां पतितं नागं [illegible] बुद्ध्या सम्बोधनम् ।

गरुड स्वागमनं वर्णयति—**क्षिप्त्वेति** । **हिमांशोः**=[illegible], **बिम्बम्**=मण्डलम्, **क्षिप्त्वा**=स्वपक्षोत्थपवनोत्[illegible] [illegible], **भय-कृतवलयाम्**=भयेन-भीत्या, कृताम्-विहितम्, [illegible], यस्यास्ताम्, **शेषमूर्तिम्**=शेषनागस्य, मूर्तिम्-[illegible], **संहरन्**=संकोचं प्रापयन्, **पूष्णि**=सूर्ये, **स्यन्दनाश्वभ्रमणविघटिते**=[illegible]

---

क्योंकि यह गरुड आ ही गया है तो [illegible] । (छिप जाता है)

( [illegible] )

**नायकः—**

**संरक्षता पन्नगमद्य पुण्यं मयार्जितं यत् स्वशरीरदानात् ।**
**भवे भवे तेन ममैवमेव भूयात् परार्थं खलु देहलाभः ॥२५॥**

**गरुडः—**[ नायकं निर्वर्ण्य ]

---

रथस्य, अश्वानाम्, त्रसनेन-त्रासेन भयेन, विचलिते-स्खलिते-स्वस्थाना दपगते, सति, **अग्रजेन**=स्वज्येष्ठभ्रात्रा सूर्यसारथिना अरुणेन, **सानन्दम्**= सहर्षम्, **दृष्ट** =विलोकित, **प्रान्तावसज्जज्जलधरपटलात्यायतीभूतपक्ष** =प्रान्ते-पक्षयो प्रान्तभागे, अवसजजत्-सक्लिष्यत्, यत्, जल धराणाम्-मेघानाम्, पटलम्-समूह, तेन, अत्यायतीभूतौ अतिविस्तार प्राप्तौ पक्षौ पतत्रे यस्य तादृश [न अत्यायतौ अत्यायतौ भूताविति अत्यायतीभूतौ, च्विप्रत्यय, तस्य दीर्घश्च] **अहिग्रासगृध्नु** =अहीनाम्-सर्पाणाम्, ग्रासे-ग्रसने-भक्षणे, गृध्नु -लोलुप, **एष** =पुर स्थित, **अहम्**=गरुड, **वेलामहीध्रम्**=वेलायाम्-समुद्रतटे स्थितम्, महीध्रम् पर्वतम् [ महीध्रशब्दे मूलविभुजादित्वात् क ], **मलयम्**=मलयाचलम, **क्षणेन**=अत्यल्पेन कालेन, **प्राप्तः**=आगत, अस्मीति शेष । असम्बन्धे सम्बन्धातिशयोक्ति । गरुडस्य महाबलत्व महाकायत्व मेघमार्गसचारित्व च व्यज्यते । स्रग्धरावृत्तम् ॥२४॥

**संरक्षते**ति—**अद्य**=अस्मिन् काले, **स्वशरीरदानात्**=स्वशरीरस्य दानात्-गरुडायार्पणात्, **पन्नगम्**=सर्पशिशु शखचूडम्, **रक्षता**=गोपायता, **मया**=जीमूतवाहनेन, **यत् पुण्यम्**=सुकृतम् शुभादृष्टम्, **अर्जितम्**=उत्पादितम्-प्राप्तम्, **तेन**=पुण्येन, **भवे भवे**=जन्मनि जन्मनि, सर्वेषु जन्मस्वित्यर्थं, **मम**=जीमूतवाहनस्य, **देहलाभ** =देहप्राप्ति, **एवमेव**= अनेन प्रकारेणैव, **परार्थ** =परोपकारप्रवण, **भूयात्**=अत्र वर्तमानकालिक स्वशरीरदानजनितपुण्येन जन्मान्तरेऽपि स्वशरीरस्य परार्थत्वमेवाभिवाञ्छत जीमूतवाहनस्य साधु परोपकारैकव्रतित्वमभिव्यञ्जित कविना । उपजाति ॥२५॥

---

**नायक**—(प्रसन्न होकर)

जो कि अपना शरीर देकर एक साँप की रक्षा करने से आज मैंने पुण्योपार्जन किया है, उस (के प्रताप) से मुझे प्रत्येक जन्म में दूसरों का भला करने के लिये ही देह मिले ॥२५॥

**गरुड**—(नायक को देख कर)

---

१ 'सुरसूतोऽरुणोऽनूरु काश्यपिर्गरुडाग्रज ' इत्यमर ।

अस्मिन् वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिदण्डचण्डतरया चञ्च्वाधुना वक्षसि ।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा ॥२६॥

[अभिपत्य नायकं गृह्णाति । नेपथ्यात् पुष्पाणि पतन्ति । दुन्दुभिध्वनिश्च । ऊर्ध्वं दृष्ट्वाकर्ण्य च] अये ! पुष्पवृष्टिर्दुन्दुभिध्वनिश्च ।

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः
स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ।

---

**अस्मिन्निति—शेषान्**=स्वातिरिक्तान्, **अहीन्**, **रक्षितुम्**=गोपायितुम्, **अस्मिन्**=पुर स्थिते, **वध्यशिलातले**=वध्यशिलाया वधस्थानभूतस्य पाषाणस्य, तले–पृष्ठे, **निपतितम्**=निश्चेष्टं पतितम्, **रक्ताम्बरप्रावृतम्**=रक्तेन–रक्तवर्णेन, अम्बरेण–वस्त्रेण, प्रावृतम्–सर्वत आच्छादितम्, अतएव, **मद्भयदीर्यमाणहृदयप्रस्यन्दिना**=मद्भयेन मद्भीतिमात्रेण, दीर्यमाणात्–स्वयमेव भिद्यमानाद्, हृदयात्–वक्षःस्थलात्, प्रस्यन्दते–स्रवतीति तथाभूतेन, **असृजा**=रुधिरेण, **दिग्धमिव**=लिप्तमिव, स्थितम्, **भोगिनम्**=सर्पम्, **अधुना**=अस्मिन् काले, **अशनिदण्डचण्डतरया**=अशनिरेव दण्डोऽशनिदण्ड–वज्रदण्डः, तद्वद् चण्डतरा–अतिशयेन भीषणा, तया, **चञ्च्वा**=त्रोट्या, **वक्षसि**=हृदयस्थले, **निर्भिद्य**=विदार्य, **भोक्तुम्**=भोजनाय, **तरसा**[1]=वेगेन बलेन वा, **उद्धरामि**=उत्थाप्य गृह्णामि । चतुर्थपादे रक्तवस्त्रावृतस्य रक्तलिप्तत्वोत्प्रेक्षा । शार्दूलविक्रीडितं वृत्तम् ॥२६॥

**अभिपत्य**=आक्रम्य ।

**आमोदेति—नभस्तः**=अन्तरिक्षात्, **आमोदानन्दितालिः**=

---

बाकी साँपों को बचाने के लिये इस वध्य-शिला पर पड़े हुए और लाल कपड़े में लिपटे हुए मानो मेरे डर के मारे फटे हुए हृदय से बहते हुए रुधिर में लिथड़े हुए इस साँप की छाती को अपनी वज्रवत् कठोर चोंच से फाड़ कर अभी झपट कर खाने के लिये उठा लूँगा ॥२६॥

( झपट कर नायक को उठा लेता है। नेपथ्य में फूल बरसते हैं। दुन्दुभियाँ बजती हैं )

( ऊपर की ओर देखकर और सुनकर ) अरे ! पुष्पों की वर्षा और दुन्दुभियों की ध्वनि हो रही है ।

आकाश से भँवरों को प्रसन्न करने वाली यह पुष्पवृष्टि क्यों हो रही है ?

---

1 'तरसी बलरंहसी' इत्यमरः ।

8706

[ विहस्य ]

आ ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः
सार्धं संवर्तकाभ्रैरिदमपि रसितं जातसंहारशङ्कैः ॥२७॥

**नायकः**—[ आत्मगतम् ] **दिष्ट्या कृतार्थोऽस्मि ।**

**गरुड**—[ कलयन् ]

---

आमोदेन–स्वसौरभेण, आनन्दिता –हर्षिता , अलय –भ्रमरा , यया तादृशी, **दृश्यम्**=अनुभूयमाना, **पुष्पवृष्टिः**=पुष्पानाम् , वृष्टि –वर्षणम् , **किम्**=केन हेतुनेत्यर्थ । **निपतति**=भूमौ पतति, नभ प्रदेशात् पुष्पवृष्टे कारण न ज्ञायत इति भाव । **किंवा**=केन हेतुना वा, **स्वर्गे**=द्युलोके, **जातः, एषः**=श्रूयमाण , **दुन्दुभीनाम्**=दुन्दुभ्याख्यवाद्यविशेषाणाम्, **निनाद**=शब्द , **दिशां चक्रम्**=दिक्समूहम्, **मुखरयति**=प्रतिध्वन्युत्पादनेन शब्दयुक्त करोति, प्रतिध्वनियुक्त करोतीति भाव । स्वर्गे जातस्य महतो दुन्दुभिध्वनेरपि कारण न ज्ञायत इति भाव ।

**आः**—[ स्मृतिसूचकोऽय निपात ] **ज्ञातम्**=स्मृतम् , **मम**=गरुडस्य, **जवमरुता**=जव –वेग , तदुत्पन्नेन मरुता–वायुना, **पारिजातः**=स्वर्गवृक्ष , **कम्पितः**=चालित , **इति, मन्ये**=उत्प्रेक्षे । मद्वेगोत्थपवनविकम्पितात् नन्दनवनजातात् पारिजाताद्–इय पुष्पवृष्टिर्जातेति भाव । **इदमपि**=श्रूयमाणोऽय महाध्वनिरपि, **जातसंहारशङ्कैः**=जाता–उत्पन्ना संहारस्य–प्रलयस्य शङ्का–भ्रम , [illegible] **सार्धम्**=सह मिलित्वा, [illegible] इत्यत्रापि योज्यम् । प्रलयकाल संवर्तकाद्या मेघा गर्जन्तीति पुराणविद । तथा च मदुड्डयनोत्थझञ्झानिलजनितेन महाशब्देन प्रलयकालमुपस्थितमाशङ्कमाना इमे संवर्तकाद्या प्रलयकालिका मेघा गर्जन्ति, न पुनरय देवदुन्दुभीना निनाद इति भाव । उत्प्रेक्षालङ्कार । स्रग्धरा वृत्तम् ॥२७॥

**दिष्ट्येति**—**दिष्ट्येति** हर्षसूचकमव्ययम् । **कलयन्**=उत्तोलयन् ।

---

और स्वर्ग में यह दुन्दुभियों की ध्वनि भी दिशाओं को क्यों गुँजा रही है ।

( हँस कर )

आह ! समझ गया । मेरे विचार में मेरे वेग की पवन से वह पारिजात हिल गया है और साथ ही प्रलय की शंका करते हुए संवर्तक मेघों का यह नाद हो रहा है ॥२७॥

**नायक**—( मन में ) अहोभाग्य ! मैं कृतकृत्य हुआ ।

**गरुड़**—( बोझ अनुभव करता हुआ )

नागानां रक्षिता भाति गुरुरेष यथा मम ।
तथा सर्पाशनाशङ्का व्यक्तमद्यापनेष्यति ॥२८॥

तद् यावदहं मलयशिखरमारुह्य यथेष्टमाहारयामि ।

[नायक गृहीत्वा निष्क्रान्त ]

चतुर्थोऽङ्क. ।

---

नागानामिति—एष.=मया धृत ,नागानाम्=सर्पाणाम्, रक्षिता=रक्षक, यथा=येन प्रकारेण, गुरु =महान्–बृहत्काय॰, भारयुक्तो वा, भाति=अनुभूयते, तथा=तेन प्रकारेण, व्यक्तम्=स्फुटम्, अद्य, मम=गरुडस्य, सर्पाशनाशङ्काम्=सर्पाणाम्–इतरेषां सर्पाणाम्, अशनस्य-भक्षणस्य, शङ्काम्–सम्भावनाम्, अपनेष्यति=दूरीकरिष्यति, अयमिति शेष । महाकायेनानेनैव तृप्तौ जातायां मम सर्पान्तरबुभुक्षा नैव सम्भाव्यत इति भाव । क्वचित्तु 'सर्पाशनाकाङ्क्षाम्' इति पाठ । सर्पाशनस्य–इतरसर्पभोजनस्य, आकाङ्क्षाम्–अभिलाषम्, इति तदर्थ । अत्र कविना–श्लिष्टे शब्दै र्भाविकथान्तरमपि सूचितम् । तथाहि–नागानां रक्षिता मम गरुडस्य, गुरु –उपदेष्टास्ति । नागरक्षणाय स्वकलेवरमर्पयन्नयं गरुडमुपदेदयति यत् प्राणिनो न हन्तव्या इति, इति भाव । तथा चायम्–इत प्रभृति चिराय सर्पाशनाशङ्काम्–सर्पाणां गरुडेन यदशनम्, तस्याशङ्काम्–भयम्, अपनेष्यतीति, व्यक्तम्–निश्चितम् । एतदुपदेशेन गरुडो नेदानीं जात्वपि सर्पविनाशायोद्योग करिष्यतीति भाव । तदिदं चतुर्थं पताकास्थानकं नाम नाटकाङ्ग वेदितव्यम् । तदुक्तम्—

द्व्यर्थो वचनविन्यास सुश्लिष्ट काव्ययोजित ।
प्रधानार्थान्तरापेक्षी पताका स्थानक परम् ॥ इति ।

परम्–चतुर्थमित्यर्थ ॥२८॥

इति श्रीमदच्युतानन्दतनुजन्मश्रीपरमेश्वरानन्दशर्मकृतायां प्राज्ञविनोदिन्यां नागानन्दव्याख्यायां चतुर्थोऽङ्क समाप्त ॥४॥

---

चूंकि यह साँपों का रक्षक मुझे भारी प्रतीत होता है। इसलिये आज यह मेरी साँपों को खाने की लालसा को अवश्य ही मिटा देगा ॥२८॥

तो इतने में मलयपर्वत की चोटी पर चढ कर इस मन से खाता हूँ।

(नायक को लेकर उड जाता है)

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति प्रतिहारः ]

**प्रतिहारः—**

स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात् ।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ॥१॥

आद्येषु चतुर्ष्वङ्केषु कार्यस्य आरम्भ-यत्न-प्राप्त्याशा-नियताप्तिषु चतसृष्ववस्थासु यथाक्रमं तत्र तत्र प्रतिपादितासु सतास्विदानीं मृतानां नागानां पुनरुज्जीवनम्, गरुत्मतः सर्पवधत्यागः, जीमूतवाहनस्य पुनरुज्जीवन-चक्रवर्तित्वप्राप्ति-इत्यादिफलागमाख्यां पञ्चमीं कार्यावस्थां प्रतिपिपादयिषुः कविः पञ्चममङ्कमारभमाणः आदौ तदङ्गतया जीमूतकेत्वादिगतं करुणरसं प्रतिपादयितुं प्रतिहारं प्रवेशयति–ततः इति ।

**स्वगृहेति—स्निग्धे**=स्नेहभाजने पुत्रादौ [ विषयसप्तमीयम् ], **स्वगृहोद्यानगते**=स्वस्य-आत्मन एव, न परस्य गृहोद्यानम्-गृहारामः, निष्कुटः, तत्र गते-प्राप्ते, **अपि, पापम्**=अमङ्गलम्, **विशङ्क्यते**=सम्भाव्यते, पित्रादिभिरिति शेषः, **दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे**=दृष्टाः-अनुभूताः, बहवः-अनेके, अपायाः-विघ्नाः, यत्र तादृशं यत् प्रतिभयम्[1]-भयानकम्, कान्तारम्[2]-महारण्यम्, तत्र तिष्ठतीति तादृशे तु, **किमु**=किं वक्तव्यम् ।

'प्रेम पश्यति भयान्यपदेऽपि' इत्यभियुक्तोक्त्या असम्भावितभये गृहोद्यानेऽपि स्थितस्य प्रेयसो विषये यदि प्रेमवशाद् वृक्षशाखापतनादिरूपममङ्गलं चिन्त्यते तर्हि विघ्नबहुले भयानककान्तारे स्थितस्य तस्य विषये श्वापदजन्त्वाक्रमणादिरूपानिष्टशङ्का सुतरां समुत्पत्स्यत इत्यत्र किमु वक्तव्यमिति भावः । अर्थापत्तिरलङ्कारः ।

( प्रतिहार का प्रवेश )

**प्रतिहार—**जिससे स्नेह हो चाहे वह अपने घर के उद्यान में ही गया हो तो भी स्नेह के कारण उसके विषय में अनिष्ट की शङ्का बनी रहती है। फिर साक्षात् विपत्तियों से भयानक वन में गए हुए के विषय में तो कहना ही क्या ? ॥१॥

१ 'भयङ्करं प्रतिभयम्' इत्यमरः । २ 'कान्तारो स्त्री महारण्यम्' इति मेदिनी ।

तथाहि—जलनिधिवेलावलोकनकुतूहली निष्क्रान्तः कुमारो जीमूतवाहनश्चिरयतीति दुःखमास्ते महाराजो विश्वावसुः। समादिष्टश्चास्मि तेन । यथा—सुनन्द ! श्रुतं मया सन्निहितगरुडप्रतिभयमुद्देशं गतो जामाता जीमूतवाहनस्तत्र चिरयतीति शङ्कित इवास्म्यनेन वृत्तान्तेन । त्वरिततरं विदित्वाऽऽगच्छ—किमसौ स्वगृहं गतो वा न वेति । तद् यावत् तत्रैव गच्छामि । [परिक्रम्याग्रतो दृष्ट्वा] अये! अयमसौ जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गणे सहधर्मचारिण्या वध्वा मलयवत्या पर्युपास्यमानस्तिष्ठति । तथाहि—

धौमे मङ्गवती तरङ्गितदशे फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सवयसा देव्या महापुण्यया ।

---

विप्रवकुलजलनिधिवेलावलोकनकुतूहलिनो जीमूतवाहनस्य विपत्तेऽनिष्टशङ्का नानुचिनेति विशेषे प्रस्तुते सामान्याभिधानादप्रस्तुतप्रशंसा च । आर्या॥१॥

तथाहीति—जलनिधेर्वेलाया अवलोकने कुतूहली—कौतुकवान् उत्सुकः इति जलनिधिवेलावलोकनकुतूहली । चिरयति=प्रत्यागमने विलम्बं करोति—अद्यापि नागच्छतीति भावः । सुनन्देति—प्रतिहारस्याभिधानम् । सन्निहितगरुडप्रतिभयम्=सन्निहितेन गरुडेन—गरुडसन्निधानेनेत्यर्थः, प्रतिभयम्—भयानकम् । उद्देशम्=प्रदेशम् । तत्रैव=जीमूतवाहनस्य गृहे। उटजाङ्गणे=पर्णशालायाः, अङ्गणे—अजिरे । पर्युपास्यमानः=परिचर्यमाणः ।

धौम इति—मङ्गवती=मङ्गाः ['गलवट' इति भाषायां प्रसिद्धाः]

---

देखो—कुमार जीमूतवाहन समुद्र-तट की सैर करने के कुतूहल से बाहर गया हुआ लौटने में देर कर रहा है। इसलिये महाराज विश्वावसु चिन्ता में बैठे हैं। उन्होंने मुझे आज्ञा दी है कि "सुनन्द! मैंने सुना है कि जमाई जीमूतवाहन उस स्थान पर गया हुआ है जो कि गरुड़ के आपात के कारण भयानक है। वहाँ उसे देर हो गई है। इसलिये इस बात से मैं चिन्तित-सा हो रहा हूँ। शीघ्र ही मालूम करके आ कि वह अपने घर पहुँचा है या नहीं।" तो वहाँ ही चलता हूँ। (घूमकर सामने देखकर) अहो! यह जीमूतवाहन के पिता जीमूतकेतु कुटिया के आँगन में बैठे हैं और उनकी धर्मपत्नी तथा पुत्रवधू मलयवती उनकी सेवा कर रही हैं। क्योंकि—

धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैषान्तिकवर्तिनी मलयवत्याभाति वेला यथा ॥२॥

तदुपसर्पामि ।

संन्ति यत्र तादृशे [ द्वितीयाद्विवचनम् ], **तरङ्गितदशे**=तरङ्गिता -पवनादिना चञ्चला , दशा -प्रान्तभाग , ययोस्ते, **फेनाम्बुतुल्ये**=फेनयुक्तमम्बु, फेनाम्बु, तेन तुल्ये-फेनयुक्तजलसदृशे, **क्षौमे**=दुकूलनिर्मिते उत्तरायान्तरीयवाससी, **वहन्**=धारयन्, **जाह्नव्येव**=जह्नो सुतया गङ्गयेव, **सवयसा**=समान वय - अवस्था, यस्या सा समानवया , तया-तुल्यवयस्कया, पक्षे सवयसा-वैयोभि - पक्षिभि सह वर्तते-इति सवया , तया-नैकविधपक्षिभिः सहितया, **महा-पुण्यया**=महापुण्येति नाम्न्या, पक्षे-अतिपवित्रया, **देव्या**=महाराज्या स्वीयधर्मपत्न्या, **विराजितः**=सुशोभित , **अयम्**=परोऽटजाङ्गणे स्थित , जीमूतकेतु , **तोयनिधेः**=समुद्रस्य, **सुसदृशीम्**=अतिशयेनानुरूपाम्, **श्रियम्**=शोभाम्, **धत्ते**=धारयति। **यस्य**=जीमूतकेतो ,**अन्तिकवर्तिनी**= समीपे वर्तमाना, **एषा**=मया दृश्यमाना, **मलयवती**=एतन्नामिका तत्पुत्र-वधू पक्षे [ मलयवती मलयपर्वतवती-मलयपर्वत दक्षिणसमुद्रतीरवर्तीति प्रसिद्धि ], **वेला यथा**=वेलेव, **आभाति**=शोभते ।

राज्या महापुण्यया पुत्रवध्वा मलयवत्या च युक्तो जीमूतकेतु समुद्र इव शोभते । तथाहि—समुद्रस्य गङ्गासमागमो भवति, अत्र च राज्ञी महा पुण्या गङ्गास्थानीयास्ति । सवयस्कत्व च तयो सादृश्यमस्ति । एव समुद्र - मलयवत्या [ मलयगिरियुतया ] वेलया युक्तो भवति । अयमपि च मलय वत्या पुत्रवध्वा युक्त । इह राज्ञीगङ्गयो , मलयवतीवेलयोश्च सादृश्यात् पर-स्पर बिम्बप्रतिबिम्बभावो बोध्य । अनेकासामुपमानामङ्गाङ्गिभावसङ्कर । वृत्त *शार्दूलविक्रीडितम्* ॥२॥

फेन युक्त जल के समान विचित्र तथा लहरियेदार किनारे वाले रेशमी वस्त्र पहने हुए और गङ्गा के समान अति पुण्यात्मा, बूढ़ी देवी ( रानी ) से सुशोभित यह जीमूतकेतु समुद्र की भांति सुन्दर प्रतीत हो रहे हैं, जिनके पास बैठी हुई मलयवती, मलयपर्वत को धारण किये हुए ( समुद्र ) तट की न्याईं प्रतीत हो रही है ॥२॥

तो पास जाता हूँ ।

१ 'दशावस्था दीपवर्त्योर्वस्त्रान्ते भूम्नि योषिति' इति मेदिनी । २ 'खग-बाल्यादिनोर्वय ' इत्यमर ।

## पञ्चमोऽङ्कः ।



[ ततः प्रविशत्यासनस्थः पत्नीवधूसमेतो जीमूतकेतुः ]

**जीमूतकेतुः**—

भुक्तानि यौवनसुखानि यशो विकीर्णं
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि ।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥३॥

---

अथ 'नासूचितस्य प्रवेशः' इति नाट्यनियमानुरोधेन पूर्वसूचितान् जीमूतकेत्वादीन् प्रवेशयति—**तत** इति ।

**भुक्तानीति**—**यौवनसुखानि**=यौवने युवावस्थायाम्, सुलभानि, सुखानि–शब्दादिविषयोपभोगजन्या आनन्दाः, **भुक्तानि**=अनुभूतानि । **यशः**=कीर्तिः, **विकीर्णम्**=विस्तारितम् । **स्थिरधिया**=स्थिरया–निश्चलया, धिया–चेतसा, **राज्ये**=प्रजाशासनात्मके राजकर्मणि, **स्थितम्**=आरूढम्, मयेति शेषः । स्थिरया बुद्ध्या प्रजापालनमपि कृतमिति भावः । स्थिरधियेति विशेषणं मध्यपातितया देहलीदीपन्यायेनोभयान्वयि वेदितव्यम् । तथाचेदं पूर्ववाक्य इवोत्तरेऽप्यन्वेति । **स्थिरधिया**=स्थिरया–एकाग्रया, धिया–मनसा, **तपः अपि**=चान्द्रायणादिनतरूपा तपस्यापि, **चरितम्**=अनुष्ठितम् । **सुतः**=पुत्रः–जीमूतवाहनः, **श्लाघ्यः**=प्रशंसनीयः–स्पृहणीयचरित इति भावः, अस्तीति शेषः । **इयम्**, **स्नुषा**=पुत्रवधूर्मलयवती, **सुसदृशान्वयजा**=सुसदृशेऽन्वये जाता–अस्मदनुरूपकुलोत्पन्ना । **अद्य**=इदानीमित्यर्थः, **कृतार्थतया**=कृतः–सम्पादितः, अर्थः–प्रयोजनम्, येन तस्य भावस्तत्ता, तया–कृतकृत्यतयेत्यर्थः, **मया**=जीमूतकेतुना, **मृत्युः**=निधनम्, **चिन्त्यः**=आशासनीयः ।

कृतकर्तव्यकलापस्य मे यदीदानीं पुत्रे जीवति मृत्युर्भवेत्, तर्हि वरमिति भावः । एकस्यैव मयेति कर्तृकारकस्य भुक्तानीत्याद्यनेकक्रियान्वयाद् दीपकालङ्कृतिः । वसन्ततिलका छन्दः ॥३॥

---

( पत्नी और पुत्रवधू के साथ आसन पर बैठे हुए जीमूतकेतु का प्रवेश—दिखाई देना )

**जीमूतकेतु**—यौवन के सुखभोग के लिये, कीर्ति फैला दी, राज्य का पालन भी किया और स्थिरबुद्धि से तप भी कर लिया । पुत्र श्लाघ्य है और यह पुत्रवधू भी अच्छे घराने की ( आ गई ) है । इस प्रकार सब मनोरथ सफल हो जाने पर अब तो मुझे मृत्यु का ही ध्यान करना चाहिए ॥३॥

**प्रतिहारः**—[ सहसोपसृत्य ] जीमूतवाहनस्य ।

**जीमूतकेतुः**—[ कर्णौ पिधाय ] शान्तं शान्तं पापम् ।

**देवी**—पडिहदं खु अमंगलवअणं ।

प्रतिहतं खल्वमङ्गलवचनम् ।

**मलयवती**—इमिणा दुण्णिमित्तेण वेवदी विअ मे हिअअं ।

अनेन दुर्निमित्तेन वेपत इव मे हृदयम् ।

**जीमूतकेतुः**—[वामाक्षिस्पन्दनं सूचयित्वा]भद्र! किं जीमूतवाहनस्य।

**प्रतिहारः**—जीमूतवाहनस्य वार्तामन्वेष्टुं महाराजविश्वावसुना युष्मदन्तिकं प्रेपितोऽस्मि । तदाज्ञापयतु महाराजः किं मया स्वामिनो विज्ञापनीयमिति ।

---

'शान्तं पापमवक्तव्ये' इति वचनात् **शान्तमिति**—एतादृगमङ्गलवचनं न वक्तव्यमित्यर्थः । अयं भावः—जीमूतकेतुर्यावत् 'चिन्त्यो मया ननु कृतार्थतयाद्य मृत्यु' इति पूर्वोक्तपद्यचतुर्थपादघटकं 'मृत्यु' इति पदमुच्चारयति, तावत् तदव्यवहितोत्तरमेव सुनन्दः प्रतिहारो जीमूतवाहनविषये किमपि वक्तुमुपक्रममाण' जीमूतवाहनस्येत्युच्चारितवान्, तदा 'मृत्युर्जीमूतवाहनस्य' इत्येव वाक्ययोजनया पुत्रस्य अमङ्गलमाकस्मिकं बुध्यमानेन जीमूतकेतुनोक्तम्—**शान्तं पापमिति** । इदं 'गण्डं' नाम नाटकाङ्गमुक्तं वेदितव्यम् । तदुक्तं दर्पणे—'गण्डं प्रस्तुतसम्बन्धिभिन्नार्थसत्वरं वचः' । 'जीमूतवाहनस्य' इति वचः जीमूतवाहनस्य वार्तामन्वेष्टुं प्रेषितोस्मीति वक्ष्यमाणाभिप्रायेणोक्तमिह प्रस्तुतेन मृत्युना सह सम्बध्यते । **प्रतिहतमिति**—अस्त्विति शेषः । **अनेनेति**—**दुर्निमित्तेन**=अपशकुनेन । **वेपते**=कम्पते । **भद्रेति**—जीमूतवाहनस्य विषये किं त्वया विवक्षितमिति भावः । **जीमूतवाहनस्येति**—**वार्ताम्**=वृत्तान्तम्, **अन्वेष्टुम्**=जिज्ञासितुम् । **स्वामिनः**=जीमूतकेतोः, अग्रे, **विज्ञापनीयम्**=सूचनीयम् ।

---

**प्रतिहार**—( एका-एक आकर ) जीमूतवाहन की।

**जीमूतकेतु**—(कान बन्द करके) शान्ति हो, ऐसे अनिष्ट की शान्ति हो।

**देवी**—यह अमङ्गल दूर हो ।

**मलयवती**—इस अपशकुन से मेरा हृदय काँप सा रहा है ।

**जीमूतकेतु**—( बाँई आँख का फड़कना सूचित कर ) भद्र ! क्या जीमूतवाहन का ?

**प्रतिहार**—जीमूतवाहन का समाचार जानने के लिए महाराज विश्वावसु ने मुझे आपके पास भेजा है। इसलिये महाराज बताएँ कि मैं स्वामी को जाकर क्या कहूँ।

**जीमूतकेतुः**—किमसन्निहितस्तत्रापि मे वत्सः ।

**देवी**—[ सविषादम् ] महाराअ ! जइ तहिं पि णत्थि, ता कहिं दाणिं गओ मे पुत्तओ, जेण एव्वं चिराअदि ।

महाराज ! यदि तत्रापि नास्ति, तत् केदानीं गतो मम पुत्रकः, येनैवं चिरयति ।

**जीमूतकेतुः**—नियतमस्मत्प्राणयात्रार्थं दूरं गतो भविष्यति ।

**मलयवती**—[ सविषादमात्मगतम् ] अहं पुण मुहुत्तअं पि अय्यउत्तं अपेक्खन्ती अण्णं एव्व किं वि आसंकामि ।

अहं पुनर्मुहूर्तकमप्यार्यपुत्रमपश्यन्त्यन्यदेव किमप्याशङ्के ।

**प्रतिहारः**—आज्ञापयतु किं मया स्वामिनो विज्ञापनीयम् ।

**जीमूतकेतुः**—[ वामाक्षिस्पन्दनं सूचयन् ] जीमूतवाहनश्चिरयतीति मय्याकुले विचिन्तयति—

स्फुरसि किमदक्षिणेक्षण मुहुर्मुहु कथयितुं ममानिष्टम् ।
हतचक्षुरपहतं ते स्फुरित मम पुत्रक कुशली ॥४॥

---

**किमिति**—तत्रापि=श्वशुरालये-विश्वावसोर्गृहे । **असन्निहितः**=अविद्यमान । **नियतमिति**—**अस्मत्प्राणयात्रार्थम्**=अस्माकम्, प्राणयात्रायै-जीवननिर्वाहाय-तदुपयुक्तफलमूलाद्याहरणायेत्यर्थ । **जीमूतवाहन इति**—विचिन्तयति-सति सप्तमीयम् ।

**स्फुरसीति**—अदक्षिणेक्षण=न दक्षिणमदक्षिणम्, तच्च तदीक्षण-

---

**जीमूतकेतु**—क्या मेरा पुत्र वहाँ नहीं है ?

**देवी**—( दुःख से ) महाराज ! यदि वहाँ भी नहीं है तो मेरा पुत्र कहाँ गया होगा ? जो इतनी देर कर रहा है ?

**जीमूतकेतु**—सम्भव है, हमारे लिये आहार ढूँढने के लिये दूर चला गया हो ।

**मलयवती**—( दुःख से स्वगत ) मुझे तो आर्यपुत्र को न देख कर कुछ और ही आशङ्का हो रही है ।

**प्रतिहार**—आज्ञा दीजिए, मैं जाकर स्वामी से क्या कहूँ ?

**जीमूतकेतु**—( बाँई आँख का फड़कना सूचित कर ) जीमूतवाहन आने में देर कर रहा है । इस से मेरा हृदय व्याकुल हो रहा है ।

ऐ बाँई आँख ! मेरे अनिष्ट को सूचित करती हुई तू बार बार क्यों

[ ऊर्ध्वं पश्यन् ] अयमेव मे भुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुरन् जीमूतवाहनस्य श्रेयः करिष्यति। [सविस्मयम्]

आलोक्यमानमतिलोचनदुःखदायि
रक्तच्छटा निजमरीचिरचौ विमुञ्चत्।

मित्यदक्षिणेक्षणाम्। तत्सम्बुद्धौ हे अदक्षिणाक्षि ! हे वामनयन ! मम= जीमूतकेतोः, अनिष्टम्=भविष्यदप्रियम्, कथयितुम्=सूचयितुम् मुहुर्मुहुः = भूयोभूयः, स्फुरसि=स्पन्दसे, किम् ? हतचक्षु =हत चक्षुर्हतचक्षु, सर्वो भने रूपम्-हे दुष्टनेत्र ! ते=तव, स्फुरितम्=स्पन्दितम्, अपहतम्=विनष्टम्-निष्फलम्, अस्तु, मम, पुत्रक =सुतो जीमूतवाहन, कुशली=कुशलवान्-क्षेमवान्, भवत्विति शेष । दक्षिणेक्षणत्यनच्छेकानुप्रास । आर्या ॥४॥

अयमेवेति—भुवनैकचक्षु =भुवनानाम्-पृथिव्यादीनां त्रयाणां लोकानाम्, एकम्-अद्वितीयम् चक्षु -नेत्रस्थानीय, नहि सौरप्रकाशमन्तरेण प्रकाशसापेक्षाणि चक्षूंषि द्रष्टुं शक्नुवन्ति, सूर्यप्रकाशानुगृहीतानामेव तथा दर्शनसामर्थ्यमस्ति। अत सूर्य एव चराचरस्य चक्षुर्दर्शनसाधनम्, नान्य दिति भाव । सहस्रदीधिति =सूर्य [ सहस्रं दीधितयो रश्मयो यस्येति विग्रह ], श्रेय =कल्याणम्। सूर्यदर्शनेनापशकुनदोष प्रशाम्यतीति शास्त्रविद आहु । तदुक्तम्—

भूरिदु खप्रद नित्य दुतमादित्यदर्शनात्।
वामाङ्गस्फुरणोद्भूत दुर्निमित्त प्रशाम्यति ॥ इति।

आकाशात् पतन्त नायकस्य चूडामणिं पश्यन् किमिदमिति निश्चेतुमप्रभवन् नायक सविस्मयमाह—आलोक्यमानमिति। आलोक्यमानम्= निरीक्ष्यमाणम् सत्, अतिलोचनदुःखदायि=तीव्रदाप्तितया अतिशयेन

फड़क रही है ? ए दुष्ट आँख ! तेरा फड़कना निष्फल हो। मेरा पुत्र कुशल से है ॥४॥

( ऊपर की ओर देख कर ) संसार का एकमात्र चक्षु, हजार किरणों वाला यही सूर्य भगवान् अवश्य मेरे पुत्र का कल्याण करेगा। ( देख कर आश्चर्य से )—

जिस देखने से ही आँखों को अति दुःख होता है और जिस में से उस की अपनी ही किरणों के सदृश रक्त की धाराएं निकल रही हैं, ऐसा यह सामने आकाश से प्रलयकाल के समय विचलित हुए तारे की भांति एक ?म, क्या, गिर रहा है ?॥५॥

उत्पातकालतरलीकृततारकाभ-
मेतत् पुरः पतति किं सहसा नभस्तः ॥५॥

कथं चरणयोरेव पतितम्।

[ सर्वे निरूपयन्ति ]

जीमूतकेतुः—अये! लग्नसरसमांसकेशश्चूडामणिः। कस्य पुनरयं भविष्यति।

देवी—[ सविषादम् ] पुत्तअस्स विअ मे एदं चूडारअणं।
पुत्रकस्येव मे एतच्चूडारत्नम्।

मलयवती—मा एवं भण। मैवं भण।

प्रतिहारः—महाराज! मा अविचार्यैवं विक्लवो भूः। अत्र हि-

नेत्रयोः क्लेशजनकम्, निजमरीचिरुचः=निजस्य-आत्मनः, मरीचीनाम्-किरणानाम्, रुगिव रुक्-कान्तिर्यासां ता स्वकिरणतुल्यकान्ती, रक्तच्छटाः=रक्तस्य-रुधिरस्य, छटा-धाराः, विमुञ्चत्=विशेषेण स्रवत्, उत्पातकालतरलीकृततारकाभम्=उत्पातकाले-भविष्यदनिष्टसूचकोत्पातावसरे,तरलीकृता-स्वस्थानात् च्युता,तारा-नक्षत्रम्-उल्केति यावत्, तदाभम्-तत्सदृशम् [ यदा किंचिदनिष्टं भावि भवति, तदा तत्सूचनार्थमुल्कानिपतनाद्युत्पाताजायन्ते-इति शाकुनिकाः], एतद्=अस्माभिर्दृश्यमानम्, किम्=कतमद् वस्तु, सहसा=अकस्माद्, नभस्तः=आकाशात्, पुरः=अस्माकमग्रे, पतति। मरीचिरुच, तारकाभम्-इत्यत्रार्थमुपमाद्वयम्। वसन्ततिलका छन्दः॥५॥

अये इति—अये इति विषादसूचकमव्ययम्। लग्नसरसमांसकेशः=लग्नम्-संश्लिष्टम्, सरसम्-रुधिरेणार्द्रम्, मांसम्, केशाः-कचाश्च, यत्र तादृशः। पुत्रकस्येति—इवशब्दः चूडारत्नमित्यस्याग्रे योजनीयः चूडारत्नमिव। महाराजेति—मा भूः-माङि लुङ्, मध्यमपुरुषैकवचनम्।

ऊफ्! पैरों में ही आ गिरा!

( सब देखते हैं )

जीमूतकेतु—अरे! क्या लहू, मास और बालों से लिपटा हुआ चूडामणि है। तो यह किस का होगा?

देवी—( दुःख से ) महाराज! यह तो मेरे पुत्र का सा चूडामणि है।

मलयवती—माता! ऐसा मत कहो।

प्रतिहार—महाराज! इस तरह बिना जाने ही आप दुःखी मत होओ। यहां तो—

तार्क्ष्येण भक्ष्यमाणानां पन्नगानामनेकशः ।
उल्कारूपाः पतन्त्येते शिरोमणय ईदृशाः ॥६॥

**जीमूतकेतुः**—देवि ! सोपपत्तिकमभिहितमनेन । कदाचिदेवमपि स्यात् ।

**देवी**—सुणन्द ! अवि णाम कदाइ एत्तिआए वेलाए सोसुरउलं एव्व गदो मे पुत्तओ भविस्सदि । ता गच्छ, जाणिअ लहुं एव्व अह्माणं णिवेदेहि ।

सुनन्द ! अपि नाम कदाचिदेतावत्या वेलया श्वशुरकुलमेव गतो मे पुत्रको भविष्यति । तद् गच्छ, ज्ञात्वा लघ्वेवास्माकं निवेदय ।

**प्रतिहारः**—यदाज्ञापयति देवी । [ निष्क्रान्तः ]

**जीमूतकेतुः**—देवि ! अपि नाम नागचूडामणिरयं भवेत् ।

[ ततः प्रविशति रक्तवस्त्रसंवीतः शङ्खचूडः ]

---

वैक्लव्याभावे हेतुमुपन्यस्यति—**तार्क्ष्येणेति** । **तार्क्ष्येण**=गरुडेन, **भक्ष्यमाणानाम्**=भुज्यमानानाम्, **पन्नगानाम्**=सर्पाणाम्, **उल्कारूपाः**=आकाशात् पतिता ज्वलन्ती तारा–उल्काशब्देनोच्यते तद्रूपा –तत्सदृशा दीप्तिमत्तया उल्कावज्ज्वलन्त , **ईदृशाः**=एवंविधा रक्तमांसश्लिष्टा , **एते**, **शिरोमणयः**=सर्पाणां शिरःस्थिता मणयः , **अनेकशः**=बहुधेति भावः , **पतन्ति** । पन्नगानामपि शिरःसु मणयो भवन्ति । यदा वृक्षशाखादौ स्थित्वा गरुडः पन्नगान् भक्षयति, तदैव रुधिरं स्रवन्तो मणयो भूमौ निपतन्ति । कदाचिदयमपि सर्पशिरोमणिरेव भवेदिति न भवद्भिश्चित्तमात्मनो व्याकुलं करणीयम् इति भावः ॥६॥

**देवीति**—**सोपपत्तिकम्**=उपपत्तिसहितं युक्तियुक्तम् । **रक्तवस्त्रसंवीतः**=रक्तेन वस्त्रेण संवीतः –वेष्टितः ।

---

गरुड से खाए जाते हुए साँपों के अनेकों ही ऐसे चूडामणि उल्का की भाँति चमकते हुए गिरा करते हैं ॥६॥

**जीमूतकेतु**—देवि ! इसने युक्तियुक्त बात कही है । शायद ऐसा ही हो ।

**देवी**—सुनन्द ! शायद इस समय मेरा पुत्र ससुराल में ही आ गया हो । इसलिए जाओ, मालूम करके शीघ्र ही हमें पता दो ।

**प्रतिहार**—जैसी देवी की आज्ञा । ( चला जाता है )

**जीमूतकेतु**—देवि ! शायद यह साँप का चूडामणि हो ।

( लाल वस्त्र पहने हुए शंखचूड का प्रवेश )

शंखचूडः—[ सास्रम् ] कष्टं भोः ! कष्टम्,

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।
आदाय तं नखमुखक्षतवक्षसं च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥७॥

हा निष्कारणैकबान्धव ! हा परमकारुणिक ! हा परदुःखदुःखित ! क नु खलु गतोऽसि । प्रयच्छ मे प्रतिवचनम् । हा शंखचूडहतक ! किं त्वया कृतम् ।

नाहित्राणात् कीर्तिरेका मयाप्ता
नापि श्लाघ्या स्वामिनोऽनुष्ठिताज्ञा ।

---

गोकर्णेति—अर्णवतटे=अर्णवस्य—समुद्रस्य, तटे, अवस्थितम्, गोकर्णम्=गोकर्णक्षेत्रस्थितं महादेवम्, त्वरितम्=शीघ्रमेव, प्रणम्य=अभिवन्द्य, ताम्=प्रसिद्धाम्, भुजङ्गमवध्यभूमिम्=भुजङ्गमानाम्—सर्पाणाम्, वध्यभूमिम्–वधस्थानम्, प्राप्तः, अस्मि, अहं शङ्खचूड इति शेषः । खलु=निश्चयेन । तत्र, गरुत्मान्=गरुडः, नखमुखक्षतवक्षसम्=नखेन, मुखेन—चञ्चुपुटेण च, क्षतम्–विदारितम्, वक्ष –उर स्थलम्, यस्य तादृशम्, तम्=पूर्वोक्तम्, विद्याधरम्=जीमूतवाहनम्, आदाय=गृहीत्वा, गगनम्=आकाशम्, उत्पतितः=उड्डीन । वसन्ततिलका वृत्तम् ॥७॥

शंखचूड आत्मानमनुशोचति—नाहीति । मया=शंखचूडेन, अहित्राणात्=अहीनाम्, सर्पाणाम्, त्राणात् रक्षणात्, एका=केवला, कीर्तिः=यशोऽपि, नाप्ता=न प्राप्ता । श्लाघ्या=श्लाघनीया स्वजातिरक्षणहेतुत्वात्

---

शंखचूड—( आँसू भर कर ) शोक ! हाय महान् शोक !

ज्यों ही मैं समुद्र के किनारे ( भगवान् ) गोकर्ण महादेव को झटपट प्रणाम करके साँपों की उस वध्यभूमि को ( जहा साँप मारे जाते हैं ) पहुँचा, त्यों ही गरुड चोंच और पञ्जों से विद्याधर ( जीमूतवाहन ) की छाती फाड़ कर उसे आकाश में ले उड़ा ॥७॥

हा महासत्त्व ! हा परम दयालु ! हा अकारणबन्धु ! हा दूसरों के दु:ख से दुःखी होने वाले ! तुम कहा चले गए ? मुझे उत्तर दो । हा पापी शंखचूड ! तू ने क्या किया ?

न ही साँपों को बचाकर मैंने जरा भी यश पाया, न ही अपने स्वामी

दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक् कष्टं वञ्चितो वञ्चितोऽस्मि ॥८॥

तन्नाहमेवंविधः क्षणमपि जीवन्नपहास्यमात्मानं करोमि। यावदेनमनुगन्तुं प्रयतिष्ये। [ परिक्रामन् भूमौ दत्तदृष्टिः ]

आदावुत्पीडपृथ्वीं अविरलपतितां स्थूलबिन्दुं ततोऽग्रे
ग्रावप्रापातशीर्णांऽसृततनुकणां कीटकीर्णां स्थलीषु।

प्रशंसनीया, **स्वामिनः**=नागराजस्य वासुकेः, **आज्ञा**=अनुशासनम्, **अपि, न अनुष्ठितम्**=न पालितम्। **अन्येन**=विजातीयेन प्राणिना, **आत्मानम्**=स्वशरीरम्, **दत्त्वा**=गरुडायोपहारीकृत्य, **रक्षितः**=गोपितः, अस्मि= इति शेषः। अत एव, **शोच्यः**=शोचनीयोऽस्मि संवृत्तः। **हा** [ खेदसूचकमव्ययम् ] **धिक्** मां विफलजीवनमिति शेषः। **कष्टम्, वञ्चितो वञ्चितः**= नितरां जन्मसाफल्यरहितः [द्विरुक्तिरतिशयार्था], **अस्मि**=भवामि।

येन मया नश्वरशरीरमात्रार्पणेन स्वजातिरक्षणजन्यमपि यशो नार्जितम्, दूरेऽस्तु यशोर्जनं नाम। श्लाघनीयामविचार्य पालनीयां राजाज्ञामुल्लङ्घ्य महत्पातकमर्जितम्। किमन्यत्—परप्राणव्ययेनात्मरक्षणं कुर्वता येन स्ववीर्यगुप्तं स्वकुलमपि कलङ्कपङ्किलं व्यधायि, धिक् तं मां नागकुलाङ्गारं साधुजनशोचनीयं शङ्खचूडम् इति भावः। निर्वेदो भावः प्राधान्येन व्यज्यते। निर्वेदः स्वावमाननमिति तल्लक्षणात्। शालिनी छन्दः। तल्लक्षणं यथा—'मात्तौ गौ चेच्छालिनी भोगिलोकैः' ॥८॥

तन्नाहमिति—**एवंविधः**=राजानुशासनोल्लङ्घनादिना कलङ्कितमनाः, **अपहास्यम्**=उपहासयोग्यम्। **एनम्**=गरुडम्। **अनुगन्तुम्**=अनुसर्तुम्।

गरुडं दिदृक्षुः शङ्खचूडस्तदनुसरणप्रकारं निदर्शयति—**आदा**विति। **तार्क्ष्यम्**=गरुडम्, **दिदृक्षुः**=द्रष्टुमिच्छुः [ पश्यतेः सन्नन्तादुः, तद्योगे न लोक-'इत्यादिना षष्ठीनिषेधात्, तार्क्ष्यमिति कर्मणि द्वितीया ].

की पवित्र आज्ञा का पालन किया। दूसरे ने अपने प्राण देकर मुझे बचाया है। इसलिए मेरी दशा शोचनीय है। हाय! धिक्कार! महान् शोक! मैं ठगा गया, ठगा गया ॥८॥

तो इस तरह एक क्षण भर भी जी कर मैं लोगों में अपनी हँसी नहीं कराना चाहता। इसलिए उसी का अनुकरण करने का प्रयत्न करूँगा। ( घूम कर पृथिवी पर दृष्टि डालता हुआ )—

मैं गरुड को ढूँढने के लिये इस रुधिर की धारा का ठीक अनुसरण करता

दुर्लक्षां धातुभित्तौ घनतरशिखरे स्त्याननीलस्वरूपा-
मेतां तार्क्ष्ये दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥९॥

[ परिकामति ]

---

अहम्, आदौ=प्रथमम्, उत्पीडपृथ्वीम्=उत्पीडः– बाहुल्यम्, तेन पृथ्वीम्–अतिस्थूलाम् [ पृथुशब्दाद् 'वोतो गुणवचनाद्' इति ङीष् ], ततः= अनन्तरम्, अविरलपतिताम्=अविरलम्–अनिरन्तरम्, मध्ये किञ्चित् स्थानं परित्यज्य, पतिताम्, अत एव, स्थूलबिन्दुम्=स्थूला –पृथुला , बिन्दवो यत्र तादृशीम्, अग्रे=ततोऽप्यग्रे, ग्रावसु=प्रस्तरखण्डेषु, आपातशीर्णप्रसृततनुकणाम्=आपातेन–दूरात् पतनेन, शीर्णाः –खण्डशः कृताः, अत एव प्रसृताः–इतस्ततो विकीर्णाः, तनवः–लघवः, कणाः –बिन्दवो यस्यास्तथाभूताम्, स्थलीषु=अकृत्रिमवनभूमिषु, कीटकीर्णाम्=कीटैः – पिपीलिकादिभिः, कीर्णाम्–व्याप्ताम्, धातुभित्तौ=धातूनाम्–गैरिकादिरक्तवर्णधातूनाम्, भित्तौ–शिलाखण्डे, दुर्लक्षाम्=रक्तवर्णसाम्याद् दु खेन लक्षयितु शक्याम् ['दुर्लक्ष्याम्' इति क्वचित्पाठ ], घनतरुशिखरे स्त्याननीलस्वरूपाम्=घनानां निविडानाम्, तरूणाम्, शिखरे–अग्रभागे, स्त्यानम्–घनीभूतम्, अत एव नीलम्–श्यामतां प्राप्तम्, स्वरूपं यस्यास्ताम्, एताम्=पुरोदृश्यमानाम्, रक्तधाराम्=रक्तस्य–रुधिरस्य, धाराम्–रेखाम्, निपुणम्=उत्तरोत्तरसूक्ष्मतया सावधानम्, अनुसरन्=अनुगच्छन् सन् [ हेतौ शतृप्रत्ययः रक्तधाराया अनुसरणेनेत्यर्थः ], व्रजामि=गच्छामि, गरुडान्तिकमिति शेषः ।

एकस्या एव रक्तधाराया पर्यायेण विभिन्नेष्वधिकरणेषु, एकस्यामेव च तस्याम् उत्पीडपृथुत्वाद्यनेकधर्मस्य च वर्णनादुभयविधः पर्यायालङ्कारः । तदुक्तं कुवलयानन्दे—

---

हुआ जाता हूँ। यह धारा आरम्भ में तो ( रुधिर की ) अधिकता के कारण मोटी है। आगे जा कर थम थम कर गिरने के कारण मोटे मोटे बिन्दुओं के रूप में परिणत हो गई है। पत्थरों पर गिरने से दूर तक छींटे फैल गए हैं और पृथिवी पर उस के ऊपर कीड़े इकट्ठे हो गए हैं। (रक्तधारा) धातुशिलाओं पर तो दिखाई ही नहीं देती और वृक्षों से ढकी हुई गुफाओं पर जमी हुई प्रतीत होती है ॥९॥

( घूमता है )

---

१ क्वचित्तु 'गह्वरे स्त्यानरूपाम्' इति पाठ । २ एनाम्.

**देवी**—[ ससाध्वसम् ] **महाराअ ! एसो को वि पहुएणवदणो इदो एव्व तुरिअतुरिअं आअच्छन्तो हिअअं मे आउलीकरेदि। ता जाणीअदु दाव को एसो त्ति।**

महाराज! एष कोऽपि प्ररुग्णवदन इत एव त्वरितत्वरितमागच्छन् हृदयं मे आकुलीकरोति। तज्ज्ञायतां तावत् क एष इति।

**जीमूतकेतुः**—यथाह देवी।

**शंखचूडः**—[ साक्रन्दम् ] **हा त्रिभुवनैकचूडामणे ! क्वासि प्रस्थितो मया द्रष्टव्यः ! मुषितोऽस्मि भो ! मुषितोऽस्मि।**

**जीमूतकेतुः**—[ आकर्ण्य सहर्षम् ] **मुञ्च देवि ! विषादम्। अस्यायं चूडामणिः, नूनं मांसलोभात् केनापि पक्षिणा मस्तकादुत्खाय नीयमानोऽस्मिन् पतितः।**

---

पर्यायो यदि पर्यायैरेकस्य।नेकसश्रय। एकस्मिन् यद्यनेकं वा पर्यायः सोऽपि संमत.॥

रुधिरधाराया उत्तरोत्तरौदम्य्य प्रस्तुत तत्कारणाभिधानादप्रस्तुतप्रशंसा। इलेक्षा धातुभित्तावित्यत्र मीलितम्। तदुक्तम्—'मीलित यदि सादृश्याद् भेद एव न लक्ष्यते'। स्वभावोक्तिरपि। स्रग्धरा छन्द ॥६॥

**महाराजेति**—**प्ररुग्णवदनः**=प्ररुग्णम्—दैन्याक्रान्तम्, वदनम्-मुखं यस्य स। **साक्रन्दमिति-साक्रन्दम्**=आक्रन्दनमाक्रन्द·, तेन सहिति साक्रन्दम्-सरोदनम् रुदन्निति भाव [क्रदि-आह्वाने रोदने च], **त्रिभुवनैकचूडामणे**=त्रयाणा भुवनानाम् एक चूडामणि —शिरोमणि, त्रिभुवनश्रेष्ठ, संबोधने ह्रस्वस्य गुण। **मुञ्चेति-अयम्**=अस्मच्चरणयोः पतित· पुरोदृश्यमान·,**चूडामणिः, अस्य**=विलपत· शङ्खचूडस्य। **उत्खाय**=उत्पाट्य [ खनतेर्ल्यपि 'ये विभाषा-'इत्यात्वम् ]

---

**देवी**—( घबड़ाहट के साथ ) महाराज ! यह शोक-युक्त की तरह उदासमुख हुआ इस ओर ही जल्दी जल्दी आता हुआ मेरे चित्त को व्याकुल कर रहा है। इसलिए पता लगाइए कि यह कौन है ?

**जीमूतकेतु**—जैसी देवी की आज्ञा।

**शंखचूड**—(जोर से रोता हुआ) हा तीनों लोकों के एकमात्र चूडामणि ! तू कहा गया है। मैं तुझे कहा पाऊँ। मैं ठगा गया हूँ। ओ ! मै ठगा गया हूँ।

**जीमूतकेतु**—( सुनकर प्रसन्नता से ) देवि ! दुःखी मत होओ। यह चूडामणि इस का है। किसी पक्षी ने मास के भ्रम से इस के सिर से उठा लिया, दोस और ले जाते हुए यहां गिर पड़ा।

देवी—[ सहर्षं मलयवतीमालिङ्ग्य ] अविहवे ! धीरा होहि । ण खु दे ईदिसी आइदी वेहव्वदुक्खं अणुहोदि ।

अविधवे ! धीरा भव । न खलु ते ईदृशी आकृतिर्वैधव्य-दुःखमनुभवति ।

मलयवती—[ सहर्षम् ] अम्ब ! तुह एसा आसी । [पादयोः पतति]

अम्ब ! तवैषा आशीः ।

जीमूतकेतुः—[ शङ्खचूडमुपसृत्य ] वत्स ! किं तव चूडामणि-रपहृतः ।

शङ्खचूडः—आर्य ! न ममैकस्य । त्रिभुवनस्यापि ।

जीमूतकेतुः—कथमिव ।

शङ्खचूडः—दुःखातिशयाद् वाष्पोपरुध्यमानकण्ठो न शक्नो-मि कथयितुम् ।

---

अविधवे इति—अविधवे=जीवद्भर्तृके । ईदृशी=पतिमतोचिता सौम्या । त्वादृशी नारी वैधव्यं नार्हतीति भाव । अनुभवतीति लटा वैधव्या-भावस्य सातत्यं सूचितम् । वत्सेति—चूडामणिः=शिरःस्थो मणिरित्यर्थः । आर्येति—न केवल ममैव चूडामणिरपहृत , अपि तु सकललोकस्येत्यर्थः , वक्रो-क्तिरलङ्कार । जीमूतकेतो प्रश्न शिरःस्थमणिविषय । शङ्खचूडस्योत्तरन्तु श्रेष्ठपुरुषविषयम् । दुःखेति—वाष्पोपरुध्यमानकण्ठः=वाष्पै —अश्रुभि , उपरुध्यमान निरुध्यमान वक्तुमप्रभवन्, कण्ठ , यस्य तादृश ।

---

देवी—( प्रसन्नता से मलयवती को छाती से लगा कर ) सौभाग्यवति ! धीरज धर । तेरे सरीखी ऐसी रूपवती वैधव्य दुःख को नहीं भोगेगी ।

मलयवती—( प्रसन्नता से ) माता ! तेरा यह आशीर्वाद है । ( पाँवों पड़ती है )

जीमूतकेतु—( शङ्खचूड के पास जाकर ) बेटा ! क्या तेरा चूडामणि खो गया है ?

शङ्खचूड—आर्य ! मेरा अकेले का ही नहीं, किन्तु तीनों लोकों का ।

जीमूतकेतु—कैसे ?

शङ्खचूड—अतिदुःख के कारण आँसुओं से गला रुँध जाने से बतला नहीं सकता ।

**जीमूतकेतुः**—[ आत्मगतम् ] हन्त ! हतोऽस्मि । [ प्रकाशम् ]

आवेदय ममात्मीयं पुत्र ! दुःखं सुदुस्सहम् ।
मयि सङ्क्रान्तमेतत् ते येन सह्यं भविष्यति ॥१०॥

**शंखचूडः**—श्रूयताम् । शंखचूडो नाम नागः खल्वहमाहारार्थमवसरप्राप्तो वासुकिना वैनतेयस्य प्रेषितः । किं वा विस्तरेण । कदाचिदियं रुधिरधारापद्धतिः पांसुभिरवकीर्यमाणा दुर्लक्षतामुपयाति । तत् सङ्क्षेपतः कथयामि ।

---

जीमूतकेतुः स्वदुःखमावेदयितुं शङ्खचूडं सम्बोधयति–**आवेदयेति**। **पुत्र !**=हे वत्स ! [ वात्सल्यातिशयं प्रदर्शयितुं पुत्रेति सम्बोधनम् ], **सुदुःसहम्**=नितरां दुःखेन सोढुं शक्यम्, **आत्मीयम्**=आत्मनः [ छप्रत्ययः ], **दुःखम्**, **मम**=जीमूतकेतोः, मां प्रतीति भावः [ सम्बन्धसामान्ये षष्ठी ], **आवेदय**=कथय । **येन**=येन हेतुना, **एतत्**=ते दुःखम्, **मयि**=जीमूतकेतौ, **सङ्क्रान्तम्**=संविभक्तम् इत्यर्थः, मया संविभज्यमानं सदिति भावः, **ते**=तव, **सह्यम्**=सोढुं शक्यम्, **भविष्यति** । दुःखं स्निग्धजनेभ्यो निवेद्यमानं संविभज्यमानमिव कथञ्चित् सह्यं भवतीति हेतोस्त्वया मां प्रति स्वदुःखं कथनीयमेवेति भावः । अनुष्टुप् छन्दः ॥१०॥

**श्रूयतामिति**—**अवसरप्राप्तः**=अवसरेण–क्रमेण, प्राप्तः–उपस्थितः । **वैनतेयस्य प्रेषितः**=वैनतेयस्य समीपे प्रेषित–इत्यर्थः । **रुधिरधारापद्धतिः**–रुधिरधारायाः, पद्धतिः–सरणिः, **पांसुभिः**=धूलिभिः, **अवकीर्यमाणा**=आच्छाद्यमाना **दुर्लक्षताम्**=अदृश्यताम् । **सङ्क्षेपतः**=सङ्क्षेपेण-[त्यर्थे आद्यादित्वात् सार्वविभक्तिकस्तसिः ] ।

---

**जीमूतकेतु**—( मन में ) हाय ! मैं मारा गया । (प्रकट में)

हे पुत्र ! तुम मुझे अपना दुस्सह दुःख सुना दो ताकि यह मेरे अन्दर सङ्क्रान्त होने से तेरे लिये सहने योग्य हो जाय ॥१०॥

**शंखचूड**—सुनिए । मैं शंखचूड नाम का साँप हूँ । मेरी बारी आने पर वासुकि ने मुझे गरुड के आहार के निमित्त भेजा था । बात को अधिक लम्बा करने से क्या लाभ । कहीं यह रक्त की पङ्क्ति ऊपर धूलि पड जाने से मिट न जाए । इसलिए सङ्क्षेप से कहता हूँ—

विद्याधरेण केनापि करुणाविष्टचेतसा ।
मम संरक्षिता प्राणा दत्त्वाऽऽत्मानं गरुत्मते ॥११॥

जीमूतकेतु —[ सविषादम् ] कोऽन्य एवं परहितव्यसनी । ननु स्पष्टमेवोच्यतां पुत्रेण जीमूतवाहनेनेति । हा ! हतोऽस्मि मन्दभाग्यः ।

देवी—हा पुत्तअ ! किं तुए किदम् ।
हा पुत्रक ! किं त्वया कृतम् ।

मलयवती—हा ! कहं सच्चीभूदं एव्व मे दुच्चिन्तिदम् ।
हा ! कथं सत्यीभूतमेव मे दुश्चिन्तितम् ।

[ सर्वे मोहं गताः ]

शंखचूड—[ सास्रम् ] अये ! नूनम् एतौ पितरौ तस्य महासत्त्वस्य । अप्रियनिवेदनान्मयैतामवस्थां गमितौ । अथवा विपादते किमन्यद् विषधरस्य मुखान्निष्क्रामति । अहो ! प्राण

---

विद्याधरेणेति—करुणाविष्टचेतसा=करुणया-दयया, आविष्टम् आक्रान्तम् वशीकृतम्, चेत—हृदयम्, यस्य तादृशेन, केनापि=अज्ञातनाम्ना लोकोत्तरचरितेन, विद्याधरेण=देवयोनिविशेषेण आत्मानम्=स्वशरीरम्, गरुत्मते=गरुडाय, दत्त्वा=समर्प्य, भोक्तुमिति शेषः । मम=शङ्खचूडस्य, प्राणाः, संरक्षिता =सम्पालिता । अनुष्टुप् छन्द ॥११॥

कोऽन्य इति—मम पुत्राद् जीमूतवाहनादन्य इति भावः । परहितव्यसनी=परेषाम्, हिते-हितसाधन व्यसन सक्तिर्यस्य स —परोपकारनिरतःइत्यर्थ [व्यसनशब्दाद्—'अत इनिठनौ'], जीमूतवाहनेनेत्यस्य 'आत्मानं गरुत्मते दत्त्वा मम प्राणाः संरक्षिता' इति शेषः वाक्यः ।

शङ्खचूडाक्तौ—अथवेति । विपाद् ऋते=विषं विनेत्यर्थ [ विषादिति

---

किसी दयालु विद्याधर ने गरुड को अपने प्राण अर्पण करके मेरे प्राण बचा दिये हैं ॥११॥

जीमूतकेतु—( दुःख से ) ऐसा दूसरों का भला करने वाला और कौन हो सकता है ? स्पष्ट ही कह दो, मेरे पुत्र जीमूतवाहन ने । हाय ! मैं फूटे भाग्यों वाला मारा गया ।

देवी—हाय बेटा ! तू ने यह क्या किया ?

मलयवती—हाय ! क्या मेरा दुर्विचार सत्य ही निकला ।

( सब बेहोश हो जाते हैं )

प्रदस्य सदृशं प्रत्युपकृतं जीमूतवाहनस्य शंखचूडेन । तत् किमधुनैवात्मानं व्यापादयामि । अथवा समाश्वासयामि तावदेतौ । तात ! समाश्वसिहि समाश्वसिहि । अम्ब ! समाश्वसिहि समाश्वसिहि ।

[ उभौ समाश्वसित ]

देवी—वच्छे ! उट्ठेहि उट्ठेहि । मा रोअ । अहो वि किं जीमूदवाहणेण विणा जीवह्म । ता समस्सस दाव ।

वत्से ! उत्तिष्ठोत्तिष्ठ । मा रुदिहि । वयमपि किं जीमूतवाहनेन विना जीवामः । तत् समाश्वसिहि तावत् ।

मलयवती—[ समाश्वस्य ] हा अय्यउत्त ! कहिं तुवं मए पेक्खिदव्वो ।

हा आर्यपुत्र ! कुत्र त्वं मया द्रष्टव्यः ।

जीमूतकेतुः—हा वत्स ! गुरुचरणशुश्रूषाभिज्ञ !

---

त्र्यत यागे पञ्चमी ] सामान्येन विशेषस्य समर्थनादर्थान्तरन्यास । अहो इति—**प्राणप्रदस्य**=प्राणदातु प्राणाना रक्षकस्य **सदृशम्**=अनुरूपम्, विपरीतलक्षणया अननुरूपमित्यर्थ , **प्रत्युपकृतम्**=विपरीतलक्षणया-अपकृतमित्यर्थ । अपकारातिशयो व्यङ्ग्य । **हा वत्सेति**–गुरुचरणयो शुश्रूषाम् अभिजानाति इति **गुरुचरणशुश्रूषाभिज्ञ** =गुरुचरणपरिचर्या चतुर इति भाव ।

---

**शंखचूड**—( आँसू भर कर ) अहो ! अवश्यमेव यह उस महापुरुष के माता पिता हैं। बुरी सूचना देकर मैंने इनको इस दशा में पहुँचा दिया है। भला, साँप के मुख से विष के सिवाय और क्या निकल सकता है ? अहो ! शङ्खचूड ने प्राण दान करने वाले जीमूतवाहन के उपकार का अच्छा बदला चुकाया। तो क्या मैं अभी आत्मघात कर लूँ ? अथवा पहले इन्हें होश में ले आऊँ । तात ! चेतना करो, चेतना करो। माता ! उठो, होश में आओ।

( दोनों होश में आते हैं )

**देवी**—बेटी ! उठ, उठ । मत रो । क्या हम जीमूतवाहन के बिना जीते रह सकते हैं ? इसलिए धीरज धर ।

**मलयवती**—( होश में आकर ) हाय स्वामिन् ! मैं तुम्हें कहाँ पाऊँगी ?

**जीमूतकेतु**—हे माता पिता की सेवा करने में चतुर पुत्र !

चूडामणिं चरणयोर्मम पातयता त्वया।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः ॥१२॥

[चूडामणिं गृहीत्वा] हा वत्स! कथमेतावन्मात्रदर्शनोऽसि मे संवृत्तः। [हृदये दत्वा] हहह!

भक्त्या विदूरविनताननम्रमौले शश्वत् तव प्रणमतश्चरणौ मदीयौ।
चूडामणिर्निकषणैर्मसृणोऽप्ययं हि गाढं विदारयति मे हृदयं कथं नु ॥१३॥

---

**चूडामणिमिति—मम**=स्वपितुर्जीमूतकेतोः, **चरणयोः**=पादयोः, **चूडामणिम्**=शिखामणिं स्वशिरोभूषणम्, **पातयता**=प्रक्षिपता, **लोकान्तरगतेन**=अन्यो लोक इति लोकान्तरम्, तद्गतेन—परलोकं प्राप्तेन, **अपि त्वया**=मत्पुत्रेण जीमूतवाहनेन, **विनयक्रमः**=विनयस्य—सदाचारस्य, क्रमः—रीतिः, **न उज्झितः**=न त्यक्तः।

तात जीमूतवाहन! अन्तिकस्थः सर्वोऽपि सज्जनो गुरून् सेवत एवेति नात्र किमपि लोकोत्तरम्। त्वं तु मच्चरणयोः चूडामणिप्रक्षेपणव्याजेन लोकान्तरगतोऽपि पितृचरणौ शुश्रूषस इयदो ते पितृभक्तिः। दूरवर्तिनापि त्वया मता मार्गो न त्यक्त इति भावः। अन्तेवासिता विनयात्यागे हेतुः। परमिह तस्यामविद्यमानायामपि विनयस्यात्याग इति विशेषोक्तिः। इह प्राधान्येन करुणो रसो व्यज्यते। स्मर्यमाणा स्वविषया पुत्रनिष्ठा रतिश्च तदङ्गम्। अनुष्टुप् छन्दः ॥१२॥

**हा वत्सेति—एतावन्मात्रदर्शनः**=एतावन्मात्रं—चूडामणिसाक्षात्कारमात्रं दर्शनं यस्य तादृशः। चूडामणिं विहायात्मानं न दर्शयिष्यसि किमिति भावः।

**भक्त्येति—भक्त्या**=पूज्येष्वनुरागो भक्तिः, तया, **विदूरविनताननम्रमौलेः**=विदूरादेव, विनतम्, आननम्—मुखम्, तेन नम्र—विनत, मौलिः—शिरो यस्य तादृशस्य—भक्त्या दूरादेव शिरो विनमय्येत्यर्थः। **शश्वत्**=

---

परलोक को सिधारते समय भी मेरे पाँवों में अपना चूडामणि गिरा कर तू ने विनय-पथ का परित्याग नहीं किया ॥१२॥

(चूडामणि को उठा कर) हाय बेटा! क्या बस मेरे लिये अब केवल इतना ही तेरा दर्शन रह गया है? (छाती से लगा कर) हाय! हाय!

क्या कारण है कि यह तेरा चूडामणि, नित्य नीचे सिर झुका कर मेरे पाँवों में तेरे प्रणाम करने के कारण घिस जाने से चिकना हुआ भी अब मेरे हृदय को बुरी तरह काट रहा है? ॥१३॥

**देवी**—[ नायकस्याङ्गानि परामृशन्ती गरुडमुद्दिश्य ] **णिसंस ! कहं दाणिं तुए एदं आपूरिअमाणणवरूवजोव्वणसोहं एव्वं एदद-वत्थं पुत्तअस्स मे सरीरं किदं ।**

नृशंस ! कथमिदानीं त्वयैतदापूर्यमाणनवरूपयौवनशोभमेवै-तदवस्थं पुत्रकस्य मे शरीरं कृतम् ।

**नायक**—अम्ब ! मा मैवम् । किमनेन कृतम् । ननु पूर्वम-प्येतदीदृशमेव परमार्थतः । पश्य—

> मेदोऽस्थिमज्जामांसासृक्सङ्घातेऽस्मिन् त्वगावृते ।
> शरीरनाम्नि का शोभा सदा बीभत्सदर्शने ॥२४॥

---

**नृशंसेति—आपूर्यमाणनवयौवनशोभम्**=आपूर्यमाणा उपचीयमाना, नवाभ्यां रूपयौवनाभ्यां शोभा—कान्तिर्यस्य तादृशम् । नायकोक्तौ नञ्विति । **परमार्थतः**=वस्तुतः ।

शरीरस्य नैसर्गिकं शोभाराहित्यं समर्थयते—**मेदोऽस्थी**त्यादिना । **मेदोऽस्थिमज्जामांसासृक्सङ्घाते**=मेदः—वपा, अस्थि, मज्जा—अस्थिगतः सारः, मांसम्, असृग्—रुधिरम्, एतेषां सङ्घाते—समूहरूपे, अतएव, **सदा**=सर्वदा, **बीभत्सदर्शने**=बीभत्सम्—जुगुप्सोत्पादकम्, **दर्शनम्**=अवलोकनम्, यस्य तादृशे, **त्वगावृते**=त्वचा—शरीरबहिर्वर्तिचर्मणा, आवृते—आच्छादिते, **शरीरनाम्नि**=विशरणशीलतया शरीरम् इति नाम यस्य तस्मिन्—शरीर-शब्देन व्यपदिश्यमाने, **अस्मिन्**=मनुष्यदेहरूपे तुच्छे वस्तुनि, **का शोभा**=का कान्तिः, न कापीत्यर्थः । रसासृङ्मांसमेदोऽस्थिमज्जाशुक्रेति सप्तधातुसङ्घा

---

**देवी**—( नायक के अङ्गों को छूती हुई गरुड से ) हे क्रूर ! तूने कैसे यह नवयौवन के रूप से भरा हुआ मेरे पुत्र का शरीर इस अवस्था को पहुँचा दिया है ?

**नायक**—माता ! ऐसा मत कहो । इसने क्या किया है ? पहले भी तो वास्तव में यह ऐसे ही था । देख—

चाम से मढ़े हुए मेदा, अस्थि, मज्जा, मांस और रुधिर के समुदाय रूप सदा बीभत्स दिखाई देने वाले इस शरीर में शोभा ही क्या है ? ॥२४॥

---

१ 'मज्जावद् राजवन्मज्जा मांसधातोरस्थिसारयोः' इति भागुरेरदन्तोऽपि मज्जाशब्दः । 'मज्जा स्त्री. मज्ज पुं. मज्जन्' इति द्विरूपकोषादयन्त मानम् ।

गरुडः—भो महात्मन् ! नरकानलज्वालावलीढमात्मानं मन्यमानो दुःखं तिष्ठामि । तदुपदिश्यतां येन मुच्येऽहमस्मादेनसः ।

नायकः—अनुजानातु मां तातः । यावदस्य पापस्य प्रतिपत्तमुपदिशामि ।

जीमूतकेतुः—वत्स ! एवं क्रियताम् ।

नायकः—वैनतेय ! श्रूयताम् ।

गरुडः—[ जानुभ्यां स्थित्वा कृताञ्जलिः ] आज्ञापय ।

नायकः—

> नित्यं प्राणातिपातात् प्रतिविरम कुरु प्राक्कृते चानुतापं
> यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम् ।

---

त्मके जुगुप्सोत्पादिनि शरीरे न किमप्यस्ति शोभानिमित्तम् । केवलं त्वगावृतत्वात् स्वर्णजलावृतेन निकृष्टधातुनेवानेन शरीरेण लोका प्रतार्यन्ते । यद्यस्य त्वगावरणं नाभविष्यत्—तर्हि शवमिव जीवदपीदं काका गृध्राश्वानश्चाखादिषु, इति भाव । अनुष्टुप् छन्द ॥२४॥

**भो** इति—**नरकानलज्वालावलीढम्**=नरकमेवानल –अग्नि तस्य ज्वालाभि –शिखाभि , अवलीढम्–दग्धम्, **एनसः**=पापात् । नायकोक्तौ **यावदस्येति** । **प्रतिपत्तम्**=प्रायश्चित्तम् ।

नायको गरुडाय तत्पापप्रायश्चित्तमुपदिशति–**नित्यमिति** । **प्राणातिपातात्**=प्राणानाम्, अतिपातात्–विनाशात्–प्राणिहिंसाया इत्यर्थ , **नित्यम्**=सर्वदा, **प्रतिविरम**=निवर्तस्व । [ विद्वद्वरश्रीशिवरामस्तु–प्रतिविरम प्रतीप विरमेति व्याचख्यौ । एव व्याख्याया स स्वाभिप्रायमेव

---

**गरुड**—हे महात्मन् ! मानो नरक की अग्नि की ज्वालाओं से खाया जा रहा मैं बड़ दु ख में बैठा हूँ। इसलिये बताइये, इस पाप से कैसे मुक्ति हो ?

**नायक**—तात मुझे आज्ञा दें कि मैं इस इस पाप का प्रायश्चित्त बता दूँ।

**जीमूतकेतु**—बेटा ! बता दो ।

**नायक**—गरुड ! सुनो ।

**गरुड**—(घुटनों के बल बैठकर हाथ जोड़कर ) आज्ञा दीजिए ।

**नायक**—प्राणिहिंसा सर्वदा के लिये छोड दो और जो पहले किया है उसके लिये पश्चात्ताप करो । सब जीवों को अभयदान देकर बडे

मग्नं येनात्र नैनः फलति परिमितप्राणिहिंसात्तमेतद्
दुर्गाधापारवारेर्लवणपलमिव क्षिप्तमन्तर्ह्रदस्य ॥२५॥

विकृतवान्-अनुष्ठानत्यागयोः क्रमः परस्परं विपरीतो भवति। हिंसाया अनुष्ठाने यादृशः क्रमः तद्विपरीतस्तस्यास्त्यागे। तथाहि—हिंसाया प्रथमं हनिष्यामीति मतिः, तदनु तदौपयिकशस्त्रादिग्रहः, ततश्च हिंस्यजन्तोः प्राणापहार इति क्रमः। हिंसायास्त्यागे तु-प्रथमं हिंसाभावः, तदनु शस्त्रादित्यागः। ततोऽवध्यताबुद्धिः इति क्रमः। एतत्क्रमवैपरीत्यबोधनायैव कविना प्रतिविरमेत्यत्र प्रतिशब्दस्य प्रयोगः कृत इति], किं च, प्राक्कृते=पूर्वमनुष्ठिते दुष्कर्मणि-विषये, अनुतापम्=पश्चात्तापम् [ हन्त मया निरपराधान् प्राणिनो हत्वात्यन्तमसाध्वाचरितमित्येवं रूपम् ], कुरु=विधेहि, सर्वसत्त्वेषु=सर्वेषु प्राणिषु, अभीतिम्=अभयम्, दिशन्=वितरन्-सर्वेषां प्राणिनामभयमुत्पादयन्नित्यर्थः, यत्नात्=प्रयत्नं कृत्वेत्यर्थः, पुण्यप्रवाहम्=पुण्यानाम्-सुकृतानाम्, प्रवाहम्-निचयम्, संचिनु=सङ्गृहाण-अर्जयेत्यर्थः। येन=येन हेतुना, अत्र=सुकृते-हिंसात्यागार्जिते पुण्ये, मग्नम्=अन्तर्हितम्, परिमितप्राणिहिंसात्तम्=परिमितानाम्-क्षुद्राणाम्, प्राणिनाम्-जातानाम्, हिंसया-विनाशनेन, आत्तम्-गृहीतम् उत्पादितम्, एतत्=त्वयार्जितम्, एनः=पापम्, दुर्गाधापारवारेः=दुर्गाधम्-अगाधम्-अतिगभीरम्, अपारम्-अनन्तम्, वारि-जलम् यत्र, तादृशस्य, ह्रदस्य=सरसः, अन्तः=मध्ये, क्षिप्तम्, लवणपलमिव=पलम्-कर्षचतुष्टयम्, तन्मात्रमल्पस्वल्पपरिमाणमित्यर्थः, लवणमिव-क्षारमिव, न फलति=न फलमुत्पादयति। यथा अतिगभीरे महति जलाशये निक्षिप्तं पलमात्रं लवणं न तज्जलं क्षारं करोति, तथैव हिंसात्यागप्राक्कृतपापानुतापपूर्वकं सञ्चितेऽतिमहति सुकृतनिचयेऽन्तर्भूतं क्षुद्रप्राणिहिंसार्जितं त्वदूर्जितं न त्वां दुःखाकरिष्यतीति भावः। उपमा स्पष्टा। स्रग्धरा वृत्तम् ॥२५॥

पुण्य के प्रवाह का सञ्चय करो, जिससे प्राणिहिंसा से प्राप्त हुआ पाप इस पुण्यप्रवाह में डूब कर फल न दे सके, जैसे कि अगाध और अपार जलाशय में डाला हुआ एक पल नमक ॥२५॥

१ 'एतः प्राणाप्तमुक्तो' इति क्वचित्।

गरुडः—

अज्ञाननिद्राशयितो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेप विरतोऽद्यप्रभृत्यहम् ॥२६॥

संप्रति हि—

क्वचिद् द्वीपाकारः पुलिनविपुलैर्भोगनिवहैः
कृतावर्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।

---

नायकोपदेशं श्रुत्वा जातप्रबोधो गरुडः स्वस्य प्राणिहिंसानिवृत्तिं प्रतिजानीते—अज्ञानेति । अज्ञाननिद्राशयितः=अज्ञानम्—कृत्याकृत्ययोरविवेकः, तदेव निद्रा—इन्द्रियाणां स्वव्यापारवैमुख्यम्, तया—शयितः सुप्तः कृत्याकृत्यविवेकशून्य इति यावत्, भवता=जीमूतवाहनेन, प्रतिबोधितः=जागरितः—कृत्याकृत्यविवेकं शिक्षितः, एषः=त्वदग्रे शिष्यरूपेणोपस्थितः, अहम्=गरुडः, अद्यप्रभृति=अद्यदिनमारभ्य, सर्वप्राणिवधाद्=सर्वेषां प्राणिनाम्—जीवानाम्, वधाद्—हननाद्, विरतः=निवृत्तः, अस्मि । त्वदुपदेशेनोन्मीलितचक्षुरहं नाद्यप्रभृति कमपि प्राणिनं हनिष्यामीति प्रतिजाने इति भावः । अनुष्टुप् छन्दः ॥२६॥

एतन्नाटकस्य 'नागानन्दम्' इति नाम मूलं नागानामभार्तिं निर्दिशति—क्वचिदिति । पूर्वपठितं 'सम्प्रति हि' पदद्वयमपि पद्येन सम्बन्धनीयम् । सम्प्रति हि=इदानीं तु,नागानाम्=सर्पाणाम, समाजः=समुदायः, महोदन्वति=महान् उदन्वान् इति महोदन्वान्, तस्मिन्—महासमुद्रे [उदन्वानुदधौ चेत्यनेन निपात्यते], क्वचित्=कस्मिंश्चित् स्थाने, पुलिनविपुलैः=पुलिनवत्—सैकतवद्, विपुलैः—बृहदाकारैः, भोगनिवहैः=भोगानाम्—सर्पशरीराणाम्, निवहैः—समूहैः, द्वीपाकारः=द्वीपम्—चतुर्दिक्षु जलावृतो भूभागः, तद्वद् आकारो यस्य तादृशः—द्वीपसदृशः सन्, क्वचिदपि=कस्मिंश्चित् स्थाने च, वलयितशरीरः=वलयितम्—कुण्डलीकृतम्, शरीरम्, येन

---

गरुड—अज्ञान की निद्रा में सोते हुए मुझे आपने जगा दिया है । आज से लेकर मैं सब जीवों का वध त्यागकरता हूँ ॥२६॥

अब—

कहीं बालुकामय स्थान के समान विपुल फणों के समूह से द्वीप के तुल्य प्रतीत होता हुआ, कहीं शरीरों को बल देने के कारण भँवर की भ्रान्ति पैदा

---

१ 'उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः' इत्यमरः ।

व्रजन् कूलात् कूलं क्वचिदपि च सेतुप्रतिसमः
समाजो नागानां विहरतु महोदन्वति सुखम् ॥२७॥

**अपि च—**

स्रस्तान् पातालमग्नांस्तिमिरचयनिभान् केशहस्तान्वहन्त्यः
सिन्दूरेणेव दिग्धे प्रथमरविकरस्पर्शताम्रे कपोले ।

---

तादृशः, अतएव, **कृतावर्तभ्रान्तिः**=कृता जनिता, आवर्तस्य-अम्भसां भ्रमस्य, भ्रान्तिः-अन्यथा ज्ञानम्, येन तादृशः सन्, **अपि च**=किं च, क्वचित्, **कूलात्**=एकस्मात् तटात्, **कूलम्**=अपरं तटम्, **व्रजन्**=गच्छन्, **सेतुप्रतिमः**=सेतुः, प्रतिमा-उपमानं यस्य तादृशः-सेतुतुल्यः सन्, **सुखम्**=सानन्दम्, **विहरतु**=रमताम्। पूर्वं मत्तः पन्नगाशनाद् भीताः पन्नगाः प्राणरक्षार्थं समुद्रान्तः पातालतले विलीना अभवन्, इदानीं तु मदभयदानेन जातप्रीतयः समुद्रवक्षसि निर्भयं विचरन्तु। यदा ते समुद्रोपरि विहरेयु-स्तदानीं तेषां पुलिनसदृशैर्बृहदाकारैः शरीरैः क्वचिद् द्वीपमिव निर्मीयेत, क्वचिच्च शरीरं कुण्डलाकृत्य स्थितेषु तेषु मध्ये छिद्रसादृश्याद् आवर्तभ्रम उत्पद्येत, अपरत्र अतिदीर्घकायेषु तेष्वेकस्मात् तटादपरं तटं व्रजत्सु सेतु-सादृश्यं प्रतीयेत इति भावः। शिखरिणी छन्दः। 'रसै रुद्रैश्छिन्ना यमन-सभला गः शिखरिणी' इति तल्लक्षणम् ॥२७॥

नागानामानन्दं वर्णयित्वा तद्युवतीनामानन्दं वर्णयति—**स्रस्तान्** इति। **स्रस्तान्**=श्लथान्, **पातालमग्नान्**=पाताले लग्नाः पातालग्नाः, तान् अतिदीर्घान्-आपादलम्बिन इति भावः, **तिमिरचयनिभान्**-तिमि-राणां चयस्तिमिरचयः-अन्धकारसमूहः, तन्निभान्-तत्सदृशान्-तमःस्तोम-वदतिश्यामानित्यर्थः, **केशहस्तान्**-केशकलापान् [प्रशस्तान् केशानिति आशयः। प्रशंसाया हस्तशब्द इति तदभिप्रायः], **वहन्त्यः**=धारयन्त्यः,

---

करता हुआ और कहीं एक तट से दूसरे तट तक जाता हुआ (फैला हुआ) सेतु की न्याईं प्रतीत होता हुआ यह साँपों का समाज (समूह) सुखपूर्वक (निश्चिन्त होकर) इस बड़े समुद्र में खेल कूद ॥२७॥

और—

खुले हुए पाताल-चुम्बी (पाओं तक लटकते हुए) और गाढ़ अन्धकार के समान काले काले केश-कलापों को धारण किए हुए, सूर्य की पहली किरणों के

---

१ 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इत्यमरः ।

आयासादालसाङ्ग्योऽप्यविगणितरुजः कानने चन्दनाना-
मस्मिन् गायन्तु रागादुरगयुवतयः कीर्तिमेतां तवैव ॥२८॥

**नायकः—साधु महासत्त्व ! साधु । अनुमोदामहे । सर्वथा दृढसमाधानो भव । [ शङ्खचूडमुद्दिश्य ] स्वभवनमेव गम्यताम् ।**

[ शङ्खचूडो निःश्वस्याधोमुखस्तिष्ठति ]

**नायकः—**[ निःश्वस्य मातरं पश्यन् ]

---

**प्रथमरविकरस्पर्शताम्रैः**=प्रथमाः -प्रातः प्रथमोद्गताः, रवेः -सूर्यस्य, कराः -किरणाः, तैः, तेषां वा स्पर्शः -सम्बन्धः, तेन ताम्रैः -रक्तवर्णैः, अतएव, **सिन्दूरेण, दिग्धैरिव**=उपलिप्तैरिव, **कपोलैः**=गण्डस्थलैः, उपलक्षिताः [ 'इत्थम्भूतलक्षणे' इत्यनेनोपलक्षणे तृतीया ], **आयासाद्**=परिश्रमाद्, **आलसाङ्ग्योऽपि**=आ-समन्ताद्, अलसानि-श्रान्तिहेतुना क्रियाप्रवृत्तिशून्यानि, **अङ्गानि**=शरीरावयवाः, यासां तादृश्योऽपि, **अविगणितरुजः**=अविगणिताः -उपेक्षिताः, रुजः -पीडा याभिस्ताः, श्रान्तिजन्यक्लेशमगणयन्त्य इति भावः, **उरगयुवतयः**=उरगाणाम्-सर्पाणाम्, युवतयः -स्त्रियः, **अस्मिन्**=निकटवर्तिनि, **चन्दनानाम्**=मलयजानाम्, **कानने**=विपिने, **तवैव**=भवत एव [ स्वशरीरव्ययेन तत्सौभाग्यरक्षकत्वादिति भावः ] नान्यस्य, **एताम्**=सर्वत्र प्रथिताम्, **कीर्तिम्**=यशः, **रागात्**=अनुरागाद्, प्रेम्णः, **गायन्तु**=उच्चारयन्तु [ आशंसायां लोट् ] । दिग्धैरिवेत्युत्प्रेक्षा । स्रग्धरा वृत्तम् ॥२८॥

**साध्विति—महासत्त्व !** हे उदारबुद्धे ! गरुड, त्वया साधु प्रतिज्ञातमित्यर्थः । **अनुमोदामहे**=समर्थयामहे । **दृढसमाधानः**=दृढम्-अविचालि, समाधानम्-प्रतिज्ञा, यस्य सः ।

---

पड़ने के कारण, मानो सिन्दूर मलने से ही, लाल गालों वाली, थकावट से सुस्त अङ्गों वाली किन्तु फिर भी थकावट की पीड़ा को न मानती हुई साँपों की युवतियाँ इस चन्दन वृक्षों के वन में प्रेमपूर्वक तेरी ही कीर्ति का गान करें ॥२८॥

**नायक—**ठीक है, महात्मन् ! ठीक है। मैं प्रसन्न हूँ। सर्वथा दृढप्रतिज्ञ बने रहो। ( शङ्खचूड की ओर ) अपने घर जाइये।

( शङ्खचूड उच्छ्वास लेकर नीचा मुँह किये खड़ा रहता है )

**नायक—**( गहरी साँस लेकर माता को देखता हुआ )—

उत्प्रेक्षमाणा त्वां तार्क्ष्यचञ्चुकोटिविपाटितम् ।
त्वद्दुःखदुःखिता दुःखमास्ते सा जननी तव ॥२६॥

**देवी**—धण्णा खु सा, जा गरुडमुहपडिदं पि अक्खदसरीरं एव्व पुत्तअं पेक्खिस्सदि ।

धन्या खलु सा, या गरुडमुखपतितमप्यक्षतशरीरमेव पुत्रकं द्रक्ष्यति ।

**शंखचूडः**—अम्ब ! सत्यमेवैतद् यदि कुमारः स्वस्थो भविष्यति।

**नायकः**—[ वेदनां नाटयन् ] हहह ! परार्थसंपादनामृतरसास्वादाक्षिप्तत्वादेतावतीं वेलां न विदिता संप्रति मां बाधितुमारब्धा वेदना ।

---

शङ्खचूडस्य स्वभवनगमनहेतुमुपन्यस्यति नायक —उत्प्रेक्षमाणेति । **त्वाम्**=भवन्त शङ्खचूडम्, **तार्क्ष्यचञ्चुकोटिविपाटितम्**=तार्क्ष्यस्य-गरुडस्य, चञ्च्वा –त्रोट्या, कोट्या–अग्रभागेण, विपाटितम्–विदारितम, **उत्प्रेक्षमाणा**=सभावयन्ती, **त्वद्दुःखदुःखिता**=तव दुःखेन दुःखिता, **सा**=अनिर्वचनीयपुत्रवात्सल्यवती वृद्धा, **तव**=भवत शङ्खचूडस्य, **जननी**=माता, **दुःखम्**=दुःखपूर्वकम, **आस्ते**=तिष्ठति । अनुप्रास साधारण । अनुष्टुप् छन्द ॥२६॥

**धन्येति**—धन्या–धन लब्धो धन्या–प्रशस्तभागधेयेत्यर्थ । **अम्बेति**—यदि कुमारो जीविष्यति तदा मे जननी मां जीवन्तमवलोकयिष्यसि, अन्यथाऽहमप्यत्रैव देह त्यक्ष्यामीति भाव । **हहहेति**—परार्थस्य-परप्रयोजनस्य नागशिशुरारक्षणात्मकस्य सपादनमेव अमृतम्, तस्य रस , तस्य आस्वाद –

---

तुझे गरुड की चोंच की नोक से कटा हुआ समझती हुई वह तेरी माता तेरे दुःख से दुःखी हुई बड़े कष्ट में होगी ॥२६॥

**देवी**—वह माता धन्य है, जो अपने पुत्र को गरुड के मुख में पड़े होने पर भी सही सलामत देखेगी ।

**शंखचूड**—माता ! यह सत्य ही होगा यदि कुमार बच जाए ।

**नायक**—( पीड़ा अनुभव करता हुआ ) अहह ! परोपकाररूपी अमृत के रस चखने में प्रवृत्त होने के कारण इतनी देर तक तो मुझे पीड़ा मालूम न पड़ा, मगर अब मुझे तंग करने लगा है ।

[ मरणावस्था नाटयति ]

**जीमूतकेतुः**—[ ससम्भ्रमम् ] हा वत्स ! किमेवं करोषि।

**देवी**—हा ! किण्णु हु एदं वत्तदि। [ सोरस्ताडनम् ] परित्ताअह परित्ताअह। एसो मे पुत्तओ विवज्जदि।

हा ! किन्नु खल्वेतद् वर्तते। परित्रायध्वं परित्रायध्वम्। एष मे पुत्रको विपद्यते।

**मलयवती**—हा अय्यउत्त ! परिच्चइदुकामो विअ लक्खीअसि।

हा आर्यपुत्र ! परित्यक्तुकाम इव लक्ष्यसे।

**नायकः**—[ अञ्जलिं कर्तुमिच्छन् ] शंखचूड ! समानय मे हस्तौ।

**शंखचूडः**—[ तथा कुर्वन् सास्रम् ] कष्टम् अनाथीभूतं जगत्।

**नायकः**—[ अर्धोन्मीलिताक्ष पितरौ पश्यन् ] अयं पश्चिमः प्रणामः।

---

अनुभव, तेन आक्षिप्तत्वाद्–आकृष्टत्वाद्, एतावतीं वेलाम्–इयत्कालपर्यन्तम्, सम्प्रति–इदानीम्, साध्यस्य परप्रयोजनान्तरस्याभावादिति शेष।

देव्या उक्तौ–**एष** इति। विपद्यते=म्रियते। परित्यक्तुकामः=परित्यक्तुमिच्छु। 'तुंकाममनसोरपि' इत्यनेन कामशब्दे परे तुमुनो मलोप। अञ्जलिं बद्ध्वा पितरौ प्रणन्तुमिच्छुर्नायको नैर्बल्यातिशयाद् अञ्जलिं बन्धुमशक्नुवन्–शंखचूड प्रेरयति–**शङ्खचूडे**ति। समानय=संयोजयेत्यर्थ। **अर्धोन्मीलिताक्षः**=अर्धमुन्मीलिते अक्षिणी यस्य स अर्धोन्मीलिताक्ष। **अयमिति**— पश्चिमः=अन्तिम।

---

(मरने की दशा का नाट्य करता है)

**जीमूतकेतु**—(घबरा कर) हा बेटा ! क्यों ऐसे कर रहे हो ?

**देवी**—हाय ! यह क्या हो रहा है ? (छाती पीटकर) बचाओ, बचाओ, मेरा लाल मर रहा है।

**मलयवती**—हा स्वामिन् ! मुझे छोड़ कर चल दिये !

**नायक**—(हाथ जोड़ना चाहता है) शंखचूड ! मेरे हाथों को जोड़ दो।

**शंखचूड**—(वैसे करके रोता हुआ) हाय ! जगत् अनाथ हो गया।

**नायक**—(अधखुली आंखों से माता पिता को देखता हुआ) यह मेरा अन्तिम प्रणाम है।

गात्राण्यमूनि न वहन्ति विचेतनानि
श्रोत्र स्फुटाक्षरपदा न गिरः शृणोति ।
कष्ट निमीलितमिद सहसैव चक्षु-
र्हा तात ! यान्ति विवशस्य ममासवोऽपि ॥३०॥

अथवा किमनेन ।

[ 'सरसता पन्नगमथ पुण्यम्' इति पूर्वश्लोकमेव पठित्वा पतति ]

देवी—हा वच्छ ! हा गुरुजणवच्छल ! हा जीमूदवाहण ! कहिं सि मए पुणो पेक्खिदव्वो ।

हा वत्स ! हा गुरुजनवत्सल ! हा जीमूतवाहन ! कुत्रासि मया पुनर्द्रष्टव्यः ।

गात्राणीति—**विचेतनानि**=विगता चेतना स्पर्शाद्यनुभवसामर्थ्यं येषा तानि चेतनाशून्यानि, **अमूनि**=युष्माभिर्दृश्यमानानि, **गात्राणि**=शरीरावयवा, **न वहन्ति**=मा धारयितु न शक्नुवन्ति, अथवा न किमपि चेष्टन्ते। **श्रोत्रम्**=श्रोत्रेन्द्रियम्, **स्फुटाक्षरपदाः**=स्फुटानि-स्पष्टानि, अक्षराणि-वर्णा, पदानि-सुप्तिङन्तरूपाणि यत्र तादृशीरपि, **गिरः**=वाच, **न शृणोति**=न गृहाति । **कष्टम्** [शोकसूचकमव्ययमिदम्], **इदम्**, **चक्षु**=नेत्रमपि, **सहसैव**=अकस्मादेव, **निमीलितम्**=मुद्रितम्, **हा**=[शोकसूचकमव्ययम्] **तात**=हे पित, **विवशस्य**=इन्द्रियवैकल्यादिना शक्तिशून्यस्य, **मम**, **असवोऽपि**=प्राणा अपि, **यान्ति**=गच्छन्ति । गात्रविचेतनत्वादिभिर्हेतुभिर्मृतिरभिव्यज्यते । वसन्ततिलकं वृत्तम् ॥३०॥

देव्या उक्तौ कुत्रेत्यादि । पुनस्त्वा कुत्र द्रक्ष्यामीति भाव ।

चेतना हीन यह मेरे अङ्ग अब नहीं चलते, स्पष्ट कही हुई वाणी को भी श्रोत्र नहीं सुनते, शोक है कि आँखें हठात् मिची जा रही हैं, हा तात ! मैं बेबस हूँ और मेरे प्राण निकले जा रहे हैं ॥३०॥

अथवा इस ( प्रलाप ) से क्या लाभ ?

( "सरसता पन्नगमथ पुण्यम्" यह पहला श्लोक पढकर गिर पड़ता है )

**देवी**—हा बेटे ! हा माता पिता के प्यारे ! हा जीमूतवाहन ! मैं तुम्हें फिर कहाँ देखूँगी ?

**जीमूतकेतुः**—[ सास्रम् ] हा पुत्र जीमूतवाहन ! हा प्रणयिजनवत्सल ! हा सर्वगुणनिधे ! क्वासि । प्रयच्छ मे प्रतिवचनम् । [ हस्तावुत्क्षिप्य ] कष्टं भोः ! कष्टम् ।

निराधारं धैर्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता ।
हतं सत्यं सत्यं व्रजतु कृपणा क्वाद्य करुणा
जगत् कृत्स्नं शून्यं त्वयि तनय ! लोकान्तरगते ॥३१॥

---

पुत्रशोकसन्तप्तो जीमूतकेतुर्विलपति—**निराधारमिति**—**तनय** !=हे पुत्र ! **त्वयि**=सर्वेषां गुणानामेकाश्रये भवति, **लोकान्तरगते**=अन्यो लोको लोकान्तरम्, तत्र गते—मृते सतीत्यर्थः । **धैर्यम्**=धीरता—महाविपत्तावप्यविचलनस्वभावः, **निराधारम्**=निर्गत आधारो यस्य तत्—निराश्रयम् जातमिति शेषः । **विनयः**=नम्रता, **कमिव**=कं पुरुषम् [ इवेति वाक्यालङ्कारे ], **शरणम्**=आश्रयम्, **यातु**=गच्छतु—प्राप्नोतु । **इह**=त्रिलोक्याम्, **कः**=कतमो वीरः, **क्षान्तिम्**=क्षमाम्, **वोढुम्**=धारयितुम्, **क्षमः**=समर्थः, अस्तीति शेषः । इदानीम्, **दानपरता**=दानम्—त्यागः, परम्—इष्टम्, यस्य तस्य भावस्तत्ता—वदान्यतेत्यर्थः, **विरता**=समाप्ता । **सत्यम्**=सत्यवादिता, **हतम्**=विनष्टम्, इति, **सत्यम्**=असन्दिग्धम् । अद्य, **कृपणा**=आश्रयविनाशाद् दीनतामुपगता, **करुणा**=दयावृत्तिः, **क्व व्रजतु**=कमाश्रयं गच्छतु । **कृत्स्नम्**=सकलम्, **जगत्**=भुवनम्, **शून्यम्**=रिक्तम्—सारहीनम्, अभूदिति शेषः । हे पुत्र ! धैर्यादिगुणानां त्वमेवैक आश्रय आसीत् । त्वयि विनष्टे निराश्रया इमे नष्टा एव । गुणानां गुणिनमन्तरेण स्थातुमशक्यत्वात् । अत्र त्वय्येकस्मिन् विलुप्ते जगन्निस्सारं जातमिति भावः । करुणोऽत्र रसः प्राधान्येनाभिव्यज्यते । अत्र नायकस्य

---

**जीमूतकेतु**—(रोकर) हा पुत्र जीमूतवाहन ! हा मित्रों के प्यारे ! हा सब गुणों की खान ! तू कहाँ है ? मुझे उत्तर तो दे । ( दोनों हाथ उठाकर ) हाय रे हाय !

धैर्य आश्रय-हीन हो गया है, विनय ( नम्रता ) किस की शरण ले ? इस संसार में अब क्षमा को धारण करने योग्य कौन रह गया है ? दान करना अब समाप्त हो चुका, सचमुच ही सत्य का नाश हो गया, बेचारी दया अब कहाँ जाए ? हे पुत्र ! तेरे परलोक जाने पर तो सारा संसार ही शून्य हो गया है ॥३१॥

**मलयवती**—[ सास्रम् ] हा अय्यउत्त ! कहिं मं परिच्चइअ गदोसि । णिग्घिणे मलअवदि ! किं एदं पेक्खिदव्वं त्ति एत्तिअं वेलं जीविदासि ।

हा आर्यपुत्र ! कुत्र मां परित्यज्य गतोऽसि । निर्घृणे मलयवति ! किमेतद् द्रष्टव्यमित्येतावतीं वेलां जीवितासि ।

**शङ्खचूडः**—कुमार ! क्व प्राणेभ्योऽपि वल्लभतरं परिजनं परित्यज्य गतोऽसि । तदवश्यमन्वेति त्वां शङ्खचूडः ।

**गरुडः**—[ सोद्वेगम् ] हा ! कष्टम् । उपरतोऽयं महात्मा । किमिदानीं मया कर्तव्यम् ।

**देवी**—[ सास्रमूर्ध्वं दृष्ट्वा ] भअवन्तो लोअपाला ! अमिदेण सिंचिअ पुत्तअं मे जीवावेह ।

भगवन्तो लोकपालाः ! अमृतेन सिक्त्वा पुत्रकं मे जीवयत ।

---

लोकान्तरगमनदोषेण धैर्यादीनां निराश्रयत्वादिदोषवर्णनादुल्लासालङ्कारः । तदुक्तं कुवलयानन्दे—

'एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि ।'

तेन च धैर्यादीनां त्वमेवैको निलय इति वस्तु व्यज्यते । शिखरिणी वृत्तम् ॥२१॥

शङ्खचूडोक्तौ तदवश्यमिति । अन्वेति=अनुगच्छति—अनुम्रियत इत्यर्थः । **हा कष्टमिति—उपरतः**=मृतः । **भगवन्त इति—लोकपालाः**=प्राच्यादीनां दिग्विदिशामीशा इन्द्रादयो देवा लोकपाला उच्यन्ते । तदुक्तम्—

इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ।
कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ॥ इति ।

---

**मलयवती**—( रोती हुई ) हा स्वामिन् ! मुझे छोड़ कर कहाँ चले गए ? अरी क्रूर मलयवती ! क्या यह देखने के लिये इतनी देर जीती रही ?

**शङ्खचूड**—कुमार ! प्राणों से भी प्यारे नौकर को छोड़ कर कहाँ चले गए ? अब शङ्खचूड तो अवश्य ही तुम्हारा अनुकरण करेगा ।

**गरुड**—( दुःख से ) हा शोक ! यह महात्मा मर गया । अब मुझे क्या करना चाहिए ?

**देवी**—( रोती हुई ऊपर देख कर ) हे भगवन् ! लोकपालो ! अमृत छिड़क कर मेरे पुत्र को जीवित कर दो ।

गरुडः—[सहर्षमात्मगतम्] अमृतसंकीर्तनात् साधु स्मृतम् । मन्ये प्रमृष्टमयशः । तद् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवल जीमूतवाहनम्, एतानपि पूर्वभक्षितानस्थिशेषानाशीविषान् प्रत्युज्जीवयामि । अथवा न ददात्यसौ, ततोऽहम्—

पक्षोत्क्षिप्ताम्बुनाथ पटुजवपवनप्रेर्यमाणे समीरे
नेत्रार्चिः प्लोपमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कं ।

---

गरुडोक्तौ-तद् यावदिति । त्रिदशपतिम्=त्रिदशानाम्-देवानाम्, पतिम्-स्वामिनम्-इन्द्रमिति यावत् । तद्विसृष्टेन=तद्दत्तेन-तत्प्रेरितेनेत्यर्थः । अस्थिशेषान्=अस्थिपञ्जरमात्रावशिष्टान् । आशीविषान्=सर्पान् । आस्या दंष्ट्रायां विषं येषां तानिति विग्रहः । अथवेति—अथवेति निपातसमुदायो यद्यर्थे । यदि न ददात्यसाविति योजना ।

यदि मया प्रार्थ्यमानः सुरपतिर्नामृतवृष्टिं करिष्यति-तर्हि किमहं करिष्यामीति गरुडः प्रतिपादयति-पक्षोत्क्षिप्तेत्यादिना । पक्षोत्क्षिप्ताम्बुनाथः=पक्षाभ्याम् स्वपतत्राभ्याम्, उत्क्षिप्तः-ऊर्ध्वं क्षिप्तः-निरस्तः, अम्बुनाथः-अम्बूनां नाथः-समुद्रः वरुणो वा, येन तादृशः, समीरे=मरुति, पटुजवपवनप्रेर्यमाणे=पटुना तीव्रेण, जवेन-वेगेन, जातो यः पवनः-वायुः, तेन प्रेर्यमाणे-एकत्र क्षिप्यमाणे सति, नेत्रार्चिः प्लोपमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कः=नेत्रयोः-मम नयनयोः, अर्चिर्भिः-ज्वालाभिः, प्लोषः-दाहः तस्य मूर्च्छा-उच्छ्रायः-आधिक्यम्, तया [ अथवा तेन मूर्च्छा-मोहः, तयेति व्याख्यातव्यम्], विधुराः-विकलाः, अतएव विनिपतन्तः-स्वस्थानाच्च्यवमानाः, सानलाः-अनलनाम्ना सहिताः, द्वादश, अर्काः-आदित्याः, यस्य तादृशः, [ यन्नेत्रज्वालाभिः प्रपीडिता अग्निसहिता द्वादशादित्याः स्वस्थानाद् भूमौ निपतन्तीति भावः ], शक्राशनिधनदगदाप्रेतलोकेशदण्डान्=

---

गरुड—(प्रसन्नता से मन में) अमृत के कथन से खूब याद आया । मानो मेरा कलंक धुल गया । तो इन्द्र से प्रार्थना करके उससे बरसाई हुई अमृत-वर्षा से न केवल जीमूतवाहन का ही किन्तु इन पहले खाए हुए अस्थिमात्र शेष साँपों को भी जिला दूँ । और यदि वह न देगा तो मैं—

पक्षों से समुद्र को उछाल कर, अपनी तीव्र गति का पवन से-वायु को प्रेरित करके, अपनी आँखों की ज्वाला के ताप पुञ्ज से अग्नि सहित द्वादश

---

१ 'पक्षे पीताम्बुनाथ पटुतरपवन प्रेर्यमाणे समीरे' इति क्वचित्पाठः ।

चञ्च्वा सञ्चूर्ण्य शक्राशनिधनदगदाप्रेतलोकेशदण्डा-
नन्तः सम्भग्नपक्षः क्षणममृतमयीं वृष्टिमभ्युत्सृजामि ॥३२॥

तदयं गतोऽस्मि । [ निष्क्रान्तः ]

**जीमूतकेतुः**—शंखचूड ! किमद्यापि स्थीयते । समाहृत्य दारूणि पुत्रस्य मे विरचय चिताम् । येन वयमप्यनेन सह गच्छामः ।

**देवी**—पुत्तश्र संखचूड ! लहु सज्जेहि । दुक्खं खु अह्मेहि विणा भादुओ दे वट्टइ ।

पुत्रक शंखचूड ! लघु सज्जय । दुःखं खल्वस्माभिर्विना भ्राता ते वर्तते ।

---

[ शक्रस्याशनिः शक्राशनिः, धनदस्य गदा धनदगदा, प्रेतलोकेशस्य दण्डः प्रेतलोकेशदण्डः, शक्राशनिश्च धनदगदा च प्रेतलोकेशदण्डश्च, शक्राशनिधनदगदाप्रेतलोकेशदण्डाः, तानिति विग्रहः ] शक्रस्य-इन्द्रस्य, अशनिम्-वज्रम्, धनदस्य-कुबेरस्य, गदाम्-गदाख्यमायुधम्, प्रेतलोकानाम्-मृतानाम् ईशस्य स्वामिनो-यमस्य, दण्डम्-दण्डनामकमस्त्रम्, **चञ्च्वा**=स्वत्रोट्या, **संचूर्ण्य**=चूर्णयित्वा स्थितः, **अन्तःसंमग्नपक्षः**=अन्तः-अमृतस्यान्तः, सम्भग्नौ-सम्यङ् मग्नौ पक्षौ यस्य तादृशः, सन् अहम्, क्षणम्=क्षणमात्रम्, **अमृतमयीम्**=सुधामयीम्, **वृष्टिम्**=अभ्युत्सृजामि-पातयामि । अहं वरुणादीन् सर्वान् लोकपालान् पराभूयामृतपात्रान्तर्निमज्ज्य स्वपक्षप्रकम्पनेन मृतानामेतेषामुपरि क्षणं सुधावर्षणं करोमि इति भावः । सुधार्द्राभ्यां पक्षाभ्यां न चिरं वृष्टिर्भवितुमर्हतीत्यतः क्षणशब्दोपादानम् । स्रग्धरा छन्दः ॥३२॥

**पुत्रकेति**—सज्जय चितामिति शेषः । अस्माभिर्विना ते भ्राता भ्रातृतुल्यो जीमूतवाहनः, दुःखम्-दुःखपूर्वकम्, वर्तते तिष्ठति ।

---

आदित्यों को कातर तथा विचलित करता हुआ, चोंच से इन्द्र के वज्र, कुबेर की गदा, तथा यम के दण्डों को टुकड़े टुकड़े करता हुआ, अमृत में अपने पंख डुबो कर क्षण भर में अमृत की वर्षा कर दूँगा ॥३२॥

तो लो, मैं यह चला । (चला जाता है)

**जीमूतकेतु**—शंखचूड ! अभी तक क्यों खड़ा है ? लकड़ियाँ इकट्ठी करके मेरे पुत्र की चिता को बना, ता कि हम भी उसी के साथ चलें ।

**देवी**—बेटा शंखचूड ! जल्दी तय्यार कर । हमारे बिना तेरा भाई दुःखी हो रहा होगा ।

**शंखचूडः**—[ सास्रम् ] यदाज्ञापयन्ति गुरवः । ननु पुरस्सर एवाहमत्र युष्माकम् । [ उत्थाय चितारचनां नाटयित्वा ] तात ! सज्जीकृतेयं चिता ।

**जीमूतकेतुः**—कष्टं भोः ! कष्टम्,

उष्णीष स्फुट एव मूर्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्ष स्थलं स्पर्धते ।
चक्राङ्कौ चरणौ तथापि हि कथं हा वत्स मद्दुष्कृतै-
स्त्वं विद्याधरचक्रवर्तिपदवीमप्राप्य विश्राम्यसि ॥३३॥

---

यदेति–**पुरस्सरः**=अग्रगामी ।

मृतस्य स्वपुत्रस्य चक्रवर्तिचिह्नानि विलोक्य जीमूतकेतुर्विलपति–उष्णीष इति । तृतीयपादे तथापीति प्रयोगाद् अत्र यद्यपीत्यध्याहार्यम्, यत्तदोर्नित्यसंबन्धात् । यद्यपि, **मूर्धनि**=मस्तके, **उष्णीषः**=चक्रवर्तित्वद्योतको लक्ष्मविशेष, **स्फुट एव**=स्पष्ट एवास्ति, **भ्रुवोः**, **अन्तः**=मध्ये, **इयम्**=स्पष्टमवलोक्यमाना, **ऊर्णा**=रोमावर्तः, **विभाति**=शोभते, **चक्षुः**, **तामरसानुकारि**=तामरसम् अनुकरोति–इति तामरसानुकारि–रक्तकमलदलसदृशम्–आताम्र कर्णान्तविश्रान्त चेत्यर्थः, **वक्ष.स्थलम्**=उर स्थलम्, श्रिया विमलयोज्ज्वलम्, **हरिणा**=विष्णुना–विष्णुवक्षसेत्यर्थ , **स्पर्धते**=विष्णुवक्षः स्पर्धितुमिच्छतीति भाव । **चरणौ**=पादतले, **चक्राङ्कौ**=चक्रम्, अङ्क –चिह्नम्, यत्र तादृशौ, चक्रचिह्नितौ, स्त , **तथापि**=एव चक्रवर्तिलक्ष्मयुक्तोऽपि, **हा वत्स** ! **त्वम् मद्दुष्कृतैः**=मम पूर्वजन्मदुरदृष्टैरेव हेतुभि , **कथम्**=केन हेतुना, **चक्रवर्तिपदवीम्**=चक्रवर्तिन –सम्राज , पदवीम्–पदम्, **अप्राप्य**=अनासाद्य, **विश्राम्यसि**=उपरतो भवसि । यदि

---

**शंखचूड**—( रो कर ) जो आप ( गुरुजनों ) की आज्ञा । इस बात में मैं आपके आगे रहूँगा । ( उठ कर चिता बनाता हुआ ) तात ! चिता तय्यार कर दी है ।

**जीमूतकेतु**—शोक ! अहो शोक !

सिर पर स्पष्ट उष्णीष विद्यमान है, भौंहों के मध्य में ऊर्णा शोभायमान हो रही है, आँखें कमल के समान हैं, छाती सिंह ( अथवा विष्णु ) की छाती के सदृश है, चरणों पर चक्रों के चिह्न हैं, फिर भी हे पुत्र ! मेरे दुष्कर्मों से तू बिना विद्याधरों के चक्रवर्ती की पदवी प्राप्त किये ही कहाँ चल बसा ! ॥३३॥

---

१ 'एव' इति क्वचित् पाठ. ।

देवि ! किमिव रुद्यते । तदुत्तिष्ठ । चितामारोहामः ।

[ सव परिक्रामन्ति ]

**मलयवती**—[ बद्धाञ्जलिरूर्ध्वं पश्यन्ती ] भअवदि गौरि ! तुए आणत्तं 'विज्जाहरचक्कवट्टी दे भत्ता भविस्सिदि' त्ति । ता कह मम मन्दभाआए तुमं पि अलिअवादिणी सवुत्ता ।

भगवति गौरि ! त्वयाऽऽज्ञप्तं 'विद्याधरचक्रवर्ती ते भर्ता भविष्यति' इति । तत् कथं मम मन्दभाग्यायास्त्वमप्यलीकवादिनी सवृत्ता ।

[ तत प्रविशति ससम्भ्रमा गौरी ]

**गौरी**-महाराज जीमूतकेतो ! नखलु नखलु साहसमनुष्ठेयम् ।

**जीमूतकेतु**—कथममोघदर्शना भगवती गौरी ।

**गौरी**—[ मलयवतीमुद्दिश्य ] वत्से मलयवति ! कथमहमलीकवादिनी । दृश्यताम् । [ नायकमुपसृत्य कमण्डलुवारिणाभ्युक्षन्ती ]

---

मद्दुष्कृतैस्त्वमल्प एव वयसि लोकान्तरं गच्छसि तद् गच्छ, परं चक्रवर्तिलक्षणालङ्कृतस्य तव तत्पदाप्राप्ति केन हेतुना, इति न ज्ञायते । अथवा मम दुष्कृतानि कथं ते चक्रवर्तिपदान्तरायभूतानि जातानि । मया दुष्कृतं कृतं मयैव भाग्यम्, त्वया केन हेतुनोपभुज्यते–इति वा भाव । अत्रापि पूर्ववत् करुण । शार्दूलविक्रीडितं वृत्तम् ॥३३॥

**महाराजेति—साहसम्**=चितारोहणसाहसम् ।

---

देवि ! क्यों रोती हो ? उठो, चिता पर चढ़ें ।

(सब घूमते हैं)

**मलयवती**—(हाथ जोड़कर ऊपर देखती हुई) भगवति गौरि ! तू ने वर दिया था कि तेरा पति चक्रवर्ती होगा । तो मुझ अभागिनी के सम्बन्ध में तू भी क्यों अनृतवादिनी हो गई ?

(घबराई हुई गौरी का प्रवेश)

**गौरी**—महाराज जीमूतकेतो ! बस बस साहस मत करो ।

**जीमूतकेतु**—अहा ! क्या अमोघदर्शना गौरी आगई ?

**गौरी**—(मलयवती की ओर) बेटी मलयवति ! मैं झूठी कैसे हो सकती हूं ? देख, (नायक के पास जाकर कमण्डलु का पानी उसपर छिड़कती हुई)

निजेन जीवितेनापि जगतामुपकारिणः।
परितुष्टास्मि ते वत्स जीव जीमूतवाहन ॥३४॥
[ नायक उत्तिष्ठति ]

जीमूतकेतुः—[ सहर्षम् ] देवि! दिष्ट्या वर्धसे। यदयमक्षतशरीरो जीमूतवाहनः समुत्थितः।

देवी—भअवदीए पसादेण। भगवत्याः प्रसादेन।

[ उभौ गौर्याः पादयोः पतित्वा नायकमालिङ्गतः ]

मलयवती—[ सहर्षम् ] दिट्ठिआ पच्चुज्जीविदो अय्यउत्तो।
दिष्ट्या प्रत्युज्जीवित आर्यपुत्रः।

[ गौर्याः पादयोः पतति ]

नायकः—[ गौरीं दृष्ट्वा बद्धाञ्जलिः ] भगवति !

---

कथमिति—अमोघदर्शना=अमोघम्-अनिष्फलम्, दर्शनम्-साक्षात्कारो यस्याः सा। अमोघदर्शनेति विशेषणं जीमूतवाहनस्य पुनरुज्जीवनसंभावनायां साभिप्रायमिति परिकरः। अभ्युक्षन्ती=अभिषिञ्चन्ती।

निजेनेति—हे वत्स जीमूतवाहन! निजेन=स्वकीयेन, प्राणेभ्योऽपि प्रेयसा, जीवितेनापि=प्राणैरपि, जगताम्=लोकानाम्, निर्विशेषम्, उपकारिणः=कल्याणकर्तुः, ते=तव, [सम्बन्धसामान्ये षष्ठी] उपकारिणि त्वयीति भावः, परितुष्टा=प्रीता, अस्मि त्वम्, जीव=प्रियस्व-जीवनं प्राप्नुहीति भावः। अनुष्टुप् छन्दः ॥३४॥

देवीति—प्रत्युज्जीवितः=पुनर्जीवनं प्राप्तः।

---

वत्स! जीमूतवाहन! तुम अपने प्राणों द्वारा भी जगत् का उपकार करने वाले हो। मैं तुम पर प्रसन्न हूँ। तुम जी उठो ॥३४॥

(नायक उठ खड़ा होता है)

जीमूतकेतु—(प्रसन्नता से) देवि! सौभाग्य की बात है, तुम्हें बधाई हो, जो यह जीमूतवाहन सही-सलामत जी उठा।

देवी—(प्रसन्नता से) भगवती की कृपा से।

(दोनों गौरी के चरणों में गिरकर नायक को गले लगाते हैं)

मलयवती—(प्रसन्नता से) अहोभाग्य! स्वामी जी उठे। (गौरी के चरणों में गिरती है)

नायक—(गौरी को देखकर हाथ जोड़कर) भगवति!

अभिलषिताधिकवरदे प्रणिपतितजनार्तिहारिणि शरण्ये ।
चरणौ नमाम्यहं ते विद्याधरदेवते गौरि ॥३२॥
[ पादयो पतति ]
[ सर्वे ऊर्ध्वं पश्यन्ति ]

**जीमूतकेतुः**—कथमनभ्रा वृष्टिः । भगवति ! किमेतत् ।

**गौरी**—महाराज ! जीमूतवाहनमुज्जीवयितुमेतांश्च पूर्वभक्षितानस्थिशेषानुरगपतीन् समुपजातपश्चात्तापेन पक्षिपतिना देवलोकादियममृतवृष्टिर्निपातिता । [ अङ्गुल्यग्रेण निर्दिशन्ती ] किञ्च न पश्यति महाराजः,

---

प्रत्युज्जीवितो नायको गौरीं स्तौति—**अभिलषितेति** । **अभिलषिताधिकवरदे** !=अभिलषिताद्–ईप्सिताद्, अधिकं वरं ददातीति तादृशि ! ईप्सिताधिकवरदात्रि ! **प्रणिपतितजनार्तिहारिणि** !=प्रणिपतितानाम्–प्रणतानाम्, जनानाम्, आर्तिम्–पीडाम्, हरति–दूरीकरोतीति तथाभूते–प्रणतमनुजदुःखदारिणि ! **शरण्ये**=[शरणे साधु शरण्या, सबोधने रूपम्] शरणागतरक्षिके ! **विद्याधरदेवते**=विद्याधराणाम्, देवते–इष्टदेवि ! **गौरि** !=हे महेश्वरि ! **अहम्**=जीमूतवाहन, **ते**=तव, **चरणौ**=पादौ, **नमामि**=नमस्करोमि । गौरीविषयिणी रति प्राधान्येन व्यज्यते । अभिलषिताधिकवरदत्वादिकं प्रणामे हेतुरिति काव्यलिङ्गम् । आर्या छन्द ॥३४॥

**कथमिति**-**अनभ्रा**-अत्र मेघं विनैव जाता । **समुपजातपश्चात्तापेन**=समुपजात पश्चात्तापो यस्य तेन । **पक्षिपतिना**=पक्षिणां पतिस्तेन ।

---

इच्छा से भी अधिक वर देने वाली ! प्रणत जनों के दुःख दूर करने वाली ! दीनों की शरण ! हे विद्याधरों की देवि गौरि ! मैं तेरे चरणों में नमस्कार करता हूँ ॥३४॥

( चरणों में गिरता है )
( सब ऊपर की ओर देखते हैं )

**जीमूतकेतु**—यह बिना मेघों के वृष्टि कैसे ? भगवति ! यह क्या बात है ?

**गौरी**—महाराज ! जीमूतवाहन को और इन पहले खाए हुए अस्थिमात्रावशिष्ट साँपों को पुनः जीवित करने के लिये पश्चात्ताप करते हुए गरुड ने यह देवलोक से अमृत की वर्षा की है । ( उँगली से दिखाती हुई ) क्या महाराज नहीं देखते,

सम्प्राप्ताखण्डदेहाः स्फुटफणमणिभिर्भासुरैरुत्तमाङ्गै-
र्जिह्वाकोटिद्वयेन क्षितिममृतरसास्वादलोभाल्लिहन्तः ।
सम्प्रत्याबद्धवेगा मलयगिरिसरिद्वारिपूरा इवामी
वक्रैः प्रस्थानमार्गैर्विषधरपतयस्तोयराशिं विशन्ति ॥३६॥

[ नायकमुद्दिश्य ] वत्स जीमूतवाहन ! त्वं जीवितमात्रदानकस्यैव न योग्यः । तदयमपरस्ते प्रसादः—

---

अमृतवृष्टिफलं नागानां पुनरुज्जीवनं वर्णयति—सम्प्राप्तेति । सम्प्रति=इदानीम्—गरुडकृतामृतवृष्ट्यनन्तरमित्यर्थः, सम्प्राप्ताखण्डदेहाः= सम्प्राप्ताः—समधिगताः, अखण्डाः—अविकलाः—चतुर्णामवयवानां परिपूर्णाः, देहाः—शरीराणि यैस्तादृशाः, स्फुटफणमणिभिः=स्फुटाः देदीप्यमानाः, फणानाम्, मणयो येषां तादृशैः, अतएव, भासुरैः=दीप्तिमद्भिः, उत्तमाङ्गैः=शिरोभिः, उपलक्षिताः, अमृतरसास्वादलोभात्=अमृतस्य—गरुडेनाभिवर्षितस्य पीयूषस्य, रसः तस्य—आस्वादः—अनुभवः, तत्र लोभात्—लौल्यात्, जिह्वाकोटिद्वयेन=जिह्वायाः, कोटिद्वयम्—द्वौ अग्रभागौ, तेन, क्षितिम्=अमृतनिषिक्तां पृथ्वीम्, लिहन्तः=रसयन्तः, अमी=पुरस्तादवलोक्यमानाः, विषधरपतयः=विषधराणां पतयः—नागा इत्यर्थः, आबद्धवेगाः= आबद्धो वेगो यैस्ते—वेगयुक्ताः, मलयगिरिसरिद्वारिपूरा इव=मलयगिरेः—मलयाचलस्य, सरितः—नद्यः मलयाचलाद् उद्गच्छन्त्यो नद्य इत्यर्थः, तासाम्, वारिपूराः—जलप्रवाहा इव, वक्रैः=कुटिलैः, प्रस्थानमार्गैः= गमनमार्गैः, तोयराशिम्=समुद्रम्, विशन्ति=प्रविशन्ति ।

सम्प्रत्यमी नागा गरुडकृतामृताभिषेकेण पुनरुज्जीविता अतिवेगेन सर्पजातिसिद्धया कुटिलया गत्या समुद्रमभिविशन्ति । यथा—मलयपर्वतादुद्गच्छन्त्यो वेगवत्यो वापकाम्बुसरितः कुटिलं वहन्त्यः समुद्रं प्रविशन्ति इति भावः । उपमालङ्कारः । स्रग्धरा छन्दः ॥३६॥

वत्सेति—जीवितमात्रदानकस्य=दानमेव दानकम्—अल्पार्थे कः ।

---

सम्पूर्ण देह प्राप्त करके, फणों की चमकती हुई मणियों के कारण चमकते हुए सिरों वाले, अमृत चखने के लोभ से जिह्वा के दोनों सिरों से पृथिवी को चाटते हुए ये साँप इस समय मलयपर्वत की नदियों के वेगयुक्त जल की भाँति टेढ़ी गति से समुद्र में घुसे जा रहे हैं ॥३६॥

(नायक को उद्देश्य करके) बेटा जीमूतवाहन ! तू केवल जीवनदान के ही योग्य नहीं है । तेरे ऊपर यह और कृपा की जाती है—

हसांसाहतहेमपङ्कजरज सपर्कपङ्कोज्झितै-
रुत्पन्नैर्मम मानसादपि पर तोयैर्महापावनै ।
स्वेच्छानिर्मितरत्नकुम्भनिहितैरेपाभिपिच्य स्वय
त्वा विद्याधरचक्रवर्तिनमह प्रीत्या करोमि क्षणात् ॥३७॥

जीवितमेव जीवितमात्रम्, तस्य दानकम्-जीवितमात्रदानकम्, तस्येति विग्रह । त्वादृशाय निरपेक्षजगदुपकारिणे जीवितमात्रप्रदानमतितुच्छम्, त्व खितोऽप्यधिक मत्प्रसादमर्हसीति भाव ।

भगवती गौरी प्रसन्ना सती जीमूतवाहनाय चक्रवर्तिपद वितरति-**हंसांसे**त्यादिना । **एषा**=युष्माभि प्रत्यक्षमीक्ष्यमाणा, **अहम्**=गौरी, **स्वयम्**=आत्मनैव, **मम मानसाद्**=मम अन्त करणाद् [ मानसाख्य-सरोवराच्च ] **उत्पन्नैरपि, हंसांसाहतहेमपङ्कजरज.संपर्कपङ्कोज्झितैः**=हंसानाम्-मरालानाम्, अंसै -स्कन्धै , कण्ठकण्डूयनायवरारे, आहतानाम्-सघृष्टानाम्, हेमपङ्कजानाम्-स्वर्णकमलानाम्, कम्पनेन पतितानि यानि रजांसि-परागा , तेषा सपर्केण-सम्बन्धेन जात पङ्क -कर्दम , तेन, उज्झितै -रहितै , **परम्**=निरतिशयम्, **महापावनैः**=अतिपवित्रै , **स्वेच्छानिर्मितरत्नकुम्भनिहितैः**=स्वेच्छया स्वसकल्पमात्रेण निर्मिता , ये रत्नकुम्भा -रत्नमया कलशा , तत्र निहितै -स्थापितै , **तोयैः**=जलै , **त्वाम्**=जीमूतवाहनम्, **प्रीत्या**=प्रेम्णा, **अभिपिच्य**=स्नपयित्वा, **क्षणात्**=मुहूर्तमात्रेण, **विद्याधरचक्रवर्तिनम्**=विद्याधराणाम्, चक्रवर्तिनम्-सम्राजम्, **करोमि**=विदधे ।

वत्स जीमूतवाहन ! अह त्वा निर्मलेन मम मानसोत्पन्नेन मत्सकल्पमात्रसृष्टरत्नकलशनिहितेन जलन विद्याधराणा चक्रवर्तिपदे प्रीत्याभिपिञ्चामीति भाव । मानसोत्पन्नमप्यपङ्कजपरागपङ्किलमिति विरोध । मानसपदस्यान्त करणपरकव्याख्यानेन तत्परिहार । प्राकृतिकमानसजलादितस्य जलस्य व्यतिरेकश्च । शार्दूलविक्रीडित छन्द ॥३७॥

मेरे मानस ( मानसरोवर—मन ) से उत्पन्न होने पर भी हंसों के पङ्खों से कम्पित कमलों के पराग के सपर्क से होने वाले कीच से रहित और अति पवित्र जलों से, जो अपनी इच्छा के अनुसार बनाए हुए रत्न कुम्भों में रक्खे हुए हैं, मैं स्वय प्रेमपूर्वक तेरा अभिषेक करके क्षण भर में तुझे विद्याधरों का चक्रवर्ती बनाए देती हूँ ॥३७॥

अपिच—

अग्रेसरीभवतु काञ्चनचक्रमेतदेष द्विपश्च धवलो दशनैश्चतुर्भिः ।
श्यामो हरिर्मलयवत्यपि चेत्यमूनि रत्नानि ते समवलोकय चक्रवर्तिन् ॥३८॥

एते च मत्प्रचोदिताश्चटुलचूडामणिमरीचिरचितेन्द्रचाप-

**अग्रेसरीति**—**चक्रवर्तिन्**=हे विद्याधरसम्राट् ! **एतत्**=मया प्रसादरूपेण वितीर्यमाणम्, **काञ्चनचक्रम्**=स्वर्णमयं चक्रम्, **अग्रेसरीभवतु**=सर्वरत्नेषु प्रधानं भवतु—प्रतिपक्षक्षपणक्षमत्वादिदमेव काञ्चनं चक्रं सर्वतः प्रथमं गृहाणेति भावः । किं च, **चतुर्भिः**, **दशनैः**=दन्तैः, उपलक्षितः, **एषः**=पुर उपस्थितः, **धवलः**=श्वेतवर्णः, **द्विपः**=हस्ती, **श्यामः**=श्यामवर्णः, **हरिः**=अश्वः, **अपि च मलयवती**=त्वद्भार्या च, **इति**, **अमूनि**, **ते**=तव चक्रवर्तिनः, **रत्नानि**, **समवलोकय**=पश्य—गृहाणेति भावः ।

ललितविस्तरे बौद्धानां ग्रन्थे— चक्रवर्तिनः सप्त रत्नानि गणितानि । तद् यथा—चक्ररत्नम्, हस्तिरत्नम्, अश्वरत्नम्, स्त्रीरत्नम्, मणिरत्नम्, गृहपतिरत्नम्, परिणायकरत्नमेव सप्तमम् इति । इत्थं भगवत्या गौर्या जीमूतवाहनश्चक्रवर्तिनिर्देश्यमानो याथार्थ्यतश्चक्रवर्तित्वं नीतः, इति भावः । वसन्ततिलकं वृत्तम् ॥३८॥

चक्रवर्तिनं सर्वे राजानः प्रणमन्तीति तदपि प्रतिपादयितुमुक्तम्—**एते चेति** । मत्प्रचोदिताः=मया तदन्तःकरणमनुप्रविश्य प्रचोदिताः—प्रेरिताः, **चटुलचूडामणिमरीचिरचितेन्द्रचापपङ्क्तयः**=चटुलाः—प्रणामसमये चपलाः, चूडामणयः—मुकुटधृतानि रत्नानि, तेषाम्, मरीचिभिः—किरणैः, रचिताः—उद्भाविताः, इन्द्रचापानाम्—इन्द्रधनुषाम्, पङ्क्तयः, यैस्तादृशाः, राज्ञां मुकुटेषु विविधवर्णा मणयः खचिता भवन्ति, तेभ्यो निःसरन्तो विविधवर्णाः किरणा मिलित्वा इन्द्रचापश्रियमुत्पादयन्तीति भावः ।

---

और भी—

हे चक्रवर्तिन्! यह तेरे रत्न हैं, इन्हें देख । सब से पहले तो यह ले सोने का चक्र, और फिर यह चार दाँतों वाला श्वेत हाथी, काला घोड़ा और यह मलयवती भी ॥३८॥

और यह मतङ्गदेवादि विद्याधरों के राजा, मेरे से प्रेरित किए हुए भक्ति से अपना सिर झुका कर (शरीर का ऊपर का भाग झुका कर),

**पङ्क्तयो भक्त्याऽवनतपूर्वकायाः प्रणमन्ति त्वां मतङ्गदेवादयो विद्याधरपतयः। वत्स ! किं ते भूयः प्रियमुपहरामि।**

**नायकः**—[ जानुभ्यां स्थित्वा ] **प्रियकारिणि ! किमतः परमपि प्रियमस्ति।**

> **त्रातोऽयं शङ्खचूडः पतगपतिमुखाद् वैनतेयो विनीत-**
> **स्तेन प्राग्भक्षिता ये विषधरपतयो जीवितास्तेऽपि सर्वे।**
> **मत्प्राणाप्त्या विमुक्ता न गुरुभिरसवश्चक्रवर्तित्वमाप्तं**
> **त्वत्तस्त्वं देवि दृष्टा प्रियमपरमतः प्रार्थ्यते किं मया यत् ॥३१॥**

---

**अवनतपूर्वकायाः**=अवनत-प्रणामसमये नीचैर्नत, पूर्वकाय-कायस्य पूर्वभाग [ एकदेशिसमास ] येषां तादृशा, **मतङ्गदेवादयः**=मतङ्गदेव आदि प्रधानम्, यत्र ते। मतङ्ग एवारीज्जीमूतकेतो प्रधानप्रतिपक्षी, तदधीनताप्रतिपादनेन प्रधानमल्लनिबर्हणन्यायात्, तदन्येऽपि जीमूतवाहनेऽधीनता गता इति प्रतिपादित भवति। **उपहरामि**=उपायनीकरोमि। **प्रियकारिणि**=सबोधनम्।

**त्रात** इति—**अयम्**=पुर स्थित, **शङ्खचूडः**=शङ्खचूडाख्य सर्पशिशु, **पतगपतिमु ।** =पतगानाम्-पक्षिणाम्, पत्यु-स्वामिनो गरुडस्य, मुखाद्, **त्रातः**=रक्षित, **वैनतेय**=विनताया अपत्य गरुड, **विनीतः**=प्राणिहिंसात्यागं शिक्षित, **ये**, **विषधरपतय**=सर्पा, **तेन**=वैनतेयेन, **प्राक्**=पूर्वम्, **भक्षिताः**=खादिता, **ते सर्वेऽपि**=निर्विशेषम्, **जीविता**=प्रत्युज्जीविता, **मत्प्राणाप्त्या**=मम, प्राणानाम्, आप्त्या-लाभेन-ममापि प्रत्युज्जीवनेन, **गुरुभिः**=मद्वृद्धपितृभ्याम्, **असवः**=स्वप्राणा, **न विमुक्ता**=न त्यक्ता, **त्वत्त**=त्वद्वरप्रसादाद्, **चक्रवर्तित्वम्**=विद्याधरसम्राट्पदम्,

---

हुए मुकुटों की मणियों की किरणों से इन्द्रधनुष जैसी शोभा दर्शाते हुए, तुझे प्रणाम करते हैं। और कौन सी प्यारी वस्तु तेरी भेंट करूं ?

**नायक**—( घुटनों के बल होकर ) हे प्रियकारिणि ! इससे परे और क्या प्रिय हो सकता है ?

इस शङ्खचूड को गरुड के मुख से बचाया। गरुड को शिक्षा दी। पहले खाए हुए सारे साँप भी जीवित कर दिये। मुझे फिर जीवन मिल जाने से ( मेरे ) माता पिता ने भी प्राण त्याग नहीं किये। आप से चक्रवर्ती का पद मिला। आप का दर्शन हुआ। इससे अधिक और क्या प्रिय हो सकता है, जिसके लिये प्रार्थना करूं ? ॥३१॥

तथाप्येतावदस्तु—

[ भरतवाक्यम् ]

वृष्टिं हृष्टशिखण्डिताण्डवभृतः काले किरन्त्वम्बुदाः
कुर्वन्तः प्रतिरूढसन्ततहरित्सस्योत्तरीयां क्षितिम्।
चिन्वानाः सुकृतानि वीतविपदो निर्मत्सरैर्मानसै-
र्मोदन्तां घनबद्धबान्धवसुहृद्गोष्ठीप्रमोदाः प्रजाः ॥४०॥

आप्तम्=अधिगतम् । किमन्यत्, हे देवि ! हे दिव्यगुणयुक्ते सर्वान्तर्यामिणि ! त्वम्=त्वमेव–अस्माकं सकलमनोरथानामेकाश्रयभूता, दृष्टा साक्षात्कृता, अतः=सर्वचराचरकारणभूतायास्तव साक्षात्कारात्, परम्=अन्यत्, किम्, प्रियम्=अभिलषणीयं वस्तु भवेद्, यद्, मया, प्रार्थ्यते=याच्यते । चराचरकारणभूतायां त्वयि साक्षात्कृतायां न किंचिदपि प्राप्तव्यमवशिष्यते, यत्प्राप्तये प्रयतेत, सर्वस्यापि त्वदन्तर्गतत्वात् त्वदधीनत्वाद् इति भावः । स्रग्धरा वृत्तम् ॥३९॥

इत्थमुपक्रान्तं नागानन्दं नाटकमुपसंजिहीर्षुः कविर्भरतवाक्येनोपसंहरति–वृष्टिमिति । हृष्टशिखण्डिताण्डवभृतः=हृष्टानाम्–घनागमे संजातदर्पाणाम्, शिखण्डिनाम्–मयूराणाम्, ताण्डवम्–नृत्यम्, बिभ्रति–धारयन्ति–तथाभूताः [ वर्षाकाले वर्षोन्मुखान् जलदान् दृष्ट्वा हृष्टा मयूरा नृत्यन्तीति निसर्गः ], अम्बुदाः=मेघाः, क्षितिम्=पृथ्वीम्, प्रतिरूढसंततहरित्सस्योत्तरीयाम्=प्रतिरूढानि–जलसेकेनाङ्कुरितानि, सन्ततम्–निरन्तरम्, हरिन्ति–श्यामायमानानि, सस्यानि–धान्यान्येव, उत्तरीयम्–प्रच्छदपटः, यस्यास्तादृशीम्, कुर्वन्तः=कर्तुमिति भावः [ लक्षणहेत्वोः क्रियाया इति हेतौ शतृप्रत्ययः ] काले=यथासमयम्, वृष्टिम्=जलवर्षणम्, किरन्तु=विक्षिपन्तु–कुर्वन्त्वित्यर्थः । प्रजाः=प्रकृतयः–जनाः, सुकृतानि=पुण्यानि, चिन्वानाः=अर्जयन्त्यः, अतएव, वीतविपदः=वीताः–नष्टाः, विपदः–अतिवृष्ट्यनावृष्ट्यादिरूपा विपत्तयः, यासां तादृश्यः, घनबद्धबान्धवसुहृद्

तो भी इतना हो जाय—

( भरतवाक्य )

सुप्रसन्न मयूरों के नाच से युक्त मेघ निरन्तर पृथिवी पर अङ्कुरित हरे भरे धान्यरूपी चादर उढाने के लिये समय पर वृष्टि करें। प्रजा पुण्य कर्म करती हुई, विपत्ति से रहित हो, और ईर्ष्यारहितहृदय से बन्धुओं और मित्रों की गोष्ठियों में खूब प्रमोदयुक्त होकर मौज करें॥४०॥

अपिच—
शिवमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी भवतु लोकः ॥४१॥
[ निष्क्रान्ताः सर्वे ]

पञ्चमोऽङ्कः ।

नागानन्दं समाप्तम् ।

---

**गोष्ठीप्रमोदाः**=घनम्—सान्द्रं यथा स्यात् तथा, बद्ध —रचित , बान्धवानाम्—बन्धूनाम्, सुहृदाम्—मित्राणां च, गोष्ठीषु—परस्परप्रेमालापेषु, प्रमोद –आनन्द , याभिस्तथाभूताः सस्य· [ चिन्वाना इत्यादीनि त्रीण्यपि विधेयविशेषणानि ], **मोदन्ताम्**=हृष्यन्तु। यथासमयजलवर्षणेन क्षितिर्हरितभरिता भवतु, प्रजाश्च सुकृतानि कुर्वत्यः, अतिवर्षणादीतिरहिताः बान्धवसुहृद्गोष्ठीसुखमनुभवन्त्य सत्यः सुख तिष्ठन्त्विति भाव । शार्दूलविक्रीडित वृत्तम् ॥४०॥

**शिवमिति-सर्वजगताम्**=सर्वेषाम्, जगताम्—लोकानाम्, **शिवम्**=कल्याणम्, **अस्तु**=भवतु, **भूतगणाः**=प्राणिन , **परहितनिरताः**=परेषाम्, हिते—कल्याणे, निरता -संलग्ना, **भवन्तु**। **दोषाः**=कामक्रोधादय , **नाशम्**=विलयम्, **प्रयान्तु**=प्राप्नुवन्तु। **सर्वत्र**=सर्वेषु स्थानेषु विद्यमान , **लोकः**=जनः, **सुखी**=प्रचुरसुखवान्, **भवतु**। आर्या छन्द ॥४१॥

देवज्ञागमपारीणाद् द्रोणाश्रमनिवासिन. ।
क्षीराब्धेरिव शुभ्रांशुरच्युतादजनिष्ट य ॥
पार्वती यस्य जननी पार्वतीव पतिप्रिया ।
परमेश्वरस्य तस्येय कृतिन कृतिरेधताम् ॥
प्रीयतामनया देवी वाचा कविभिरञ्चिता ।
मोदमाप्नोतु तीर्थाना सार्थश्छात्रपुरस्कृतः ॥
नेत्रानन्दाङ्कचन्द्रेऽब्दे शुचिमासि सिते दले ।
अष्टम्यां भूभिजे वारेऽपूरि प्राज्ञविनोदिनी ॥

इति श्रीमदच्युतानन्दतनुजन्मश्रीपरमेश्वरानन्दशर्मकृतायां प्राज्ञविनोदिन्यां नागानन्दव्याख्यायां पञ्चमोऽङ्क समाप्तः ।

---

और भी—
सारे संसार का भला हो और सब प्राणी दूसरों का उपकार करने में लगे रहें, सब दोष नाश हो जाए और सब जगह लोक सुखी रहे ॥४१॥

(सब चले जाते हैं)

# नागानन्दस्थश्लोकानुक्रमणिका ।

# नाटकादिलक्षणानि ।

नाटकम्—नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
विलासद्धर्यादिगुणवद् युक्तं नानाविभूतिभिः ।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥

नाटक का वृत्त (कथानक) इतिहासप्रसिद्ध होना चाहिए। उसमें मुख, प्रतिमुख, गर्भ, विमर्श और निर्वहण ये पाँच सन्धियां होनी चाहिएं, और विलास, समृद्धि आदि गुण तथा अनेक प्रकार के ऐश्वर्यों का वर्णन होना चाहिए। कम से कम पाँच और अधिक से अधिक दश अङ्क होने चाहिएँ।

नान्दी—आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥

देवता, ब्राह्मण तथा राजादिकों की आशीर्वाद युक्त स्तुति इस में की जाती है, इसलिए इसे 'नान्दी' कहते हैं। इस से लोग आनन्दित होते हैं, इसलिए भी यह 'नान्दी' है।

सूत्रधारः—आसूत्रयन् गुणान् नेतुः कवेरपि च वस्तुनः ।
रङ्गप्रसाधनप्रौढः सूत्रधार इहोदितः ॥

नायक के, कवि के, और नाटक प्रतिपाद्य वस्तु के गुणों को (नान्दी द्वारा) संक्षेप से सूचित करने वाला 'सूत्रधार' कहाता है। यह रङ्गमञ्च को अलङ्कृत करने में सुचतुर होता है।

पूर्वरङ्गः—यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥

नाटकीय वस्तु के पूर्व, रङ्ग (नाट्यशाला) के विघ्नों की शान्ति के लिए नर्तक लोग जो कुछ मङ्गल करते हैं, उसे 'पूर्वरङ्ग' कहते हैं।

नेपथ्यम्—कुशीलवकुटुम्बस्य स्थलं नेपथ्यमुच्यते ।

नर्तक समुदाय के रहने की जगह को (जहां रह कर कि वे वेष बदलते हैं) 'नेपथ्य' कहते हैं।

प्रस्तावना—सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् ।

स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत् तदामुखम्॥
प्रस्तावना वा—

जहां सूत्रधार नटी, मारिष वा विदूषक से अपने कार्य के विषय में विचित्र उक्ति से इस प्रकार बातचीत करे, जिस से प्रस्तुत कथा का सूचन हो जाय, उसे 'आमुख' कहते हैं। उसी का नाम 'प्रस्तावना' भी है।

नायकः—त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता॥

दानी, कृतज्ञ, कुलीन, लक्ष्मीसम्पन्न, रूप यौवन और उत्साह से युक्त, चतुर लोगों के अनुराग का पात्र, तेजस्वी और सुशील पुरुष 'नायक' होता है।

नायिका—'त्यागी कृती कुलीनः' इत्यादि में कहे हुए नायक के त्यागादि सामान्य लक्षणों से युक्त 'नायिका' कहलाती है।

धीरोदात्तः—अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥

स्वयं अपनी प्रशंसा न करने वाला, क्षमायुक्त, गम्भीर हर्ष शोकादि में भी विचलित न होने वाला और स्थिर प्रकृति वाला, जिसका अभिमान विनय के कारण छिपा हुआ रहता है, और जो अपनी बात का पक्का और भाव का पूरा होता है, वह 'धीरोदात्त' कहलाता है।

विदूषकः—विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः।

जो अपने विकृत अङ्गों से, ऊटपटाग वचनों से, और अनोखे वेश से (सामाजिकों को) हंसाता है, उसे 'विदूषक' कहते हैं।

विटः—संभोगहीनसंपद् विटस्तु धूर्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठयाम्॥

अपनी संपत्ति को भोगविलास में खो चुकने वाला, धूर्त, नृत्य गीत आदि कलाओं के एक देश को जानने वाला, वेश्याओं की आव-भगत में पटु, बोलचाल में प्रवीण, मधुरभाषी, गोष्ठी आदि में सम्मानित 'विट' कहलाता है।

चेटः—'भृत्येदासेयदासेरदासगोप्यकचेटकाः।'

दास को 'चेट' कहते हैं।

**चेटी**—चेटी—दासी को कहते हैं ।

**काञ्चुकीयः—ये नित्यं सत्यसंपन्नाः**
**ज्ञानविज्ञानकुशलाः ।**

जो सदा सत्य बोलने वाले, निश्छल से रहित, और ज्ञान तथा विज्ञान में कुशल होते हैं

**वैतालिकः—'वैतालिका बोधकराः' (**

जो प्रात काल सुमधुर गान आदि द्वारा करते हैं, उन्हें 'वैतालिक' कहते हैं ।

**स्वगतम्—अश्राव्यं खलु यद्वस्तु तदिह**

जो बात सुनाने योग्य नहीं होती, उसे नाटक में जिस उक्ति के साथ 'स्वगत' या पात्र अपने ही मन में कहता है, दूसरे पात्र कहता है, जिस से सामाजिक सुन लें ।

**प्रकाशम्—सर्वश्राव्यं प्रकाश स्यात् ।**

जो बात सब को सुनाने योग्य होती

**अङ्कः—अङ्क इति रूढिशब्दो भावैश्च**
**नानाविधानयुक्तो यस्मात्**
**यत्रार्थस्य समाप्तिर्यस्य च**
**किञ्चिदवलग्नबिन्दुः सोऽङ्क**

जो भाव और रसों से अर्थों को अङ्कुरित प्रकार के विधान होते हैं, जहाँ एक अर्थ की समाप्ति होता है और कुछ बिन्दु का सम्बन्ध होता है, उसे 'अङ्क' शब्द रूढिशब्द है ।

---

१ अल्पमात्रं समुद्दिष्ट बहुधा
फलस्य प्रथमो हेतुर्बीजं

जिसका पहल अत्यल्प कथन किया जाय, किन्तु रूप से हो, उसे 'बीज' कहते हैं । यह फलसिद्धि का

२ अवान्तरार्थविच्छेदे

विष्कम्भकः—वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात् स तु संकीर्णो नीचमध्यमकल्पितः ॥

बीती हुई और होने वाली कथाओं का सूचक, कथा का संक्षेप करने वाला अङ्क 'विष्कम्भक' कहाता है। यह अङ्क के आदि में प्रयुक्त होता है। जब एक ही मध्यम पात्र अथवा दो मध्यम पात्र प्रयोग करते हैं, तब इसे 'शुद्ध-विष्कम्भक' कहते हैं। और यदि नीच तथा मध्यम दोनों तरह के पात्रों द्वारा प्रयोग किया जाय तो इसे 'मिश्र-विष्कम्भक' कहते हैं।

प्रवेशकः—प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेय; शेषं विष्कम्भके यथा ॥

प्रवेशक भी विष्कम्भक के सदृश होता है, किन्तु इसका प्रयोग नीच पात्रों के द्वारा कराया जाता है और इसमें उक्तियां उदात्त [ उत्कृष्ट ] नहीं होतीं और यह दूसरे अङ्क के आगे किया जाता है, पहले अङ्क में नहीं।

रसः—व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः ।

विभाव अनुभाव और व्यभिचारिभाव से अभिव्यक्त स्थायीभाव को रस कहते हैं।

शृङ्गारः—रम्यदेशकलाकालवेषभोगादिसेवनैः ।
प्रमोदात् या रतिः सैव यूनोरन्योन्यरक्तयोः ॥
प्रकृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ।

परस्पर अनुरक्त नायक और नायिका का प्रेम जब रमणीय देश, कला, काल, वेष, भोग आदि के सेवन करने से उत्कर्ष को प्राप्त होता है, और जिसके कारण मनोहर हाव भाव आदि होने लगते हैं, तब उसे 'शृङ्गार' कहते हैं।

शान्तः—निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

जहां प्रधान रूप से निर्वेद स्थायीभाव की अभिव्यक्ति हो, उसे शान्त रस कहते हैं।

---

अवान्तर कथा के विच्छिन्न होने पर भी प्रधान कथा के अविच्छेद का जो निमित्त है, उसे 'बिन्दु' कहते हैं।

चेटी—चेटी—दासी को कहते हैं।

काञ्चुकीय —ये नित्य सत्यसपन्ना कामदोषविवर्जिता।
ज्ञानविज्ञानकुशला काञ्चुकीयास्तु ते स्मृता॥

जो सदा सत्य बोलने वाले, निश्छल व्यवहार करने वाले, काम दोषों से रहित, और ज्ञान तथा विज्ञान में कुशल होते हैं, वे 'काञ्चुकीय' कहाते हैं।

वैतालिक—'वैतालिका बोधकरा' ( अमर )।

जो प्रातःकाल सुमधुर गान आदि द्वारा राजा आदि को जगाया करते हैं उन्हें 'वैतालिक' कहते हैं।

स्वगतम्—अश्राव्य खलु यद्वस्तु तदिह स्वगतं मतम्।

जो बात सुनाने योग्य नहीं होती, उसे 'स्वगत' कहते हैं। जिस में नाटक में जिस उक्ति के साथ 'स्वगत' या 'आत्मगत' लगा होता है, उसे वह पात्र अपने ही मन में कहता है, दूसरे पात्र से नहीं। किन्तु इस तरह कहता है, जिस से सामाजिक सुन लें।

प्रकाशम्—सर्वश्राव्य प्रकाशं स्यात्।

जो बात सब के सुनने योग्य होती है उसे 'प्रकाश' कहते हैं।

अङ्क —अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्।
नानाविधानयुक्तो यस्मात् तस्माद् भवेदङ्कः॥
यत्रार्थस्य समाप्तिर्यस्य च बीजस्य भवति संहारः।
किञ्चिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः॥

जो भाव और रसों से अर्थों को प्ररूढ़ित करता है, जिस में नाना प्रकार के विधान होते हैं, जहाँ एक अर्थ की समाप्ति तथा बीज का उपसंहार होता है और कुछ बिन्दु का सम्बन्ध होता है, उसे 'अङ्क' कहते हैं। यह 'अङ्क' शब्द रूढ़शब्द है।

---

१ अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥

जिसका पहले अल्पतर कथन किया जाय, किन्तु विस्तार उसका अनेक रूप से हो, उसे 'बीज' कहते हैं। यह फलसिद्धि का प्रथम हेतु होता है।

२ अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्।

विष्कम्भकः—वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः।
शुद्धः स्यात् स तु संकीर्णो नीचमध्यमकल्पितः॥

बाती हुई और होने वाली कथाओं का सूचक, कथा का संक्षेप करने वाला अङ्ग 'विष्कम्भक' कहाता है। यह अङ्क के आदि में प्रयुक्त होता है। जब एक ही मध्यम पात्र अथवा दो मध्यम पात्र प्रयोग करते हैं, तब इसे 'शुद्ध विष्कम्भक' कहते हैं। और यदि नीच तथा मध्यम दोनों तरह के पात्रों द्वारा प्रयोग किया जाय तो इसे 'मिश्र-विष्कम्भक' कहते हैं।

प्रवेशकः—प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥

प्रवेशक भी विष्कम्भक के सदृश होता है, किन्तु इसका प्रयोग नीच पात्रों के द्वारा कराया जाता है और इसमें उक्तिया उदात्त [ उत्कृष्ट ] नहीं होतीं और यह दूसरे अङ्क के आगे किया जाता है, पहले अङ्क में नहीं।

रसः—व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः।

विभाव अनुभाव और व्यभिचारिभाव से अभिव्यक्त स्थायीभाव को रस कहते हैं।

शृङ्गारः—रम्यदेशकलाकालवेषभोगादिसेवनैः।
प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः॥
प्रहृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः।

परस्पर अनुरक्त नायक और नायिका का प्रेम जब रमणीय देश, कला, काल, वेष, भोग आदि के सेवन करने से उत्कर्ष को प्राप्त होता है, और जिसके कारण मनोहर हाव भाव आदि होने लगते हैं, तब उसे 'शृङ्गार' कहते हैं।

शान्तः—निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः।

जहां प्रधान रूप से निर्वेद स्थायीभाव की अभिव्यक्ति हो, उसे शान्त रस कहते हैं।

---

अवान्तर कथा के विच्छिन्न होने पर भी प्रधान कथा के अविच्छेद का जो निमित्त है, उसे 'बिन्दु' कहते हैं।

करुणः—इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम्॥

इष्टवस्तु के नाश और अनिष्ट की प्राप्ति से करुणरस आविर्भूत होता है। इस रस में शोक स्थायी भाव होता है और जिसके विषय में शोक हो, पुत्र-पति आदि आलम्बन विभाव।

वीररसः—उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः।

जिसका स्थायीभाव उत्साह हो और जो पात्र में आश्रित हो, उसको वीररस कहते हैं।

दयावीररसः—यदि उत्साह दयाविषयक हो तब दयावीर रस होता है। नागानन्द में प्रधान रूप से यही रस है। 'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति' इत्यादि पद्य इसके उदाहरण हैं।